।। श्री ।।

# ।। कलशचन्द्रिकायां शिवभागः ।।

## ।। प्रथमः पटलः ।।

अस्तु तत्वं समस्तस्य कारणं स्वस्तये परम् ।
संप्राप्य सकलत्वं यत् अनुगृह्णाति साधकान् ।। १ ।।

पार्वतीवदनाम्भोजमकरन्दरसोत्सुकाः ।
शम्भोरपाङ्गसारंङ्गाः सन्तु नः सर्वसम्पदे ।। २ ।।

नमोऽस्तु गुरुपादेभ्यो यदनुस्मरणाज्जगत् ।
अन्यानपेक्षं लभते पुरुषार्थमभीप्सितम् ।। ३ ।।

नमामि गणनाथं तं यदनुध्यानतो विना ।
समारब्धं तु निर्वोढुं न शक्नोतीश्वरोऽपि सन् ।। ४ ।।

मुद्रापुस्तलसद्बाहा शरदिन्दुसमप्रभा ।
अवर्णा वर्णरूपा सा शारदा शर्म यच्छतु ।। ५ ।।

हरहरिदुर्गास्कन्दगणेशप्रभेशकाळीनाम् ।
अभिधास्ये कलशविधिं साङ्कुरशुद्धिप्रभिन्नहूतविधिभिः ।। ६ ।।

नित्यादिभेदात् स्नपनप्रक्रिया तु त्रिधोदिता ।
संस्थापनाष्टबन्धादौ नित्यं स्नपनमीरितम् ।। ७ ।।

येन केन निमित्तेन कार्यं नैमित्तिकं भवेत् ।
कार्यं रामाभिषेकादौ स्नपनं काम्यमीरितं ।। ८।।

नित्यं वित्तानुसारेण कुर्यान्नैमित्तिकं पुनः ।
निमित्तवित्तान्युद्वीक्ष्य कार्यं काम्यं निजेच्छया ।। ९।।

आदौ मङ्गलबीजोप्तिः स्थापनस्नपनादिषु ।
कर्तव्या देशिकवरैः तस्मात्तद्विधिरुच्यते ।। १०।।

अभिषेकदिनात् पूर्वमष्टमे दशमे दिने।
षष्ठे त्रयोदशे यद्वा कुर्याद् बीजार्पणं निशि।। ११।।

त्रिविधं पात्रमुद्दिष्टं मङ्गलाङ्कुरकर्मणि।
पालिका घटिका चैव शरावश्चेति भेदतः।। १२।।

प्रत्येकं द्वादश ग्राह्या विष्णुब्रह्मशिवात्मका।
प्रासादस्येशदिक्संस्थं मङ्गलाङ्कुरमन्दिरम्।। १३।।

प्रत्यङ्मुखं कारयित्वा मार्जनाद्यैर्विशोध्य च।
वितानेन विभूष्यास्मिन् मण्डलं परिकल्पयेत्।। १४।।

उत्तराग्राणि चत्वारि प्रागग्राणि त्रयोदश।
सूत्राण्यास्फाल्य षट्त्रिंशत्पदानि परिकल्पयेत्।। १५।।

यदा वास्तुपदे क्षेत्रे वीथी द्विद्विपुटान्तरे।
मृष्ट्वादिक्कोणमध्येषु चतुष्काणि प्रकल्पयेत्।। १६।।

वीथीचतुष्कं श्यामेन यथाशोभं पदानि च।
रजोभिस्तानि सम्पूर्य व्रीह्यादीन्येषु विन्यसेत्।। १७।।

दर्भकूर्चांश्च विन्यस्य प्रणवेन क्रमादथ।
अस्त्रमन्त्रेण संक्षाल्य पात्राणि विविधान्यपि।। १८।।

त्रिगुणीकृतसूत्रेण वर्मणा कलितानि च।
माकन्दाश्वत्थदूर्वाभिः मण्डितानि यथाक्रमम्।। १९।।

मृद्वालुकाकरीषैस्तु पूरितान्युत्तरोत्तरम्।
उत्कूर्चानि तथा मध्ये दृढान्येतानि देशिकः ।। २०।।

तारेणाग्न्यादीशनिष्ठं न्यसेत् पङ्क्तित्रयेण च।
दक्षिणे पालिकान्यासो मध्ये च घटिकास्थितिः।। २१।।

उत्तरे तु शरावाणामिति न्यासक्रमः स्मृतः।
तिलाश्चापि तथा मुद्गाः सर्षपाः शालयस्तथा।। २२।।

प्रियङ्गुशिम्बनिष्पावमाषश्यामकुलत्थकाः।
एतानि दश बीजानि समर्थानि प्ररोहणे।। २३।।

गुरुविघ्नौ समभ्यर्च्य तदनुज्ञापुरस्सरम्।
नान्दीमुखं च पुण्याहं कृत्वा पीठार्चनामपि।। २४।।

जलोषितान्यहोरात्रम् आबद्धान्यम्बरे पृथक्।
जलैरस्त्रेण संक्षाल्य पयसा पुरुषेण च।। २५।।

शोषदाहामृतप्लावकाठिन्यसुषिरीक्रियाः।
पात्राणां बीजजातस्य शोषदाहाप्लवानि च।। २६।।

कृत्वा तारेण विकिरेत् तेषु गन्धार्तवाक्षताः।
तत् तदैव समासाद्य पात्रेषु प्रतिपूज्य च ।। २७।।

करीषवालुकामृत्साः पूजयित्वाथ तारतः।
पृथक्स्थितेषु बीजेषु यजेत् तद्देवता अपि ॥ २८॥

पालिकादिषु सम्पूज्या विष्णुब्रह्मशिवाः क्रमात्।
यमविष्णुशिवादित्यस्कन्दाश्च कमलालया ॥ २९॥

वाय्विन्द्रसोमाग्नयश्च बीजानां देवताः स्मृताः।
एकीकृत्य च बीजानि सोममस्मिन् प्रपूज्य च ॥ ३०॥

दानं मौहूर्तिकं कृत्वा बीजान्यादाय चाञ्जलौ।
वापयेत् त्र्यम्बकाद्येन पात्रसंस्थापनक्रमात् ॥ ३१॥

त्र्यम्बकाय च शर्वाय शङ्कराय शिवाय च।
सर्वलोकप्रधानाय शाश्वताय नमो नमः ॥ ३२॥

वापक्रमात् कूर्चपाणिस्तेनैव मनुना पुनः।
निशागन्धाब्भिरभ्युक्ष्य शिवमावाह्य तत्र तु ॥ ३२

स्नाने शङ्खाद्भिरापोहिपूर्वैः प्रोक्ष्याभिपूज्य च ।
निवेद्याथ प्रसाद्यैनं रात्रीशोभ्यो बलिं हरेत् ॥ ३३॥

ब्रह्मभूतेन्द्रगन्धर्वयक्षरक्षःपिशाचकाः ।
विष्णुविघ्नस्कन्दरुद्रा शिवा बलिभुजोग्रहाः ॥ ३४॥

कुशपुष्पाक्षतान्नाद्भिः पूर्वं ब्राह्मं बलिं हरेत्।
सलाजदधिसक्त्वन्नहरिद्रपललैः परम् ॥ ३५॥

इन्द्रवल्लीरसे सिद्धचरुणा साज्यसक्तुना।
दध्ना च पयसा चैन्द्रं बलिं दद्यात् तृतीयकम् ॥ ३६॥

वेणुतण्डुलसंसिद्धपायसेन तुरीयकम्।
पञ्चमं जलपुष्पाज्यचरुणा समुदीरितम् ।। ३७।।

दोषाकम्बुतुषारक्तगन्धपुष्पान्धसा परम्।
समत्स्यमांसकृसरमाषतैलनिशान्वितैः ।। ३८।।

सप्तमं मधुलाजान्नैः गौलान्नेनाष्टमं हरेत्।
त्रिमध्वन्नैस्तु नवमं दध्याज्यक्षीरकेरकैः ।। ३९।।

सान्नैस्तु दशमं दोषा दध्यन्नकृसरैः परम्।
साज्यदुग्धान्धसा चान्त्यं बलिद्रव्यमितीरितम् ।। ४०।।

दिक्ष्वष्टासु बलिं दत्त्वा परितो मण्डलाद् बहिः।
रक्षां पाशुपतास्त्रेण कुर्यात् तालत्रयादिना ।। ४१।।

तत्र प्रोद्यच्चन्द्रबिम्बात् स्यन्दमानामृताम्बुभिः।
आप्लाव्यमानां स्मरतु तद्बीजाहितचित्कलाम् ।। ४२।।

एतन्माङ्गल्यबीजातचिद्योगात् कलशादिषु।
आहितं तत् परंतेजो भवेत् सर्वफलप्रदम् ।। ४३।।

समुक्ष्य पीठपूजान्ते दैवतं पात्रबीजयोः।
अभ्यर्च्य शिवमावाह्य सम्पूज्य सवनत्रये ।। ४४।।

रात्रीशेभ्यो बलिं दद्यादेवं नित्योक्षणे विधिः।
विना घटीशरावाभ्यां यद्वा षोडश पालिकाः ।। ४५।।

संगृह्य विहितं सर्वमाचरे वापकर्मणि।
चतुरश्रं समापाद्य भङ्क्त्वा षोडश कोष्ठकम् ।। ४६।।

पालिकास्तत्र विन्यस्य विष्णुं तासु समर्चयेत्।
अयमेव विशेषोऽन्यत् सर्वं पूर्ववदेव तु ।। ४७।।

उप्तशिष्टं तु बीजौघं रक्षेत् पात्रे च सेचितम्।
षष्ठेऽष्टमेह्नि दशमे यद्वा कर्म समाचरेत् ।। ४८।।

पञ्चमादिदिनेष्वेव देयः शिष्टबलिस्तदा।
एवं बीजाङ्कुरविधिः संक्षेपेण समीरितः ।। ४९।।

अथ संशोधयेन्मन्त्री प्रासादं मूर्तिपैः सह।
स्नात्वा प्रविश्य गेहस्य दक्षिणे प्राङ्मुखः शुचिः ।। ५०।।

आत्मानं सकलीकृत्य समभ्यर्च्य विधानतः।
गणेशपूजां बीजेन कृत्वाग्रे दर्भसंस्तरे ।। ५१।।

संसाद्य त्रिगुणं सूत्रं मालां दर्भमयीमपि।
मुष्टिगोमयसिद्धार्थमुष्टिगोमयगव्यकान् ।। ५२।।

अष्टगन्धं च विकिरं प्रत्यगारभ्य सादयेत्।
दर्भब्रह्मद्रुशाखोत्था मुष्टिरत्र प्रकीर्तिता ।। ५३।।

उशीरं कुङ्कुमं चैव मांसी मलयजं तथा।
मुरवारिगदायांसि गन्धाष्टकमुदीरितम् ।। ५४।।

संस्कृत्य शोषदाहाद्यैः प्रणवेन समर्च्य च।
जपेत् स्वस्वोदितैर्मन्त्रैः द्रव्याण्येतानि साधकः ।। ५५।।

तारांशा सूत्रजापे स्युरथवा तारयेव वा
प्रणवो दर्भमालायामस्त्रं पाशुपतं तु वा ।। ५६।।

अस्त्रः इलासर्षपे तु मुष्टिगोमयपाथसोः।
वायुवारुणबीजे तु पञ्चब्रह्माणि गव्यके ।। ५७।।

'आपः पुनन्तु' गन्धोदे पद्मामूलमनुः स्मृतः।
मूलमन्त्रः समाख्यातः प्रसूनाक्षतसंचये ।। ५८।।

गां दत्वा विप्रवर्याय समुद्वास्य गजाननम्।
स्थित्वा गेहाग्रतो गेहं मन्त्रदृष्ट्यावलोक्य च ।। ५९।।

तद्गतं भूतनिवहं समुत्सार्य बहिस्ततः।
अष्टताराभिजप्तेन ततश्चुलुकवारिणा ।। ६०।।

तारेण हुंफडन्तेन प्रोक्षयेद् देवमन्दिरम्।
त्रिगुणीकृतसूत्रेण त्रिश्शर्वादितदन्तिमम् ।। ६१।।

कपोतोपरि संवेष्ट्य तारेण त्रिगुणात्मना।
रक्षार्थं सकृदस्त्रेण दर्भदाम्ना च वेष्टयेत् ।। ६२।।

मुष्टिगोमयपाथोभ्यां प्रासादान्तर्बहिस्ततः।
सामान्यबुद्ध्या सम्मार्ज्य तथा प्रोक्ष्योपलेपयेत् ।। ६३।।

रमा विकीर्य सिद्धार्थान् सन्दहेद् दोषदूषितम्।
तद्भस्मापचयं कुर्वन् मुष्ट्या सम्मार्ज्य वायुना ।। ६४।।

वमाप्लाव्य शकृत्तोयैर्भूबीजेनोपलिप्य च।
स्मरेदमृतपिण्डं तत् स्थूलदेहात्मकं विभोः ।। ६५।।

चैतन्यानुप्रवेशाय पञ्चमन्त्रैस्तु गव्यकैः।
सम्प्रोक्ष्यापः पुनन्त्विति तद्व्याप्त्यै गन्धवारिभिः ।। ६६।।

यद्वा मूलेन सम्प्रोक्ष्य ततोमूलमनुंजपन्।
पुष्पाक्षतान् विकीर्याथ साङ्गोपाङ्गममुं स्मरेत् ।। ६७।।

यजेत् प्रासादबीजेन गन्धाद्यैः सकलात्मकम्।
अथ गर्भगृहे वह्नावीशाने वा प्रभञ्जने ।। ६८।।
स्वस्तिके पीठमभ्यर्च्य कुम्भसंस्कारपूर्वकम्।
आपूर्यास्मिन् समावाह्य पूजयेदस्त्रदेवताम् ।। ६९।।

तारं श्लीं पशु हुंफट् स्यादस्त्रमन्त्रः षडक्षरः।
मन्त्राक्षरैरङ्गक्लृप्तिः शैवे पीठे समर्चयेत् ।। ७०।।

ऋषिस्त्वघोरो गायत्री छन्दः पाशुपतादिकः।
रुद्रोऽस्य देवता स्वाङ्गहेतीन्द्राद्यैः समर्चयेत् ।। ७१।।

शूलं खड्गयुगान्तवह्निसशरेष्टान् दक्षिणे वामतो।
टङ्कं चर्मकपालकं च सधनुर्नागं करैर्बिभ्रतम् ।। ७२।।

पञ्चास्यं प्रलयार्ककोटिसदृशं पिङ्गोर्ध्वकेशोज्ज्वलं।
हासोद्यत्सितदंष्ट्रिकाप्रतिभयं दिव्यास्त्ररूपं भजे ।। ७३।।

'कृणुष्व पाजः' प्रमुखं सूक्तं 'रक्षोहणा'द्यपि।
त्रिवारमस्त्रमन्त्रं च शतमष्टोत्तरं जपेत् ।। ७४।।

पञ्चतत्त्वैर्दिशीन्द्राद्यैः किरेत् पुष्पैश्च मूलतः।
बहिर्निर्गत्य गेहस्य रक्षां कृत्वाग्निगोचरे ।। ७५।।

अन्तर्मण्डलतो बाह्ये राक्षोघ्नं होममाचरेत्।
उपलिप्याथ संविद्ध्य सम्प्रोक्ष्य सिकता अपि ।। ७६।।

विन्यस्योल्लेखनाद्यं तु कृत्वा वह्निमुखान्तिमम्।
रक्षोहणादिमन्त्राभ्यां पक्वं द्वाभ्यां च होमयेत् ।। ७७।।

याज्या पुरोनुवाक्यया[1] चाद्यन्ताज्यहुतान्वितम्।
कृणुष्वाद्यष्टदशभिः ये देवाद्यैश्च पञ्चभिः ।। ७८।।

दुर्गाभि[2]र्व्याहृतीभिश्च हुनेत् सर्पिः सकृत् सकृत्।
अष्टोत्तरशतं मार्गसमिदाज्यहविर्घृतम् ।। ७९।।

अघोरास्त्रेण जुहुयाद् यद्वा पाशुपतास्त्रतः।
हुनेद् द्रव्यान्तरे पूर्णां 'व्योमव्यापि' दशार्णतः ।। ८०।।

आदित्रिदीर्घा बिन्द्वन्ता व्योमव्यापी च ङेयुतः।
ताररुद्धः समाख्यातो व्योमव्यापी दशाक्षरः ।। ८१।।

विधिना याजुषेणैवं होमशेषं समाप्य च।
प्रणीताम्भोमार्गरसहुतभस्मसमन्वितम् ।। ८२।।

अस्त्रजप्तेन सम्पातसर्पिषा हुतमन्त्रकैः।
सदर्भाश्वत्थ विप्रद्रुशाखाभिः प्रोक्षयेद् गृहम् ।। ८३।।

उक्तं नाम्नैव[3] विद्वद्भिः कर्मण्यस्मिन् प्रयोजनम्।
ऐशान्यामुपलिप्याथ कृत्वा सम्बोधनादिकम् ।। ८४।।

अविसर्जितमेवाग्निं तमेवाधाय पूर्ववत्।
परिधिस्थापनात् पूर्वं कृत्वा कर्माथ दक्षिणे ।। ८५।।

स्वस्तिकद्वयमालिख्य शालितण्डूलपूर्वकैः।

1. क्याया ख.। 2. दृभिः ख.। 3. उक्ते नाम्न्येव ख.।

प्रकल्प्य वस्त्रान्तरितैः पीठमस्मिन् प्रविन्यसेत् ॥ ८६॥

कुशदूर्वाशमीपर्ण कूर्चस्थं कलशद्वयम्।
पीठार्चनान्ते संस्कृत्य प्रत्यक्स्थं स्वर्णतण्डूलैः ॥ ८७॥

प्राक्स्थितं रत्नतोयैश्च सम्पूर्यावाहयेत् तयोः।
प्रत्यक्स्थे मूलतो[1] देवं शान्तिं प्राक्संस्थिते तथा ॥ ८८॥

शान्तिपादैर्द्विरभ्यस्तैः षडङ्गानि प्रकल्पयेत्।
सिन्धुद्वीपश्च गायत्री शान्तिऋष्यादयो मताः ॥ ८९॥

'शन्नो देव्यादिको मन्त्रस्तारमूलाङ्गकैर्यजेत्।
दिक्पैश्च पुष्पधारिण्या' जलगन्धार्तवादिभिः ॥ ९०॥

वराभयकरां देवीं मन्दारकुसुमोज्ज्वलाम्।
सितमाल्याम्बरालेपां सर्वशान्तिकरीं स्मरेत् ॥ ९१॥

सकलीकृत्य सम्पूज्य निवेद्याभ्यर्च्य च द्वयम्।
विधाय रक्षां कृत्वाथ परिधिस्थापनादिकम् ॥ ९२॥

'वास्तोष्पते'ऽथ मन्त्राभ्यां द्वाभ्यां पक्वं हुनेत् ततः।
'वास्तोष्पते' ध्रुवाद्यैश्च सद्यादिब्रह्मपञ्चकैः ॥ ९३॥

शन्नवर्गैर्घृतं हुत्वा द्रव्याण्येतानि होमयेत्।
शमीसमिद्घृतान्नाज्यं दूर्वागव्यपरिप्लुताः ॥ ९४॥

शन्नो देव्या साष्टशतं पूर्णाहुतिसमन्वितम्।
ततः स्विष्टकृतं हुत्वा होमशेषं समाप्य च ॥ ९५॥

---

1. प्रत्यक्स्थमूलतो।

हुतशिष्टान्धसा भूयः पूर्वभागे विभावसोः।
नमोरुद्रादिमन्त्रेण कुशेषु विकिरेद् बलिम् ।। ९६ ।।

अथ वास्तुबलिं कुर्यादैशान्यां जातवेदसः।
एकाशीतिपदं कृत्वा सूत्रैः प्रागुदगग्रगैः ।। ९७ ।।

पदानां नवकं मध्ये दिक्षु षट्षट्पदान्यपि।
प्रतिकोणं पदद्वन्द्वं द्वितयं चैकतां नयेत् ।। ९८ ।।

प्राक्प्रत्यगायतं वह्निवायुदिक्स्थद्विकद्वयम्।
याम्योदगायतं रक्षःशर्वदिक्स्थद्विकद्वयम् ।। ९९ ।।

द्वात्रिंशत्पदसंयुक्तं बाह्यावरणमिष्यते।
दिक्ष्वष्टासु च तद्बाह्ये पदमेकैकमर्पयेत् ।। १०० ।।

मध्ये स्वस्तिकमालिख्य पदानि सकलान्यपि।
यथाशोभं प्रपूर्यैषु दर्भसूनाक्षतान् किरेत् ।। १०१ ।।

मध्ये कूर्चं प्रविन्यस्य शैवं पीठं समर्च्य च।
वास्तुं स्वमूलेनावाह्य सकलीकृत्य पूजयेत् ।। १०२ ।।

वां वास्तुपुरुषायेति नमोऽन्तः प्रणवादिकः।
वास्तुमन्त्रः स्वबीजेन स्वरषट्कवतामुना ।। १०३ ।।

साङ्गीकृत्य समर्च्यैनं वास्तुमण्डलविग्रहे।
ईशमूर्ध्निनिऋत्यङ्घ्रौ तस्मिन्नावाह्य पद्मजम् ।। १०४ ।।

ईशानाद्यैः परिवृतंमुपहारैः प्रपूजयेत्।
तारं नमो ब्रह्मणे स्यात् ब्रह्ममन्त्र षडक्षरः ।। १०५ ।।

नेत्रान्तमङ्गषट्कं स्यान्मन्त्रार्णैर्बिन्दुसंयुतैः।
आषाढीं हेमकुण्डीं स्फटिकमयगुणं पङ्कजं पाणि पद्मैः
।। १०६ ।।

बिभ्राणं बभ्रुभासा विततपट्टजटाभारकेणाभिरामम्।
स्मेरैरास्यैश्चतुर्भिश्चतुरमविरतं प्रोद्वमद्वेदनादैः ।। १०७ ।।

नानाभूषाभिदीप्तं द्रुतकनकनिभं भावयेदब्ज योनिम् ।। १०८ ।।
ईशानाद्याङेनमोन्तास्ताराद्या मनवः स्मृताः।
ईशानश्चैव पर्जन्यो जयन्तेन्द्रौ दिवाकरः ।। १०९ ।।

सत्यो भृशान्तरिक्षौ च वह्निः पूषाथ दक्षिणे।
वितथो गृहक्षतयमौ गन्धर्वो भृङ्गराजकः ।। ११० ।।

मृगपितृदौवारिकाः सुग्रीवः पुष्पदन्तकः।
वरुणासुरशोषाश्च रोगवाय्व[1]ग्निमुख्यकाः ।। १११ ।।

भल्लाटेन्द्वर्गलास्तद्वद्दितिश्चोदितिरेव तु ।
बहिरावरणे चैता ईशानादितदान्तिमम् ।। ११२ ।।

आपापवत्सावीशेन्तद्विकयोः प्राक्प्रतीचिगौ।
प्रागार्यकश्च सावित्रः सविता च हुताशने ।। ११३ ।।

द्विकयोर्दक्षिणे सौम्ये विवस्वान् दक्षिणे स्थितः।
निर्ऋतौ द्विकयोः प्रत्यक् प्रागिन्द्रेन्द्रजयौ स्थितौ ।। ११४ ।।

प्रतीचिं मित्रो वायव्यद्विकयोः सौम्ययाम्ययो।

1. वाय्वहि ख.।

स्थितौ रुद्ररुद्रजयौ स्थितः सौम्ये महीधरः ।। ११५ ।।

मध्ये ब्रह्मा च सम्पूज्यो बहिः प्रागादिदिग्गताः ।
शर्वः स्कन्दश्चार्यमा च जम्भकः पिलिपिञ्छका ।। ११६ ।।

चरकी च विदारी च पूतना पापराक्षसी।
स्थिताः शर्वादिकोणेषु बहिः प्रागादिदिग्गताः ।। ११७ ।।

मण्डलेषु सदर्भेषु पूज्या देवगृहादयः।
देवाश्चाप्यसुराश्चैव गन्धर्वा यक्षसंज्ञिताः ।। ११८ ।।

पितरश्चैव नागाश्च राक्षसाश्च पिशाचकाः।
अभ्यर्च्य जलगन्धाद्यैः दद्यादेषां बलिं क्रमात् ।। ११९ ।।

सकुशाक्षततोयेन भूतकूरान्धसा गुरुः।
पूर्वं मध्यपदे वास्तोस्त्रिमुष्ट्या तु बलिं हरेत् ।। १२० ।।

तदन्येषां सकृद्दत्वा ब्रह्मणस्तु त्रिशो ददेत्।
प्रसाद्य वास्तुदेहस्थांस्तेजोरूपान् विभाव्य तान् ।। १२१ ।।

तद्देवताकदम्बस्थं प्रासादमपि भावयेत्।
एवं वास्तुबलिं कृत्वा 'त्वं विप्र'यजुषा पुनः ।। १२२ ।।

सम्पातभस्मशान्त्यद्भिः पूर्ववत् प्रोक्ष्य मन्दिरम्।
नीराज्यान्तर्बहिःकुम्भतण्डुलैः प्रविकीर्य च ।। १२३ ।।

मूलेन शान्तिमनुना देवाग्रे दर्भसंस्तरे।
शान्तितोयेन संसिञ्चेद् विकिरेद् घटतण्डुलैः ।। १२४ ।।

वास्तुहोमेन तच्छान्तिं बलिना तस्य तोषणम्।

तद्देहसंस्थितानां च देवतानां विचिन्तयेत् ।। १२५ ।।

प्रीयन्तां वास्तुदेवता इति मन्त्रविशेषवत्।
कृत्वा गेहस्य पुण्याहमस्त्रकुम्भौजसाथ तत् ।। १२६ ।।

संरक्षितं भावयित्वा कुर्यात् तालत्रयादिकम्।
कृत्वैवं गृहसंस्कारं श्वोभूतेर्चां च शोधयेत् ।। १२७ ।।

चतुरश्रं चतुष्कोष्ठं संविलिख्याग्रमण्डपे।
पृथक् स्वस्तिकमालिख्य व्रीह्यादीन् न्यस्यतेषु च ।। १२८ ।।

पात्राणि सादयेत् त्रीणि कुम्भमीशेतु विन्यसेत्।
पीठं सम्पूज्य संस्कृत्य पात्राण्यभ्यर्च्य तारतः ।। १२९ ।।

दर्भनाकूत्थमृत् क्षीरिद्रुत्वगद्भिरथाग्निगम्।
गन्धपुष्पाक्षताम्भोभिर्निर्ऋतिस्थं तु वायुगम् ।। १३० ।।

फलकूर्चाद्भिरीशस्थं सफलस्वर्णवारिभिः।
आपूर्य कुम्भेऽभिवाह्य तानि मूलेन पूजयेत् ।। १३१ ।।

अन्तः प्रविश्य प्रतिमामभिषिच्य बहूदकैः।
तूष्णीं तान् दर्भमृत्त्वग्भिः संघृष्य क्षालयेज्जलैः ।। १३२ ।।

संलिप्तदोषसन्दाहबुद्ध्यैतत्क्षालनं विदुः।
गन्धपुष्पाक्षताम्भोभिः सिञ्चेत्तारं स्मरन् सुधीः ।। १३३ ।।

मूलोद्यच्चित्कलासेकबुद्ध्यैतत् प्लावनं विदुः।
गन्धपुष्पाक्षतफलकूर्चाद्भिः स्नापयेत् ततः ।। १३४ ।।

आमस्तकोद्गतचितमादिना स्नानमीरितम्।

मूलमन्त्रात्मनार्चिस्तद्विभाव्यावस्थितं तथा ।। १३५ ।।

दोषोपलेपनं विद्वाञ्छोधं शोधं घटोदकैः।
अब्लिङ्गैः प्रोक्ष्य कूर्चाग्रैर्मूलेनान्तेऽभिषेचयेत् ।। १३६ ।।

मार्जनं कथितं त्वेवं शुद्धिरुक्ता चतुर्विधा।
परादिरूपेणोद्यन्तां चित्कलां भावयेत् तु वा ।। १३७ ।।

ततो निवेद्यं तनुयाद् धारान्ते पूजयेत्तु वा।
ऐशान्यां धान्यराशिस्थं महत् पात्रं तु लोहजम् ।। १३८ ।।

संस्कृत्य गालितजलैः पूरयेद् गन्धमिश्रितैः।
मत्स्ययुग्मं च सौवर्णं रजतं कच्छपद्वयम् ।। १३९

समृणालां सपुष्पां च समूलामपि पद्मिनीम्।
विन्यस्य पीठमिष्ट्वास्मिन्नावाह्य वरुणं पुनः।। १४० ।।

आयात्वित्यादिमन्त्रेण मूलमन्त्रसमन्वितम्।
लिपिमन्त्राक्षराङ्गैस्तं सकलीकृत्य पूजयेत् ।। १४१ ।।

आयातु वरुणः शीघ्रं प्राणिनां प्राणरक्षकः।
अतुल्यबलवानत्र सर्वदुष्टप्रशान्तये ।। १४२ ।।

ध्रुवास्वित्यादिमुलाणुमन्त्रार्णैरङ्गकल्पना।
अष्टभिः सप्तभिः षड्भिः पुनरस्तावद्भिरक्षरैः ।। १४३ ।।

वसिष्ठत्रिष्टुप्वरुणा ऋष्याद्याः परिकीर्तिताः।
अच्छांशुकाभरणमाल्यविलेपनाद्यः
पाशाङ्गुशाभयवरोद्यतदोस्सरोजः।। १४४ ।।

शुभ्रारविन्दवसतिः सुसितः प्रसन्नः।
भूयाद् विभूतिविधये वरुणश्चिरं वः ।। १४५ ।।

ध्यात्वैवमिष्ट्वा संस्पृश्य प्रजपेत् पञ्च वारुणीः।
अवोदुद्वादिमौ पूर्वाविमं तत्त्वादिकौ परौ ।। १४६ ।।

यद्विद्धि ते विशोयादि ऋचः पञ्च प्रकीर्तिताः।
शिवतीर्थं समावाह्य तस्मिन् देवं प्रपूजयेत् ।। १४७ ।।

आराध्यपीठमावाह्य देवं न्यस्याङ्गकैरपि।
अधोऽग्रकूर्चं संस्यूतं हेमच्छिद्रसमान्वितम् ।। १४८ ।।

पलाशक्षीरवृक्षादिकृतपादत्रयस्थितम्।
प्रतिमोपरि विन्यस्य धारापात्रं तु लोहजम् ।। १४९ ।।

स्नानान्तमुपचर्याथ पादानिष्ट्वादिवर्णकैः
पात्रं तारेण सम्पूज्य गन्धपुष्पाक्षतान् क्षिपेत् ।। १५० ।।

तीर्थाद्भिः शङ्खमापूर्य किञ्चिदभ्यर्च्य तज्जलम्।
निक्षिप्य धारापात्रे तु मूलेनापूर्य तत्पुनः ।। १५१ ।।

प्रतिमामूर्ध्न्यविच्छिन्नां धारां सम्पातयेद् गुरुः।
मूलचक्रोज्ज्वलत्तेजः संविद्धामृतरोचिषः ।। १५२ ।।

निष्यान्दितामृतासारधारारूपां विचिन्तयेत्।
सावित्रीं दशधाराद्यां पञ्च ब्रह्माणि च क्रमात् ।। १५३ ।।

वेदाद्यं रुद्रसूक्तानि पावमानं च पौरुषम्।
वेदाद्यसूक्तमखिलां संहितां वा द्विजोत्तमाः ।। १५४ ।।

स्पृशन्तेः पात्रमव्यग्रा जपेयुरभितः स्थिताः।
कृत्वैवं याममात्रं तु पात्रोद्धरणपूर्वकम् ।। १५५ ।।

पुष्पमाराध्य शिरसि दत्त्वा शेषोपहारकान्।
सम्यगभ्यर्च्य नैवेद्यं कृत्वा हुत्वा बलिं हरेत् ।। १५६ ।।

पुनराचम्य नैवेद्यं विसृज्याभ्यर्च्य तोषयेत्।
पात्रे शिष्टजलं हृत्वा वाससाथ परेऽहनि ।। १५७ ।।

तृतीयेऽहनि चापूर्य वरुणावाहनादिकम्।
प्राग्वद्विधाय धारां च कुर्यादेवं दिनद्वये ।। १५८ ।।

न चाल्यं वारुणं पात्रं कदाचित् तु दिनत्रये।
तृतीयेऽह्नि निवृत्तायां धारायां वरुणं पुनः ।। १५९ ।।

उद्वास्य देवे पात्रादि तस्मात् सर्वं बहिस्त्यजेत्।
अवगाहं ततः कुर्याद् द्रव्यैर्गन्धजलैरपि ।। १५२ ।।

स्वस्तिके धान्यराशिस्थे पात्रसंस्कृत्य पूजिते।
योजयेदवागाहाय विधिवद् गव्यपञ्चकम् ।। १५३।।

तद्वद्गन्धोदमापूर्य मूलेन द्वयमर्चयेत्।
गोमूत्राद्गोमयं त्वर्धं क्षीरमष्टगुणं स्मृतम् ।। १५४ ।।

दधि सप्तगुणं वाष्टौ सर्पि ... चतुर्गुणम्।
गोमूत्रे तत्सदित्यादि गोमये गन्धपूर्वकैः ।। २५५ ।।

आप्यायस्वेति च क्षीरे दधिक्राव्णेति दध्नि च।
तेजोऽसि तेज इत्यादिमन्त्रः सर्पिषि कीर्तितः ।। १५५ ।

एभिः संयोज्य मनुभिः समालोड्यैकतां[1] नयेत्।
[2]पीठं सम्पूज्य देवेशमावाह्य स्नानकर्मणि ।। १५६ ।।

संछाद्यार्चां सुवासोभिः सदर्भैरप्रमादतः।
याज्ञीकद्रुमसंक्लृप्तं पञ्जरं प्रकलय्य च ।। १५७ ।।

मुद्गमाषादिपिष्टैस्तु निर्घृणीकृत्य तत् पुनः।
वेष्टयित्वा दृढतरं तदप्यहतवाससा ।। १५८ ।।

गव्यैः प्रपूर्य तनुयादवगाहविशोधनम्।
तारं नादं च पञ्चार्णं व्योमव्यापि महामनुम् ।। १५९ ।।

ब्रह्माणि पञ्च श्रीरुद्रमन्त्रान् धारोदितानपि।
गाह्यमाने शिवे विप्रा जपेयुरभितः स्थिताः ।। १६० ।।

उपलिप्याग्निमाधाय कृत्वा चाग्नि मुखान्तिकम्।
पक्वं हुत्वा ब्रह्मभिश्च शतमाज्येन होमयेत् ।। १६१ ।।

अधोरास्त्रेणाष्टशतं समिदाज्यहविर्घृतम्।
हुत्वा शेषं समाप्यास्मिन् सम्पातं संस्पृशेत्तु वा ।। १६२ ।।

कृत्वैवं याममात्रं तदवमुच्याथ गव्यकम्।
अभिषिच्य विशोद्ध्यैतद् गन्धाद्भिरवगाह्य च ।। १६३ ।।

विसृज्य पञ्चरं भूयः पूजां पूर्ववदाचरेत्।
बिम्बे निरन्तरव्याप्तिश्चितो ध्येयावगाहने ।। १६४ ।।

---

1. 'मथ ब्रह्मद्रुजेन तु' ख, 'मथन ब्रह्मद्रुजेन' क।

2. तारेण तद्गव्यजातं समानोड्यैकसां नयेत्, ख

गव्यैर्व्यस्तैः समस्तैश्च गन्धोदान्तैर्यथाक्रमम्।
दिने दिने महादोषे कर्तव्यमवगाहनम् ।। १६५ ।।

अल्पदोषेऽथवा लाभे गव्यैः सम्पूरितेन तु।
कलशेनाभिषेकश्च कृतं स्यादवागाहनम् ।। १६६ ।।

पदपञ्चकमापाद्य मध्यप्रागादिदिग्गतम्।
सदर्भकूर्चान् विन्यस्य व्रीहिस्थेष्वथ पञ्चसु ।। १६७ ।।

एकासनस्थान् प्रयजेत् कलशानथ संस्कृतान्।
गन्धपुष्पाक्षताम्भोभिः पञ्चतत्त्वैः प्रपूरितान् ।। १६८ ।।

एकैकेन च तत्त्वेन विहितावाहनार्चतान्।
एकीकृत्य च तारेण मूलेनावाह्य पूजयेत् ।। १६९ ।।

सनिवेद्यं तोषयित्वा भावयेच्च पृथक् स्थितिम्।
एकैकं पुनरभ्यर्च्य वाससा परिवेष्ट्य च ।। १७० ।।

स्वस्वमन्त्रेण सञ्जप्य रक्षामस्त्रेण कल्पयेत् रिस्त्रे।
पीठार्चनादिस्नानान्तं कृत्वा मन्त्रैर्निजैः क्रमात् ।। १७१ ।।

तेजोमये देवबिम्बे कार्यकारणगामिनाम्।
शितधीः पञ्चमूर्तिनां[1] पञ्चीकृत्य विधायिनाम् ।। १७२ ।।

अनुस्मरन्नभिव्यक्तिं कादिस्थानेषु पञ्चसु।
मध्यादिकलशैः सिक्त्वा देवदेवं समर्चयेत् ।। १७३ ।।

यद्वेष्ट्वा पञ्च कलशान् प्रासादान्तरुपेत्य च।

1. 'ना' क।

बिम्बाग्र उपविश्यास्त्र त्रितालादिकृतावनः[1] ।। १७४ ।।

स्वात्मन्यारोप्य बिम्बस्यचेतनां च प्लुताणुना।
स्मृत्वा विराण्मयं बिम्बं तारतत्त्वासुरोधतः ।। १७५ ।।

संहृत्येळादि भूतादिशोषदाहाप्लवादनु।
काठिन्यसुषिरीकारौ चिद्युक्तो भूतसर्जनम् ।। १७६ ।।

वर्णासुरोधतद्व्याप्तिन्याससाङ्गीक्रियादिकम्।
मूलप्राणासुरोधं त्रिः पञ्चविंशतिसंख्यया ।। १७७ ।।

पीठमन्त्रप्रविन्यासं बिम्बेदेहवदेव च।
मन्त्रोदयासुयमनं व्यापकत्रितयं तथा ।। १७८ ।।

करन्यसनवर्जं तु बिम्बे न्यासं विधाय च।
पीठेज्यापुर्वमावाह्य सिक्त्वा तत्[2] पञ्चभिर्घटैः ।। १७९ ।।

ईशादिब्रह्ममनुभिः विन्यस्य हृदयेऽथ तैः।
संव्याप्य कादिषु न्यस्य देवदेवं समर्चयेत् ।। १९० ।।

पुण्याहं विदधीताथ मूर्तिपैः सहितो गुरुः।
बिम्बदेवताः प्रीयन्तामिति मन्त्रविशेषवत् ।। १९१ ।।

रक्षाकुम्भचितिं देवे पञ्चकान्ते नियोजयेत्।
सर्वदोषेषु बिम्बेऽस्य शुद्धिरेवं समीरिता ।। १९२ ।।

।। इति कलशचन्द्रिकायां शिवभागे प्रथमपटलः समाप्तः ।।



1. 'स' क।  2. 'तं' ख।

# कलशचन्दिकायां शिवभागः
## द्वितीयः पटलः

ततः समारभेद्धोमं शङ्करप्रोक्तनामकम्।
गेहस्य याम्यदिग्भागे कुण्डं खण्डेन्दुसन्निभम् ।। १ ।।

कुर्याद्दक्षिणतो वक्रमृजु चोत्तरभागतः।
अथोपलिप्य तत् कुण्डं मुष्ट्याद्यैः परिशोध्य च ।। २ ।।

शोषदाहामृतप्लावकाठिन्यसुषिरीक्रियाः।
वाय्वग्न्यमृतभूव्योमबीजैरसुनिरोधनात् ।। ३ ।।

क्रमादावर्तितैः कुर्यात् पञ्चविंशतिसंख्यया।
शोषदाहौ विधायाथ वज्रमन्त्रेणचोल्लिखेत् ।। ४ ।।

हुंफट्कारस्ताररुद्धो वज्राणुरिति कीर्तितः।
अस्त्रेण पोक्ष्य शकलं निरस्यान्यस्य विष्टरम् ।। ५ ।।

पीठमिष्ट्वा सवामाणुभुवनेश्याभिवाह्य च।
तया सम्पूज्य सद्येन समादाय हुताशनम् ।। ६ ।।

क्रव्यादांशं निरस्याथ शोषदाहौ विधाय च।
ईशाने वह्निं सञ्जप्य सम्पूज्याधोरमन्त्रतः ।। ७ ।।

सद्येन कुण्डे निक्षिप्य प्रासादेनाथ पूजयेत्।
पर्युक्ष्य च परिस्तीर्य कृत्वाज्यादेश्च संस्कृतिम् ।। ८ ।।

सद्येन वामघोराभ्यां पुरुषेणेशतस्तथा।
गर्भाधानादिकाः कुर्यात् क्रियाः पञ्च क्रमेण तु ।। ९ ।।

गर्भाधानं पुंसवनं सीमन्तं जातनामनी।
समिन्निक्षेपणं होममाज्येनाष्टाष्टसंख्यया ।। १० ।।

पूर्णां हुताणुना पूजां विदध्यादन्तरान्तरा।
कृत्वा तत्कर्मशेषं च वक्ष्यमाणविधानतः ।। ११ ।।

अन्वाधानं समारभ्य परिधिस्थापनात् पुरा।
दक्षिणेऽभ्यर्च्य कलशं परिधिन्यसनादिकम् ।। १२ ।।

कृत्वाग्नौ पीठमाराध्य देवमावाह्य पूजयेत्।
इध्माघारादिकं हुत्वा हुनेत् पीठाणुभिर्घृतम् ।। १३ ।।

पञ्चतारादिनान्येन पद्मं पूजाणुभिर्घृतम्।
वक्त्रेण पक्वं हुत्वाज्यं पूजामन्त्रैः सकृत् सकृत् ।। १४ ।।

औदुम्बरमार्गसमिदाज्यान्नानि हुनेत् ततः।
अघोरसद्यवामास्यैरष्टोत्तरसहस्रकम् ।। १५ ।।

तिलसर्षपमुद्गैश्च शालिभिश्च यवैरपि।
हुनेत् तत्पुरुषेणैव शतमष्टोत्तरं पृथक् ।। १६ ।।

वक्त्रेणैव हुनेत् पश्चात् दूर्वाणां तु सहस्रकम्।
मृत्युजिन्मनुना पश्चादष्टोत्तरशतं पृथक् ।। १७ ।।

दधिक्षौद्रघृतैर्हुत्वा कृत्वा स्विष्टकृदादिकम्।
प्रसाद्याग्निगतं देवं समुद्वास्य घटोदके ।। १८ ।।

सम्पाताज्यं निषिच्याथ विसृजेदाशुशुक्षणिम्।
गत्वान्तः पीठमाराध्य समावाह्य महेश्वरम् ।। १९ ।।

नीराज्य कलशाम्भोभिरभिषिच्य हुताणुभिः।
समाराध्य निवेद्यास्मै प्रसन्नार्चां समाचरेत् ।। २० ।।

ततस्समारभेद्धोमं नन्दिप्रोक्तसमाह्वयम्।
देवदक्षिणदिग्भागे कर्तव्यं तद्विशेषतः ।। २१ ।।

नन्दिप्रोक्ते तु होमाः स्युर्नवपञ्चकसंख्यकाः।
साध्वा[1]चारानुसारेण संगृह्यन्ते त्रयोदश ।। २२ ।।

एकं वा पञ्च वा कुर्यान्नव यद्वा त्रयोदश।
पञ्च चेद् दिक्षु मध्ये च नव चेदष्टदिक्षु च ।। २३ ।।

खनेद्राशिषु कुण्डानि भवेयुश्चेत् त्रयोदश।
चतुरश्राणि सर्वाणि कुण्डानि परिकल्पयेत् ।। २४ ।।

अथाग्निजननं कुर्यान्मध्ये कुण्डे गुरुः स्वयम्।
गुरुविघ्नार्चनं कृत्वा मुष्ट्याद्यैः परिशोध्य च ।। २९ ।।

शोषदाहमृतप्लाव काठिन्यसुषिरीक्रियाः।
वाय्वग्न्यमृतभूव्योमबीजैरसुनिरोधनात् ।। ३० ।।

क्रमादावर्तितैः कुर्यात् पञ्चविंशतिसंख्यया।
भूयोऽपि शोषदाहौ च विधायासुनिरोधनात् ।। ३१ ।।

प्रोक्ष्यास्त्रेण समुल्लिख्य शैवीं रेखामुद्ग्गताम्।

1. 'साध्या'।

दक्षिणोत्तरमध्येषु तिस्रः प्रागग्रगां लिखेत् ।। ३२ ।।

संप्रोक्ष्य वर्मणा त्यक्त्वा शकलं चाक्षतार्तवैः।
सकूर्चं विष्टरं तस्मिन् विन्यस्य निगमादिना ।। ३३ ।।

पीठमभ्यर्च्याभिबाह्य बीजेन भुवनेश्वरीम्।
ह्रामाद्यङ्गानि विन्यस्य स्मरेद् वागीश्वरीं शुभाम् ।। ३४ ।।

नीलोत्पलदलश्यामामृतुस्नातां सुवाससम्।
अरुणाम्भोजाभिजातकरपादतलद्वयम् ।। ३५ ।।

स्तनभारविनम्राङ्गीं मदलोलविलोचनाम्।
रोचनाक्षतसंक्लृप्ततिलकां नवयौवनाम् ।। ३६ ।।

विविधाभरणां विश्वं भासयन्तीं स्वरोचिषा।
ताम्बूलारुणबिम्बोष्ठीं पुत्रीयन्तीं रतोत्सुकाम् ।। ३७ ।।

संलग्नपार्श्वां देवेन मदनारूढचेतसा।
वदनाम्भोजसंसक्तलोचनत्रितयेन च ।। ३८ ।।

सम्भाव्य दिव्यमिथुनं सहितं तत्प्रपूज्य च।
स्वात्मानं सस्मरेत् मन्त्री देवाभिन्नमनन्यधीः ।। ३९ ।।

मथितं मणिजं वापि श्रोत्रियाकारजं तु वा।
प्रणवेनाग्निमादाय नाभौ विन्यस्य पावकान् ।। ४० ।।

क्रव्यादांशं निरस्याथ राक्षसाधिपतेर्दिशि।
आत्मन्यारोप्याग्निचितिं शोषदाहौ विधाय च ।। ४१ ।।



पीठमिष्ट्वा मनागग्नौ चितिं पूर्वाहृतां नयेत्।

तारगर्भस्वरं बीजेनावाह्य च विभावसुम् ।। ४२ ।।

रामाद्यङ्गानि विन्यस्य तद्बीजेन प्रपूज्य च।
उदर्चिषं तमुद्बुद्धं विभुर्वीर्यलयः स्मरन् ।। ४३ ।।

उद्धृत्य देव्या योन्यां तु भूस्थजानुर्मरुद्यमी।
त्रिः परिभ्रामयन् कुण्डे क्षिपेत् तारेणपावकम् ।। ४४ ।।

गर्भाशयं समुन्नीय प्रज्वाल्यामुं स्वगृह्यतः।
कृत्वा परिसमूहादि वह्न्याराधनपश्चिमम् ।। ४५ ।।

समर्च्य प्रणवेनाग्निं गर्भाधानं धियास्मरन्।
हुत्वैकां समिधं भूयो घृतं हुत्वाष्टसंख्यया ।। ४६ ।।

पूर्णां हुत्वा ध्रुवेणेष्ट्वा गर्भाधानं कृतं स्मरत्।
एवमन्याः क्रियाः कार्याः पुंसवाद्याः क्रमेण तु ।। ४७ ।।

वक्ष्यमाणाणुभिर्होमः पूर्णा च व्योमविद्यया।
गर्भाधानं पुंसवनं सीमन्तं जातनामनी ।। ४८ ।।

सद्याद्यैर्ब्रह्मभिः पञ्चपुंसां निष्क्रामणं तथा।
ईशानेन प्राशनं च ताभ्यां चौलोपनायने ।। ४९ ।।

व्रतानि च समावर्तं सद्याद्यैः पञ्चभिः क्रमात्।
विवाहं व्योममन्त्रेण प्रासादेनाग्निसंग्रहः ।। ५० ।।

आधानान्ते नयेद् देवं देवीगर्भाग्निनैकताम्।
देवीं च कुण्डतादात्म्यं विहिते जातकर्मणि ।। ५१ ।।



शिवस्वरूपं संध्यायेत् जातं तज्जातवेदसम्।

सन्दीप्तसप्तजिह्वाद्विशीर्षादिसमन्वितम् ।। ५२ ।।

पीठमारध्यमूलेन देवमावाह्य विन्यसेत्।
लिपितत्त्वमनूनर्घ्याद्युपहारान् प्रदाय च ।। ५३ ।।

साङ्गावरणमभ्यर्च्य तारव्याहृतिपूर्वकैः।
पीठमन्त्रैश्च मूलेन परिवारैः सकृत् सकृत् ।। ५४ ।।

हुत्वाज्यमथमूलेन जुहोत्वष्टशतं घृतम्।
ब्रह्मार्पणेनैकवारं व्याहृतिप्रणवैरपि ।। ५५ ।।

आज्यशेषं समर्प्याग्नौ देवमिष्ट्वा प्रसाद्य च।
निष्कलीकृत्य हव्याशमाराध्यास्त्रेण गोपयेत् ।। ५६ ।।

उपलिप्याथ तत्कुण्डं होमकर्म समारभेत्।
कृतोल्लेखनविन्यस्तविष्टरार्चितशक्तिषु ।। ५७ ।।

विहरेत् परिकुण्डेषु पूर्वयाम्यक्रमाद् वसुम्।
पूर्वाग्न्यादिक्रमो ग्राह्यः परिकुण्डान्यथाष्टचेत् ।। ५८ ।।

परिकुण्डद्वादशके क्रमो मेषवृषादिकः।
वह्नेर्विहरणे मन्त्रा अधिलासहुतादिताः ।। ५९ ।।

स्वशाखोक्तरीत्यैव सर्वेऽपिगुरुमूर्तिपाः।
आरभ्य होमं परिधिस्थापनात् प्राक्समर्चयेत् ।। ६० ।।

दक्षिणे कलशं कृत्वा परिधिस्थापनादिकम्।
अग्न्यलङ्करणादूर्ध्वं पीठपूजापुरस्सरम् ।। ६१ ।।

देवमावाह्य सम्पूज्य विधायेध्महुतादिकम्।

कुर्यादाज्याहुतीः पक्वहोमात् प्राक् पीठमन्त्रकैः ।। ६२ ।।

पुंसा पक्वं च जुहुयुः पूजामन्त्रैः सकृत् सकृत्।
हुत्वाज्यं व्योममनुना ततः पूर्णं[1] च भावयेत् ।। ६३ ।।

ततः सर्वेऽपि जुहुयुः ईशाद्यैर्ब्रह्मभिः क्रमात्।
पञ्चभिस्त्रिसहस्राज्यं ततः पञ्चाक्षरेण च ।। ६४ ।।

समित्सर्पि र्व्रीहितिललाजान्यष्टसहस्रकम्।
समिधस्तोरणं कृत्वा चतुर्दिक्ष्वष्टदिक्षु चेत् ।। ६५ ।।

आधिवासनिका यद्वापालाश्यस्सर्वकुण्डके।
ग्राह्या द्वादशकुण्डेषु पालाश्योन्तत्वतास्सदा ।। ६६ ।।

भूरादिभिश्चतुर्मन्त्रैः द्वादशोर्ध्वशतं तथा।
पालाशसमिधो हुत्वा सावित्र्याष्टशतं पृथक् ।। ६७ ।।

क्षीरं दधि तथा क्षौद्रं घृतं पूर्णां पृथक् पृथक्।
हुत्वा स्विष्टकृदाद्यं तु होमशेषं समाप्य च ।। ६८ ।।

सम्पातं कलशे सिक्त्वा प्रसन्नार्चां विधाय च।
आराध्याग्निं समुद्वास्य कुम्भे वह्निगतां चितिम् ।। ६९ ।।

कलशं किञ्चिदभ्यर्च्य पावकं च विसर्जयेत्।
अन्तः प्रविश्य पीठार्चां विधायावाह्य च प्रभुम् ।। ७० ।।

सकलीकृत्य नीराज्य कलशैरभिषिच्य च।
शेषोपहारैरभ्यर्च्य भगवन्तं क्षमापयेत् ।। ७१ ।।

1. ‘पूर्णां’ क।

दक्षिणां होमकर्तृभ्यो यथाशक्ति प्रदापयेत्।
शान्तिहोमं ततः कुर्यादैशान्यां दिशि देशिकः ।। ७२ ।।

तुर्यश्रकुण्डे हव्याशं जनयित्वा तु पूर्ववत्।
पूजामन्त्राज्यहोमान्तं कर्म कृत्वा यथाविधि ।। ७३ ।।

पुंसैव पूर्णां दत्त्वाथ तेन द्रव्याणि होमयेत्।
प्लक्षौदुम्बरवटजाः पैप्पलाः समिधस्तथा ।। ७४ ।।

आज्यान्नदूर्वालाजांश्च सर्षपांश्च तिलांस्तथा।
यवान् व्रीहीश्च सक्तूंश्च घृतमष्टोत्तरं शतम् ।। ७५ ।।

द्रव्यान्तरेऽत्र पूर्णां च पुरुषेणैव होमयेत्।
होमशेषं समाप्याथ सम्पातं कलशेऽर्प्य च ।। ७६ ।।

समुद्वास्याग्निगं देवं कलशे तं विसृज्य च।
पीठमाराध्य देवेशमावाह्य कलशोदकैः ।। ७७ ।।

अभिषिच्य तमभ्यर्च्य निवेद्याभ्यर्च्य तोषयेत्।
अथापरं प्रवक्ष्यामि शान्तिहोममनुत्तमम् ।। ७८ ।।

तुर्याश्रकुण्डे त्वैशान्यां पूर्ववज्जनितेऽनले।
पूजामन्त्राज्यहोमान्तं कर्म कृत्वायथाविधि ।। ७९ ।।

चतुर्विंशतिसंख्यं वा शतसंख्यं हुनेद् घृतम्।
सहस्रसंख्यमथवा वक्ष्यमाणेर्मनूत्तमैः ।। ८० ।।

ब्रह्माणि पञ्चप्रासादपञ्चार्णौ पुरुषस्तथा।
नमोस्तु मन्त्रश्चापैतु मृत्युराद्या ऋचस्तथा ।। ८१ ।।

षोडशैवं मनूनाञ्च पञ्चविंशतिरीरिता।
आद्यन्ताज्याहुतियुतैः पृथग् द्रव्यैस्तथा हुनेत् ।। ८२ ।।
अपामार्गसमिच्छिन्ना सहैन्द्रीभद्रिकाञ्जलिः।
दूर्वासिद्धार्थकव्रीहियवास्तिलचरूंषि च ।। ८३ ।।

होमशेषं समाप्याथ कलशेनाभिषेचयेत्।
अद्भुतेषु निमित्तेषु कुर्यादेनां हुतिक्रियाम् ।। ८४ ।।

श्वस्पर्शनादौ विहितामथ शान्तिं वदाम्यहम्।
वह्निं पूर्ववदुत्पाद्य दिश्यैशान्यां यथाविधि ।। ८५ ।।

कृत्वा चाग्निमुखं पक्वं हुत्वा तत्पुरुषेण तु।
पूजामन्त्रैर्घृतं हुत्वा पूर्णां च व्योमविद्यया ।। ८६ ।।

मन्त्रैरमीभिरेकैकवारं सर्पिः क्रमाद्धुनेत्।
नारायणेन सूक्तेन श्रीसूक्तेन तथा पुनः ।। ८७ ।।

अतो देवेति सूक्तेन नासदंहोमुचा तथा।
संसमिद्भद्रपादेन तथारायित्यनेन च ।। ८८ ।।

वक्त्रेण पञ्चतत्त्वैश्च पूर्णामन्ते च दापयेत्।
अत्र पक्षद्वयं ग्राह्यं शाखाभेदेन सूरिभिः ।। ८९ ।।

ऋचः पुरुषसूक्तस्य षोडशैव भवन्तिहि।
मन्त्राः पञ्चदशैवस्युः श्रीसूक्ते षड्भवन्ति च ।। ९० ।।

अतो देवादिके सूक्ते नासत्सूक्ते तु सप्त च।
अपनश्शोशुचत्सूक्ते मन्त्राः स्युर्वसुसङ्ख्यकाः ।। ९१ ।।

संवादसूक्ते चत्वारोभद्रमित्यादिपादतः।
अरायिकाण इत्यादौ पञ्चमन्त्राः प्रकीर्तिताः ॥ ९२ ॥

गायत्र्या पञ्चभिस्सार्धं मनवो जातिसंख्यकाः।
यद्वा नारायणे सूक्ते मनवः स्युश्चतुर्दश ॥ ९३ ॥

नासदादौ षोडश स्युरग्नेर्मन्वेतिपूर्विकाः।
अंहोमुचश्चतुस्त्रिंशत् पक्षभेदे त्वयं क्रमः ॥ ९४ ॥

पक्षेऽस्मिन् समुदायेन मन्त्रा एकाधिकं शतम्।
अश्वत्थखदिरल्पक्षब्रह्मपाटलसम्भवाः ॥ ९५ ॥

वटजाः समिधो हुत्वा मूलनाष्टोत्तरं शतम्।
पूर्णां दत्त्वा प्रतिद्रव्यं होमशेषं समाप्य च ॥ ९६ ॥

होममन्त्रान् जपन्नेव कलशैरभिषेचयेत्।
पूर्ववद् देवमभ्यर्च्य प्रसन्नं भावयेद् विभुम् ॥ ९७ ॥

मरणादिषु दोषेषु कुर्याच्छान्तिं गरीयसीम्।
पीठमाराध्य देवशमावाह्य स्नानकर्मणि ॥ ९८ ॥

उपविश्याथ देवाग्रे मूर्तिपैः सहितो गुरुः।
नान्दीमुखं च पुण्याहं कृत्वा सम्पादयेद्धविः ॥ ९९ ॥

ऐशान्यां दिशि देवस्य कर्तव्यं मण्डलाद्बहिः।
होमस्य दक्षिणे सम्यक्च्छन्नो देवीविधानतः ॥ १०० ॥

त्रिपादपूर्णं कलशं सम्पूज्याथोपलिप्य च।
संवेधनादिकं कृत्वा वह्निनिक्षेपणादनु ॥ १०१ ॥

प्रज्वाल्यजुष्टोपस्थानाद्यखिलं याजुषक्रमात्।
विधाय परिधः पूर्वं पुरतः कलशस्य तु ।। १०२ ।।

नान्दीमुखं च पुण्याहं कुम्भोद्धरणसंयुतम्।
शान्तिदेवताः प्रीयन्तामिति मन्त्रविशेषवत् ।। १०३ ।।

कृत्वा तच्छिष्टतोयेन कुम्भशेषं प्रपूर्य च।
कूर्चं पुण्याहपात्रस्थं फलं च ससुवर्णकम् ।। १०४ ।।

निक्षिप्य कलशे तस्मिन् देवमावाह्य पूजयेत्।
परिधिन्यसनाद्यं तु कृत्वाग्निमुखपश्चिमम् ।। १०५ ।।

यत इन्द्रादिमन्त्राभ्यां पक्वं द्वाभ्यां च होमयेत्।
वास्तोष्पते प्रत्याद्या वास्तोष्पते शग्मया तथा ।। १०६ ।।

शन्नो देव्यादिरिन्द्राग्नीरोचनापूर्वकस्तथा।
कयानः को अद्य युङ्क्ते भवतन्न इति क्रमात् ।। १०७ ।।

षड्भिः कनिक्रदाद्यैस्तु भुयः स्वस्त्यादिकाष्टभिः।
वास्तोष्पते ध्रुवा षड्भिः सद्याद्यैर्ब्रह्मपञ्चकैः ।। १०८ ।।

जातवेदादिभिस्तद्वच्छन्नवर्गैश्च पौरुषैः।
व्याहृतीभिः क्रमाद्धुत्वा सम्पातविधिनाघृतम् ।। १०९ ।।

पूर्णां दत्त्वाथ जुहुयाद् ब्रह्मद्रुसमिधादिकम्।
समिद्धविर्लाजासुरीतिलांश्च यवमुद्गकान् ।। ११० ।।

आज्याभ्यान्तरितं पुंसा पृथगष्टोत्तरं शतम्।
द्रव्यान्तरे हुनेत् पूर्णां व्योमव्यापी दशार्णतः ।। १११ ।।

हव्यवाहादिमन्त्रेण हुत्वा स्विष्टकृतं पुनः।
प्रस्तरात्तु चरुस्थालीमुद्वास्य कलशाग्रतः ।। ११२ ।।

होमशेषं समाप्याथ प्रणीताब्भस्मसंयुतम्।
सम्पातं कलशे प्रोक्ष्य पावकस्याग्रतो भुवि ।। ११३ ।।

सशमीदलदर्भेषु जलदानपुरस्सरम्।
हुतशिष्टान्नतोयाभ्यां शन्नो देव्या बलिं हरेत् ।। ११४ ।।

पात्रान्तरेऽपनीयाथ पुनःस्थालीगतं हविः।
पुनः संक्षाल्य तत्स्थालीं सम्पाताब्भस्मसंयुतम् ।। ११५ ।।

तच्छँय्योरादिना कुम्भं तज्जलैः प्रोक्षयेत् त्रिशः।
मूलेनेष्ट्वाथ कलशं हुतमन्त्रांस्ततो जपन्। ११६ ।।

तेनाभिषिच्य देवेशं पूजयेत् कल्पवर्त्मना।
प्रातःकाले तु कर्तव्या शान्तिरेषागरीयसी ।। ११७ ।।

प्रायोविनाश इत्युक्तं चित्तं सन्धानमुच्यते।
प्रायश्चित्तपदस्यैवं निरुक्तिः कथिताबुधैः ।। ११८ ।।

नश्यत्यनेन दोषौघः सन्धत्ते चित्कलायतः।
प्रायश्चित्ताभिधा तस्मात् कर्मणोऽस्य समीरिता ।। ११९ ।।

शिवाग्नौ द्वैतरूपस्य समिदाज्यादिवस्तुनः।
समर्पणं तु होमः स्यादनेनाप्यायितात्मना ।। १२० ।।

युक्ता चिदुन्मिषत्त्यक्ता विगलद्दोषमीशितुः।
तत्त्वहोमं ततः कुर्यादाचार्यस्त्वग्रमण्डपे ।। १२१ ।।

उत्पाद्य वह्निसदनं चतुरश्रं सुशोभनम्।
जनयित्वा विधानेन तत्र वैश्वानरं ततः ॥ १२२ ॥

स्वशाखोदितमार्गेण समारभ्य हुतक्रियाम्।
परिधिस्थापनात् पूर्वं तस्य दक्षिणतोऽम्बुजे ॥ १२३ ॥

पीठमास्तीर्य विधिवत् पीठपूजां विधाय च।
अस्त्रेण क्षालितं वर्म मनुनासूत्रवेष्टितम् ॥ १२४ ॥

मूलेन गन्धसंलिप्तमादिना धूपितं घटम्।
संसाद्य पीठे मूलेन न्यग्बिलं शोषणादिभिः ॥ १२५ ॥

संस्कृत्याभ्यर्च्यमूलेन कृत्वा चोत्तानतामपि।
कूर्चरत्नसुवर्णानि न्यस्यापूर्य धिया पुनः ॥ १२६ ॥

गालिताम्बुभिरापूर्य मूलेनावाह्य पूजिते।
लिपिपङ्कजमाराध्य मूर्त्यावाहनपूर्वकम् ॥ १२७ ॥

तत्त्वान्येकैकमावाह्य शिवादिक्षितिपश्चिमम्।
पञ्चतत्त्वेश्च मूलेन समावाह्य महेश्वरम् ॥ १२८ ॥

लिपितत्त्वमनू न्यस्य साङ्गावरणमर्चयेत्।
निवेद्यमथ कृत्वास्मै प्रसन्नार्चां विधाय च ॥ १२९ ॥

परिधिन्यसनाद्यग्निसपर्यान्तं विधाय च।
पीठमग्नौ समाराध्य देवमावाह्य पूजयेत् ॥ १३० ॥

इध्माघाराज्यभागांश्च हुत्वा पीठाणुभिर्घृतम्।
पक्वं हुत्वार्चनामन्त्रैः घृतं हुत्वा सकृत् सकृत् ॥ १३१ ॥

पूर्णां दत्त्वाथ कलशे सम्पाताज्यं निषिच्य च।
षड्त्रिंशद्भिस्तथा पञ्चतत्त्वैर्हुत्वा प्रतीपगैः ।। १३२ ।।

पूर्णां दत्त्वा[1] प्रविश्यान्तस्तत्सम्पातसमन्वितम्।
पीठं सम्पूज्य देवेशमावाह्य सकलीक्रियाम् ।। १३३ ।।

विधाय स्नानवेलायां सम्पाताज्यं हुतक्रमात्।
तत्त्वमन्त्रैस्तु संस्पृश्य पुष्पाञ्जलि पुरस्सरम् ।। १३४ ।।

सम्प्रार्थ्य सृष्टिममुतो लब्धानुज्ञोऽग्रतः स्थितः।
पुष्पाञ्जलिं त्रिशः कृत्वा देवबिम्बे बहिर्गतः ।। १३५ ।।

उपविश्याग्रतो वह्नेः पुष्पपूरं त्रिशः किरेत्।
बिम्बे च वह्नौ कलशे संस्मरन्नेकरूपताम् ।। १३६ ।।

प्रासादकुण्डकुम्भानां बिम्बपावकपाथसाम्।
तद्गतानां चितां धीमान् त्रितयानां क्रमेण तु ।। १३७ ।।

हुत्वाज्यमथ मूलेनसृष्ट्यौन्मुख्याधियाष्टशः।
जुहुयादथतत्त्वैश्च शिवादिक्षितिपश्चिमैः ।। १३८ ।।

वह्न्यादिमण्डलैराज्यस्तथा हृत्पुण्डरीकतः।
अष्टोत्तरशतं यद्वा अष्टाविंशतिशोऽथवा ।। १३९ ।।

अष्टशो वा पृथक् पूर्णां सङ्ख्यान्ते सर्वतश्चरेत् ।
पञ्चविंशतिमारभ्य पञ्चविंशोत्तरंशतम् ।। १४० ।।

यद्वा पञ्चाशदारभ्य तद्युक्तं द्विशतं तथा।

1. 'हुत्वा' क।

शतं यद्वा समारभ्य हुनेत् पञ्चशतावधि ।। १४१ ।।

उत्तरोत्तरभूयिष्ठं पञ्चतत्त्वैः सपूर्णकम्।
एवंव्यञ्जिततत्त्वस्य समृद्धमहसः प्रभोः ।। १४२ ।।

अस्यैव पीठतां याति प्रकृतिस्त्रिगुणात्मिका।
तथास्य परमा शक्तिः पञ्चमूर्तित्वमागता।। १४३ ।।

तमेवावृणुते पूर्वमिच्छाशक्तिस्ततो बहिः।
षडङ्गत्वं समापन्ना ज्ञानशक्तिस्ततो बहिः ।। १४४ ।।

विद्येश्वरत्वमापन्ना क्रियाशक्तिस्ततो बहिः।
उमाचण्डादिरूपेण क्षमाद्या अष्टमूर्तयः ।। १४५ ।।

आवृण्वन्ति च तद्बाह्ये लोकपालत्वमागताः।
तच्छक्तयश्च तद्बाह्ये तदस्त्रत्वं समागताः ।। १४६।।

यथाम्बुधेर्वीचिमाला तथा भेदमुपागताः।
यथाग्नेर्विष्फुलिङ्गानि तथा देवात् समुद्गताः ।। १४७ ।।

स्वं स्वं पदं श्रयन्तेऽन्तर्बहिर्नन्द्यादि पार्षताः।
गुर्वाद्यैस्तु समष्ट्यन्तैरीशाद्यैश्चण्डपाश्चिमैः ।। १४८ ।।

नन्द्यान्द्यैः क्षेत्रपालान्त्यैरेवं निध्याय शान्तधीः।
सकृत्सकृद् घृतं हुत्वा पूर्णामन्ते प्रदापयेत् ।। १४९ ।।

अथ हुत्वा चतुर्द्रव्यं मूलेनाष्टोत्तरं शतम्।
अष्टाविंशतिसंख्यं वा पृथक् पूर्णासमन्वितम् ।। १५० ।।

समिदाज्यचरुँल्लाजान् सर्षपांश्च यवांस्तिलान्।

सर्पिद्रव्याण्येवमष्ट हुनेद्यद्वासपूर्णकम् ।। १५१ ।।

होमशेषं समाप्याथ सम्पातं कलशेऽर्प्य च।
उद्वास्य वह्निगं देवं कलशेऽग्निं विसर्जयेत् ।। १५२ ।।

तत्त्वानि न्यस्य कलशम् इष्ट्वा रक्षां प्रकल्पयेत्।
नववासाः सोत्तरीयः सपवित्रकरस्ततः ।। १५३ ।।

नान्दीमुखादिकं कृत्वा घटं सन्धार्य यत्नतः।
सोत्तरीयेण शिष्येण नीराजनपुरस्सरम् ।। १५४ ।।

अन्तः प्रवेश्य कलशं शङ्खभेर्यादिनिस्वनैः।
त्रिवारं न्यस्य तत्त्वानि देवबिम्बे समाहितः ।। १५५ ।।

नीराज्य देवं संस्नाप्य त्रिशस्तत्त्वानि सञ्जपन्।
ततः पुष्पाञ्जलिं कृत्वा त्रिशस्तत्वानि विन्यसेत् ।। १५६ ।।

मूलार्णैः सकलीकृत्य समभ्यर्च्य महद्धविः।
निवेद्य हुत्वा दत्त्वा च बलिमन्तः प्रविश्य च ।। १५७ ।।

प्रसन्नार्चां विधायाथ देवदेवं क्षमापयेत्।
एवं विकसिते तत्त्वे प्रकटीकृतवैभवे ।। १५८ ।।

परेमहसि स्नपनविधिः कर्तव्य परिपूर्णशिवस्वरूप समवाप्त्यै।

एवं कृताभिषेकायां विकसत्तत्त्वजालके।
प्रवर्धमानमहसि कर्तव्यमभिषेचनम् ।।

।। इति कलशचन्द्रिकायां शिवभागे द्वितीयपटलः समाप्तः ।।

# कलशचन्दिकायां शिवभागः
# तृतीयः पटलः

अथ मण्डपसंस्कारं कुर्याद्देशिकसत्तमः।
कलशार्चा तु कर्तव्या संस्कृते मण्डपे यतः ।। १ ।।

कलशस्यानुरूपेण पूर्वमेव तु मण्डपम्।
कारयेत् तक्षकवरैः सुदृढं लक्षणान्वितम् ।। २ ।।

सयोन्यायव्ययवयोनक्षत्राद्यैस्तु लक्षणैः।
लक्षितव्या अपि प्रायः प्राधान्याद् योनिरुच्यते ।। ३ ।।

साष्टाङ्गुलंप्रपाहस्तः काव्यहस्तवृतस्तथा।
मण्डपौ वृषकेतूस्तः कलशे पञ्चविंशतौ ।। ४ ।।

सस्वराङ्गुललङ्कादोर्मायाहस्तवृतस्तथा।
ध्वजर्षभौ तु सम्प्रोक्तावेकोवार्धशते घटे ।। ५ ।।

साष्टाङ्गुलतपोहस्तस्सद्व्यष्टाङ्गुलसायदोः।
एकाशीतौ केतुवृषयोनी प्रोक्तौ च मण्डपौ ।। ६ ।।

सस्वराङ्गुलपुत्रीदोस्साष्टाङ्गुल नरावृतः।
प्रोक्तावष्टशते केतुवृषयोनी च मण्डपौ ।। ७ ।।

साष्टाङ्गुलवराहस्तौ गुरुहस्तवृतस्तथा।
ध्वजर्षभौ शते प्रोक्तौ सैकोनार्धशते घटे ।। ८ ।।

विकृत्यङ्गुलयुङ्मारहस्तस्सारकरावृतः।
मण्डपौ वृषकेतूहि कीर्तितौ द्विशते घटे ।। ९ ।।

सस्वराङ्गुलधारादोस्साष्टाङ्गुलकरावृतः।
स्यातां ध्वजवृषौ सत्रिपञ्चाशद्विशते घटे ।। १० ।।

अष्टाङ्गुलोपेतरङ्गहस्तः पङ्गुकरावृतः।
ध्वजर्षभौ समाख्यातौ कलशे त्रिशतात्मके ।। ११ ।।

साष्टाङ्गुलनभोहस्तो झिल्लिहस्तवृतस्तथा।
ध्वजर्षभौ समाख्यातौ क्रमात् पञ्चशते घटे ।। १२ ।।

साष्टाङ्गुलतमोहस्तः शमीह्स्तवृतस्तथा।
सहस्रकलशे केतुवृषयोनी प्रकीर्तितौ ।। १३ ।।

द्रव्यावृर्तिविधौ तद्वत् कर्पूरप्रमुखादिषु।
हस्ते त्रिपुटमानेन कारयेन्मण्डपं सुधीः ।। १४ ।।

एषामेव तु हस्तानामष्टाष्टकरयोगतः।
बाह्यावृतेः प्रमाणंस्यात् क्रमात् प्रोक्तास्तुमण्डपाः ।। १५ ।।

देवे पूर्वमुखे केतुः पश्चिमाभिमुखे वृषः।
एष्वेकं कारयित्वेष्टं दृढं सञ्छाद्य सर्वतः ।। १६ ।।

वितानैरूर्ध्वमाच्छाद्य वस्त्रैः स्तम्भान् प्रवेष्ट्य च।
कुण्डान्यलिन्दभागे तु दिक्ष्वष्टासु प्रकल्पयेत् ।। १७ ।।

चतुरश्रं भगाकारं धनुर्वक्रं त्रिकोणकम्।
वृत्तं षडश्रं पद्माभमष्टकोणं यथाक्रमम् ।। १८ ।।

होमानि पञ्च चेत् कुर्याद् दिक्कुण्डानि च कोणतः।
तुर्यश्रमेकं नागे तु वेदिमादर्शसम्मिताम् ।। १९ ।।

स्नात्वाचार्यः समाचम्य मण्डपद्वारमागतः।
सास्त्रौजसा दृशा वीक्ष्य भूतसङ्घमपास्य च ।। २० ।।

प्रविश्यान्तः परिक्रम्य समासीनो वरासने।
विहितात्मसपर्यस्तु समर्चितगणाधिपः ।। २१ ।।

वेद्यां नैर्ऋतदिग्भागे शाङ्कर्यामथवा दिशि।
सूत्रादिविकिरान्तानि सादयेच्च यथापुरम् ।। २२ ।।

जपार्चनादिसंस्कारान् कृत्वा तेषां तु पूर्ववत्।
उद्वास्य तु गणेशानं नियतात्मा शिवस्मरन् ।। २३ ।।

धेनुं प्रदाय विप्राय गृहीत्वा सूत्रमालिके।
प्रधानद्वारमार्गेण बहिर्निर्गत्य वर्मणा ।। २४ ।।

अस्त्रेण नीप्रेसंवेष्ट्य ताभ्यां शर्वदिगादिकतः।
यद्वा व्यस्तसमस्तेन प्रणवेन तदान्तिमम् ।। २५ ।।

पूर्वद्वारी प्रत्यगास्य उपविश्याथ गर्तयोः।
अपनीयास्त्रमनुना मृदं समुपलिप्य च ।। २६ ।।

न्यस्य दर्भाक्षतान् पीठम् मनागभ्यर्च्य तोरणम्।
संक्षाल्य योगे योगेति पादाभ्यां योजयेद् च ।। २७ ।।

देवस्यत्वेति शूलानि स्थापयेत् तस्य मूर्धनि।
तद्देवतामन्त्रनिष्ठं संस्थाप्योत्तिष्ठमन्त्रतः ।। २८ ।।

गर्तद्वयं समापूर्य समावाह्यात्र देवताम्।
साङ्गीकृत्य च तारेण साङ्गं सम्पूज्य तं पुनः ।। २९ ।।

निवेद्य च प्रसन्नार्चां कृत्वा रक्षां समाचरेत्।
दक्षिणे पश्चिमे द्वारि सौम्ये चैवं समाचरेत् ।। ३० ।।

सप्लक्षौदुबरवटपिप्पलैस्तोरणानि तु।
प्रमोदाभयशान्ताख्यमहान्तस्तोरणेश्वराः ।। ३१ ।।

तोरणान्तर्ध्वजाः स्थाप्या दिक्ष्वष्टास्वपि मध्यतः।
पताकापल्लवस्रग्भिर्भूषितो वैणवा दृढाः ।। ३२ ।।

पीठमभ्यर्च्य गर्त्तेषु संस्थाप्य स्वस्वनामभिः।
तैः समावाह्य ताराङ्गैः सकळीकृत्य पूजयेत् ।। ३३ ।।

भृङ्गीशः कार्तिकेयश्च वृषो नन्दीश्वरस्तथा।
महाकाळस्तथा ज्ञेयः कुम्भीदरमहोदरौ ।। ३४ ।।

वीरभद्रेश्वरः पश्चान्मध्यस्थो ब्राह्मदैवतः।
ऐशान्यामेव मध्यस्थ ध्वजस्य स्थानमिष्यते ।। ३५ ।।

अरुणोऽग्निनिभः कृष्णो धूम्रश्वेतश्शिरीषभाः।
पीतः पाण्डुः शितिर्मध्ये ध्वजवर्णाः प्रकीर्तिताः ।। ३६ ।।

बलिना तोषयित्वाथ तोरणध्वजदेवताः।
देवासुरग्रहादींश्च विशेदाचम्य मण्डपम् ।। ३७ ।।

ततः स्वस्तिकपीठस्थे कलशेष्वर्चयेदिमान्।
पूर्वादिद्वारपार्श्वेषु दक्षसव्यक्रमात् गुरोः ।। ३८ ।।

महोदरमहाकायौ पूर्वद्वारि निवेशितौ।
महाकण्ठमहोरस्कौ दक्षिणद्वारपार्श्वगौ ।। ३९ ।।

अग्निजिह्वोऽग्निनेत्रश्च पश्चिमद्वारपालकौ।
उत्तरस्यां विरूपाक्षविशालाक्षौ च संस्थितौ ।। ४० ।।

अथार्गलाधस्संस्थेषु कलशेष्वर्चयेन्नदीः।
सहस्रवीचीविमला शतधारा प्रमोदिनी ।। ४१ ।।

द्वाराधीशाश्च सम्पूज्या द्वारेषु च यथाक्रमम्।
कुम्भकर्णश्वेतकर्णौ भद्रकर्णस्तथापरः ।। ४२ ।।

गोकर्णश्चेति निर्दिष्टाः क्रमात् तद्वारदेवताः।
ताराद्यं देवतानाम चतुर्थ्यन्तं समुद्धरेत् ।। ४३ ।।

नमोन्तमेवं सम्प्रोक्ता देवतामनवः क्रमात्।
अथ पूर्वादिशर्वान्तं मुष्ट्याद्यैः शोधयेत् क्रमात् ।। ४४ ।।

साग्न्यालयं वेदितलं कुसुमाक्षतपश्चिमे।
ततो मण्डपमध्येतु पीठं सम्पूज्य शाङ्करम् ।। ४५ ।।

आवाह्य शक्ति बीजेन सकळीकृत्य पूजयेत्।
इन्द्रादीनपि दिक्ष्वष्टौ लोकपालान् समर्चयेत् ।। ४६ ।।

उत्तानपाणियुग्मेन गृहीत्वा विकिरोत्करम्।
प्राङ्मुखो विकिरेत्तिष्ठन त्रिशः पाशुपतास्त्रतः ।। ४७ ।।

मध्यदक्षिणसौम्याख्यं क्रमो विकिरणे स्मृतः।
विन्यस्य धारशक्त्यादिन् मध्ये वेदितलं गुरुः ।। ४८ ।।

स्तम्भमूलेषु धर्मादीनधर्मादींश्च वंशगान्।
विन्यस्य रज्जुषु गुणान् मायाविद्ये वितानगे ।। ४९ ।।

शिष्टमन्त्रान् भुविन्यस्य रक्षामस्त्रेण कल्पयेत्।
विकिरानपि सिद्धार्थान् मार्जनेन समार्जितान् ।। ५० ।।

सशेषमीशे संरक्ष्य प्रोक्षयेन्मण्डपोदरम्।
ऐशान्यां धान्यराशिस्थं क्षालितं धूपितं महत् ।। ५१ ।।

पात्रं विन्यस्य पीठर्च्चा पूर्वं संस्कृतमंभसा।
गालितेनाथ सम्पूर्य शोषदाहामृतीक्रियाः ।। ५२ ।।

विधायावाह्य वरुणं तीर्थावाहनसंयुतम्।
तारेण सकळीकृत्य मूलेनावाह्य पूजयेत् ।। ५३ ।।

जप्त्वेमा आप इत्यादि मनुं रक्षां समाचरेत्।
अथ वेदिबहिर्भागे शार्वेष्टदलपङ्कजे ।। ५४ ।।

सम्यक् कल्पितशाल्यादिपीठे कुम्भेशमर्चयेत्।
तद्दक्षिणे कर्करीं च यजेत् स्वस्तिकपीठगाम् ।। ५५ ।।

अभ्यर्च्य विधिवत् पीठं क्षालितं सूत्रवेष्टितम्।
धूपितं गन्धलिप्तं च पीठेस्मिन्यग्बिलं घटम् ।। ५६ ।।

न्यस्त्वा तारेण संप्रोक्ष्य सङ्कुर्याच्छोषणादिभिः
आपोहिष्ठादिभिः प्रोक्ष्य पञ्चतत्त्वैः त्रिभिः क्रमात् ।। ५७ ।।

दर्भन्यसनगन्धाम्भः प्रोक्षणं चाक्षतार्पणम्।
कृत्वा ध्रुवेण सम्पूज्य तुर्येणोत्तानतां नयेत् ।। ५८ ।।

अन्त्येनोदधृत्यतारेण स्थापयित्वाथ मूलतः।
गन्धपुष्पाक्षतयुतं कूर्चं कुम्भे प्रविन्यसेत् ।। ५९ ।।

प्रणवेनाथ सम्पूज्य तेजस्त्रयकला न्यसेत्।
कुम्भस्य मूलमध्योर्ध्व भागेष्वथ च पूजयेत् ।। ६० ।।

तारशक्त्यजपास्सोऽहं स्वाहान्तं सम्यगुच्चरन्।
न्यस्य रत्नयुतं स्वर्णं तेनैव मनुनार्चयेत् ।। ६१ ।।

विधाय मानसीं पूर्त्तिं शङ्खमापूर्य पाथसा।
वारुणेनाष्टगन्धं च विलोड्य न्यस्य चाक्षतम् ।। ६२ ।।

तस्मिन्नावाह्य मूलेन साङ्गीकृत्याथ मातृकाम्।
प्रतिलोमतयोच्चार्य मूलमन्त्रं त्रिशोजपन् ।। ६३ ।।

निषिञ्चेत् कलशे भूयः सावकाशं प्रपूरयेत्।
लिपिपद्मं समभ्यर्च्य मूर्त्तिमावाह्य पूजयेत् ।। ६४ ।।

कृत्वा कलावाहनां च विद्यादेहमथार्च्चयेत्।
आत्मविद्या शिवाख्यानि तत्वानि प्रणवांशकैः ।। ६५ ।।

निजाधारान् समावाह्य मूलहृन्मूर्धसु क्रमात्।
न्यस्त्वादिना सर्वतत्त्वं व्याप्तं विन्यस्य पूजयेत् ।। ६६ ।।

ततः पाशुपतास्त्रेण सम्पूर्य च गलन्तिकाम्।
तयोर्विन्यस्य माकन्दबोधिपल्लवचक्रिके ।। ६७ ।।

पुनरावाह्य मूलेन न्यासजातं विधाय च।
दत्त्वोपचारानभ्यर्च्य कर्करीमस्त्रमन्त्रतः ।। ६८ ।।

जपेन्मूलमनुं साष्टशतमस्त्रमनुं तथा।
एवं कुम्भेशमभ्यर्च्य रक्षामस्त्रेण कल्पयेत् ।। ६९ ।।

अथ नागपदस्थे तु कुण्डे वैश्वानरं गुरुः।
पूर्ववज्जनयित्वा च तस्य रक्षां समाचरेत् ।। ७० ।।

अग्निसंस्कारकाले तु वक्त्रेणाष्टशतं घृतम्।
हुत्वा सम्पातमादाय योजयेत् कुम्भसंस्कृतौ ।। ७१ ।।

अथ शिष्यास्त्रमन्त्रेण करकोदकधारया।
प्रदक्षिणक्रमणवान् भित्तिमूलं समुक्ष्य च ।। ७२ ।।

सर्षपोपरि विन्यस्येत् स्वस्थाने संयतेन्द्रियः।
स्वयं कलशमादाय तत्पृष्ठे देशिकस्तथा ।। ७३ ।।

मूलजापी परिभ्रम्य विकिरान्मार्ज्जनार्ज्जितान्।
निजपीठे विकीर्यास्मिन् कुम्भराजं प्रविन्यसेत् ।। ७४ ।।

ततस्तत्वानि सम्पूज्य प्राग्वदाधारमण्डले।
पुनरावाह्यमूलेन कुम्भेशं विधिवद् यजेत् ।। ७५ ।।

आपूर्य गाळितोदेन कर्करी मन्त्रतो यजेत्।
वस्त्रयुग्मेन संवेष्ट्य घटमेकेन चेतरम् ।। ७६ ।।

निवेद्यमुभयोः कृत्वा प्रसन्नार्चां समाचरेत्।
एवं कुम्भेशमभ्यर्च्य रक्षामस्त्रेण कल्पयेत् ।। ७७ ।।

अथ संक्षेपतो वक्ष्ये लिपिपङ्कजपूजनम्।
क्षादिशान्तैः प्रतिगतैः षड्भिर्बिन्दुसमान्वितैः ।। ७८ ।।

यजेन्मूर्तिशिफानालसरः कण्डकरन्ध्रकम्।
वादियान्तैस्तु धर्मादिग्रन्थीनां तु चतुष्टयम् ।। ७९ ।।

नपुंसकार्णैरधर्मग्रन्थ्यादीनां चतुष्टयम्।
काद्यैस्त्रिभिस्त्रिभिर्वर्णैः पूर्वाद्यं तु दलाष्टकम् ।। ८० ।।

आद्यैः क्रमात् ह्रस्वदीर्घैः सर्गबिन्दुसमन्वितैः।
द्विद्व्यर्णसंयुतैः पूर्वकेसराद्यष्टकं यजेत् ।। ८१ ।।

मकारः कर्णिकाबीजमात्मविद्या शिवक्रमात्।
उपर्युपरितारांशैस्तत्त्वत्रितयमर्चयेत् ।। ८२ ।।

विन्द्वादयस्तु चत्वारस्सहशक्तिध्रुवादिकाः।
बीजं नमश्शिवायेति मूर्त्याद्यास्त्वात्मने युताः ।। ८३ ।।

नमोन्तामनवः प्रोक्ता लिपिपङ्कजमीरितम् ।

।। इति कलशचन्द्रिकायां शिवभागे तृतीयपटलः समाप्तः ।।

# कलशचन्दिकायां शिवभागः
# चतुर्थः पटलः

अथ सम्प्रोक्ष्य तद्वेदिमापोहिष्ठादिभिस्त्रिभिः
कलशस्यानुरूपेण पदानि परिकल्पयेत् ।। १ ।।

वक्ष्येऽहं कलशान् पञ्चविंशति द्रव्यकल्पितान्।
द्रव्यावर्ति विधानेन तन्त्रशास्त्रेषु चोदितान् ।। २ ।।

तैलाद्यैरपि कर्पूरप्रमुखैरपि संयुतान्।
पञ्चविंशतिमारभ्य सहस्रान्तं यथाक्रमम् ।। ३ ।।

नवकं सप्तकोष्ठेऽन्तस्त्रीण्येकं दिग्विदिक्षु च।
शिष्टानि मार्ज्जयेद्विद्वान् पदानि परितः क्रमात् ।। ४ ।।

रचयेत् पङ्कजं मध्ये नवके पञ्चवर्णकैः।
तत्राष्टौ दलगाः कुम्भाः कर्णिकायां महाघटः ।। ५ ।।

क्षेत्रे नवपुटे मध्ये पञ्चकृत्याम्बुजं भवेत्।
बहिर्द्विपदपार्श्वेषु मार्ज्जयित्वा पदाष्टकम् ।। ६ ।।

दिक्कोणेष्वन्तरालेषु पदमेकैकमर्पयेत्।
यद्येवं पदविन्यासः केवले पञ्चविंशतौ ।। ७ ।।

एकादशपुटे मध्ये पञ्चकृत्याम्बुजं लिखेत्।
चतुष्कोणे चतुष्कं च तेषां मध्ये द्विकत्रयम् ।। ८ ।।

एकहीनशतार्धे तु पदानामिति कल्पना।
यद्वा रुद्रपुटे क्षेत्रे मध्ये तन्नवभिः पदैः ।। ९ ।।

दिक्षुत्रिकंविदिक्ष्वैकं अन्तर्बाह्ये च कल्पयेत्।
एकैकमन्तराले च दलेष्वष्टघटान् न्यसेत् ।। १० ।।

पद्मं द्वादशकोष्ठेऽन्तश्चतुर्भिः परिकल्पयेत्।
द्विकान्येकं च दिक्कोणेष्वन्तर्बाह्येऽष्टदिक्ष्वपि ।। ११ ।।

चतुष्टयान्यन्तराले द्विकान्यष्टौप्रकल्पयेत्।
पूर्वपश्चिमयोर्याम्यमाल्यं दक्षिणसौम्ययोः ।। १२ ।।

द्रव्यैस्सम्पूरयेदन्तर्द्विकान् बाह्ये चतुष्टयान्।
एकषष्टिमितैः कुम्भैरेवं स्नानं प्रकीर्तितम् ।। १३ ।।

त्रयोदशपुटे पद्मं पञ्चविंशतिभिर्लिखेत्।
कोणेषु नवकान्येषां मध्ये त्रीणि त्रिकाणि च ।। १४ ।।

एकाशीतिघटेष्वेवं पदक्लृप्तिः प्रकाशिता।
षट्कं चतुष्कदिक्कोणेष्वन्तरालेद्विकाष्टकम् ।। १५ ।।

बाह्येऽन्तस्त्रिकमेकं च मध्ये नवघटान् न्यसेत्।
एकाशीतौ पदविधिः क्षेत्रेऽस्मिन्नेवमेव वा ।। १६ ।।

चतुर्दशपुटे वीथ्यश्चतस्रोमार्जयेत् क्रमात्।
पञ्चविंशश्चतुष्काणि कृत्वा सम्पूज्य युक्तितः ।। १७ ।।

लिखेत् पद्मं चतुष्केषु दिग्भवेषु घटान् न्यसेत्।
केवलेन शतेनैवं स्नपयेद् वा महेश्वरम् ।। १८ ।।

नवभिः पङ्कजं मध्ये त्रिकं दिक्ष्वेकमन्यतः
दिक्कोणेष्वन्तरा बाह्ये नवकं चाष्टकंत्रिकम् ।। १९ ।।

मानुषावरणे कोणे नवकेषु मृजेत् क्रमात्।
वाय्वीशानलरक्षस्थं पदानां तु चतुष्टयम् ।। २० ।।

क्षेत्रे मान्यपुटे प्रोक्तो नवोन्तरशते विधिः।
क्षेत्रे साकपुटे मध्ये नवकोष्टैरथाम्बुजम् ।। २१ ।।

दैविकेत्रिकमेकं च दिक्कोणेष्वथ बाह्यतः ।
नवकं दिक्षु कोणेषु कल्प्यं षोडशकं क्रमात् ।। २२ ।।

तदन्तरे त्रिकाण्येव सैकोनार्धयुतेशते।
क्षेत्रेस्मिन् नवभिः पद्मं त्रिकमेकं च दैविके ।। २३ ।।

दिक्षु द्वादशकं बाह्ये कोणे षोडशकानि च।
चतुष्टयान्यन्तराले सैकषष्टिशतेऽर्पयेत् ।। २४ ।।

विंशत्सूत्रे बहिष्षट्कचतुष्काण्यन्तराष्टकम्।
अष्टद्वादशकान्यन्तः नवकेऽब्जं शतद्वये ।। २५ ।।

क्षेत्रे धान्यपुटे मध्ये नवभिः पङ्कजं लिखेत्।
षट्कं चतुष्कदिक्कोणेष्वन्तस्तत्बाह्यके क्रमात् ।। २६ ।।

कृत्वा द्वादशकं दिक्षु कोणे षोडशकं तथा।
तदन्तरालेऽष्टकानि कुर्यादष्ट यथाक्रमम् ।। २७ ।।

एवं सप्तदशोपेतं शतद्वयमुदीरितम्।
क्षेत्रेऽस्मिन्नेव नवभिः मध्ये पङ्कजमालिखेत् ।। २८ ।।

दिक्षु द्वादशकं कोणेष्वन्तष्षोडशकं तथा।
बाह्ये षट्कं चतुष्कं च दिक्कोणेष्वन्तराष्टकम् ।। २९ ।।

पूर्वोदितं तु कलशमेवं वा परिकल्पयेत्।
क्षेत्रे धान्यपुटे यद्वा नवकानि प्रकल्प्य च ।। ३० ।।

पञ्चविंशतिसंख्यानि मध्ये दलघटान्वितम्।
पञ्चविंशोत्तरन्त्वेवं शतद्वयमुदीरितम् ।। ३१ ।।

क्षेत्रे पात्रपुटे मध्ये नवकेऽब्जं प्रकल्पयेत्।
दैविके नवकान्यष्टदिक्षु द्वादशकत्रयम् ।। ३२ ।।

बाह्ये कोणेषु नवकान्येवं पदविधिः स्मृतः।
शतद्वये त्रिपञ्चाशदुत्तरे शास्त्रकोविदैः ।। ३३ ।।

यद्वा पात्रपुटे पञ्चविंशद्भिर्मध्यतोऽम्बुजम्।
दशकं दिक्षुकोणेषु चतुष्काण्यन्तरर्पयेत् ।। ३४ ।।

बाह्ये षोडशकानिस्युर्दिक्कोणेष्वन्तराष्टकम्।
मध्ये दिग्दलविन्यस्तैश्चतुर्भिः कलशैस्सह ।। ३५ ।।

शतद्वयं त्रिपञ्चाशदुत्तरं परिकीर्तितम्।
यद्वा पात्रपुटे मध्ये नवभिः पङ्कजं लिखेत् ।। ३६ ।।

दैविके नवकान्यष्ट मध्ये दलघटान्वितम्।
नवकत्रितयं दिक्षु कोणे षोडशकं बहिः ।। ३७ ।।

एवं पदानां विन्यासस्त्रिपञ्चाशच्छतद्वये।
दिक्कोणेष्वन्तराले च कृत्वा द्वादशकं बहिः ।। ३८ ।।

दैविके नवकान्यष्ट तेषु कोणशतानि तु।
पञ्चकानि प्रकलप्यान्तर्दिक् पत्रघटसंयुतम् ।। ३९ ।।

त्रिपञ्चाशच्छतद्वन्द्वमेवं वा परिकल्पयेत्।
कृत्वा गोत्रपुटे पञ्चविंशद्भिर्मध्यतोऽम्बुजम् ।। ४० ।।

दशकं दिक्षु कोणेषु त्रिकमन्तर्बहिर्दिशि।
पञ्चविंशतिकानिस्युः कोणेसप्तदशार्पयेत् ।। ४१ ।।

दशकान्यन्तराले तु सैकं त्रिशतमीरितम्।
पञ्चविंशतिभिर्मध्ये कृत्वा मित्रपुटेऽम्बुजम् ।। ४२ ।।

दिशासु नवकं कृत्वा विदिशास्वन्तराष्टकम्।
विधाय सप्तदशकं दिक्ष्वष्टासु तदन्तरा ।। ४३ ।।

कुर्याद् द्वादशकं सैकत्रिशते वा पदार्पणम्।
कुर्यान्मित्रपुटे मध्ये पङ्कजं नवभिः पदैः ।। ४४ ।।

अष्टद्वादशकानिस्युः दैविकावरणे बहिः।
दिशासु पञ्चदशकं कोणे सप्तदशार्पयेत् ।। ४५ ।।

अन्तराले तु सर्वत्र कुर्याद् द्वादशकानि तु।
एकविंशति संयुक्तं शतत्रयमुदीरितम् ।। ४६ ।।

क्षेत्रे धीरपुटे पद्मं पञ्चविंशतिभिर्लिखेत्।
दैविके सप्तदशकान्यष्ट दिक्षु प्रकल्पयेत् ।। ४७ ।।

कोणेषु सप्तदशकं बहिस्तेषां तु मध्यतः।
पञ्चविंशतिकान्येव त्रीणि त्रीणि प्रकल्पयेत् ।। ४८ ।।

पञ्चोत्तरे पञ्चशते त्वेवमुक्तं पदार्पणम्।
यद्वा धीरपुटे पञ्चविंशतिभिर्मध्यतोऽम्बुजम् ।। ४९ ।।

दैविके सप्तदशकं दिक्ष्वष्टासु प्रकल्पयेत्।
कोणेषु सप्तदशकं बाह्ये तद्वत् प्रकल्पयेत् ।। ५० ।।

पञ्चविंशतिकान्येषां त्रीणि त्रीणि तदन्तरा।
दलाष्टक प्रविन्यस्त घटाष्टकसमन्वितम् ।। ५१ ।।

एवं पञ्चशतं प्रोक्तं त्रयोदश घटोत्तरम्।
यद्वा धीरपुटे क्षेत्रे दिग्विदिक्ष्वन्तरा बहिः ।। ५२ ।।

पञ्चविंशतिकानि स्युः मध्ये सप्तदशैव तु।
एवं पञ्चशतं प्रोक्तं सप्तत्रिंशत् घटोत्तरम् ।। ५३ ।।

यद्वा धीरपुटे मध्ये पञ्चविंशाभिरम्बुजम्।
दैविके दिक्षुकोणेषु बाह्ये दिग्विदिगन्तरा ।। ५४ ।।

पञ्चविंशतिकान्यत्र चतुर्विंशति कल्पयेत्।
दलाष्टघटासंयुक्तं यद्वा दलघटैर्विना ।। ५६ ।।

सैकं षट्च्छतमाख्यातं नवोत्तरमथापि वा।
क्षेत्रे झिंल्लिपुटे वीथिस्सप्तसप्तपुटान्तरे ।। ५७ ।।

प्रागाग्रा उत्तराग्राश्च चतस्रः कल्पयेत् पृथक्।
मध्येऽन्तर्दिक्षुकोणेषु बाह्ये दिग्विदिगन्तरा ।। ५८ ।।

खण्डान्येकोनपञ्चाशत् पदभाज्जि भवन्ति च।
मध्येऽब्जं पञ्चविंशद्भिः वीथ्यां शिष्टानियोजयेत् ।। ५९ ।।

अन्येषामपि मध्येऽथ नवभिः पङ्कजं लिखेत्।
चत्वारिंशत्पदानि स्युः तेषु बाह्यावृतिद्वये ।। ६० ।।

चतुर्विंशतिखण्डेषु घटाष्षोडश दैविके।
सचतुर्विंशतिर्बाह्येऽथान्तरालघटेष्विह ।। ६१ ।।

दिक्कुम्भपार्श्वगान् पूर्वं पूरयेदुद्धरेत् सुधीः।
बाह्यावृतौ दिक्कमलदिक्पत्रस्यघटैर्युतम् ।। ६२ ।।

सहस्रमेकसंयुक्तमेवं सम्यक् प्रदर्शितम्।
कलशानामथैतेषां पूरणोद्धारसंयुतम् ।। ६३ ।।

द्रव्याणि तद्देवताश्च स्नानमन्त्रान् वदाम्यहम्।
हेमरत्नाष्टगन्धानि मध्ये द्रव्यं प्रकीर्तितम् ।। ६४ ।।

पाद्यमाचमनं चार्घ्यं पञ्चगव्यं घृतं मधु।
क्षीरं दधि च दिक्कोणेष्वर्पयेद्दैविकावृतौ ।। ६५ ।।

इक्षूदं फलतोयं च कषायं सक्तुमिश्रितम्।
गन्धं पुष्पं हिरण्यं च रत्नं मौत्तिकविद्रुमौ ।। ६६ ।।

यवोदतिलदूर्वोदांश्चोत्पलं कुशशालिजौ।
पूरयेद् दिक्षुकोणेषु भृशादिषु बहिस्ततः ।। ६७ ।।

ईशानः पितरः स्वाहा वाक् सावित्री हुताशनः।
स्कन्देन्दुरुद्रादुर्गा च विघ्नो विद्येश्वराग्रजे ।। ६८ ।।

इन्द्रविष्णुविरिञ्चाश्च कुबेरो वरुणोरविः।
वायुर्यमश्रीर्भूमिश्च मुनयो विश्वदेवताः ।। ६९ ।।

मध्यमादिक्रमात् प्रोक्ताः कलशद्रव्यदेवताः।
द्रव्याणि विन्यसेत् स्वस्वदेवतामनुभिः क्रमात् ।। ७० ।।

ताराद्यं नामङेयुक्तं नमोऽन्तं मनुमुद्धरेत्।
दूर्वासिद्धार्थकतिलगिरिमृत्पाद्य मुच्यते ।। ७१ ।।

जातीलवङ्कतक्कोलैर्मतमाचमनीयकम्।
अक्षतं तिलसिद्धार्थौयवंतोयं पयोदधि ।। ७२ ।।

कुशाग्रं चार्घ्यमुद्दिष्टमष्टाङ्गेन समन्वितम्।
कदलीकेरपनसविल्वाम्रामलकानि च ।। ७३ ।।

मातुलङ्कं च भव्यं च फलाष्टकमुदीरितम्।
मधूकाम्रवटाश्वत्थशिरीषपनसद्विजैः ।। ७४ ।।

सोदुम्बरैः कषायं च प्रोक्तमष्टाङ्गसंयुतम्।
उशीरं कङ्कुमं चैव मांसीमलयजं स्तथा ।। ७५ ।।

मुरवारि गदामांसि गन्धाष्टकमुदीरितम्।
पद्मं सौगन्धिकं जातिर्मल्लिका बकुलं तथा ।। ७६ ।।

चम्पकं नन्दिकावर्त्तद्वयं च कुसुमाष्टकम्।
मणिमुक्तामरतकमिन्द्रनीलं तथैव च ।। ७७ ।।

वज्रं वैडूर्यकं पुष्यं गोमेदंरत्नमीरितम्।
पाद्ये मनुरिदं विष्णुर्मनुराचमनीयके ।। ७८ ।।

आपः पुनन्त्वादिकः स्यादर्घ्ये त्वापोहिपूर्विकाः।
गव्येऽग्निमीलेपूर्वः स्यादिषेत्वेति घृते मनुः ।। ७९

मधुवाताद्यृचोमधून्याप्यायस्वपयोघटे।
दधिक्राव्णोति दध्निस्यादुपत्वाग्नेति चैक्षवे ॥ ८० ॥

फलोदके मानस्तोके अश्वत्थेषः कषायके।
सक्तौ मनुस्सुमित्रा न अग्न आयाहि गन्धके ॥ ८१ ॥

पुष्पे पुष्पावती ब्रह्मजज्ञानं स्वर्णवारणी।
हिरण्यवर्णां हरिणीं रत्नोदे मौक्तिके पुनः ॥ ८२ ॥

मनुः समुद्रज्येष्टादिरक्षोहणं तु विद्रुमे।
यावतोये ओषधयः तिलतोये मनुः पुनः ॥ ८३ ॥

पितरः पितामहास्तु श्रीये जातस्तु दौर्वके।
औत्पले जतवेदसे देवस्यत्वा कुशोदके ॥ ८४ ॥

आशुश्शिशान इत्यादिः शालीतोये मनुः स्मृतः।
महाव्योमव्यापिमनुर्मध्यमे परिकीर्तितः ॥ ८५ ॥

हेमरत्नाष्टगन्धाद्भिः ब्राह्मं कुम्भं प्रपूरयेत्।
पाद्यादिभिर्मध्यसंस्थं दैविके दिग्विदिक्रमात् ॥ ८६ ॥

इक्षूदकाद्यैर्मर्त्यांशे रत्नास्तैर्दिग्विदिक्रमात्।
मुक्तादिभिः भृशादिस्थान् कलशान् पूरयेत् क्रमात् ॥ ८७ ॥

मध्यस्थं घटमापूर्य द्रव्येण विहितेन तु।
तदाद्भिः तत्परिघटान् प्रतिखण्डं प्रपूरयेत् ॥ ८८ ॥

अन्तरङ्गक्रमेणैव बहिरङ्गनि कल्पयेत्।
द्रवद्रव्यविधाने तु निश्शेषं पूरयेत्तु तैः ॥ ८९ ॥

अन्यद्रव्यस्य विन्यासे शेषं तोयैः प्रपूरयेत्।
पूरणक्रमतस्तेषां उद्धारश्च प्रकीर्त्तितः ।। ९० ।।

रुद्रहोतृशिवैस्सार्धं व्योमव्यापि मनुं जपन्।
तत्वानि पञ्चब्रह्माणि पञ्चतत्वान्यतिक्रमात् ।। ९१ ।।

अन्तेऽभिषिञ्चेद् देवेशं ब्रह्मकुम्भेन देशिकः।
अथ स्नानं प्रवक्ष्यामि द्रव्यावृत्तिविधानतः ।। ९२ ।।

कृत्वा धूलिपुटे क्षेत्रे मध्ये स नवकं शतम्।
बहिरेकोनपञ्चाशत् दिक्ष्वष्टासु प्रकल्पयेत् ।। ९३ ।।

पञ्चविंशतिभिर्द्रव्यैः मध्यदिक्कोणयोगतः।
आवृत्य नवधापूर्य सम्पूज्य विधिवत् पृथक् ।। ९४ ।।

उद्धृत्य पूर्वमनुभिः दिग्विदिङ्मध्यखण्डगैः।
सैकपञ्चशतैः कुम्भैः पूर्ववत् स्नपयेद् विभुम् ।। ९५ ।।

यद्वा मार्गपुटे क्षेत्रे मध्ये स नवकं शतम्।
बहिरेकोनपञ्चाशद् दिग्विदिक्षु प्रकल्प्य च ।। ९६ ।।

अत्र मध्ये मुरद्रव्यैः साकद्रव्यैर्बहिः क्रमात्।
आपूर्य तत्तद्रविणसम्पूर्त्तिक्रमतः सुधीः ।। ९७ ।।

उद्धृत्य स्वस्वमनुभिः स्नपयेत् परमेश्वरम्।
कृत्वा कविपुटे विद्वान् एकाशीतिपदान्वितम् ।। ९८ ।।

खण्डानां नवकं तत्र मध्यदिक्कोणसंस्थितम्।
पञ्चविंशतिभिर्द्रव्यैः सर्वत्रापुर्य पूर्ववत् ।। ९९ ।।

स्नपयेद् दिग्विदिङ्मध्यक्रमाद् देवमुमापतिम्।
एवं सप्तदशं प्रोक्तं नवविंशतिसंयुतम् ।। १०० ।।

यद्वात्र नवखण्डेषु त्यक्त्वा दलघटाष्टकम्।
त्रिसप्ततिमिमान् कृत्वा पूर्ववत् स्नपयेद् विभुम् ।। १०१ ।।

एवं षट्छतमाख्यातं सप्तपञ्चाशदन्वितम्।
यद्वा सप्तदशद्रव्यैरावृत्य स्नपयेद् विभुम् ।। १०२ ।।

क्षेत्रे मार्गपुटे वीथीम्मृजे त्रित्रिपुटान्तरे।
पृथङ्नवपदैर्युक्तैर्नवखण्डैस्समन्वितम् ।। १०३ ।।

क्षेत्राणां नवकं कृत्वा मध्ये प्रागादिषु क्रमात्।
प्रादक्षिण्येन सम्पूर्य सायद्रव्यैर्विधानतः ।। १०४ ।।

सम्पूज्योद्धृत्याभिषिञ्चेत् मध्यान्तं कलशैर्विभुम्।
एवं सप्तशतं प्रोक्तं नवविंशतिसंयुतम् ।। १०५ ।।

पूर्ववत् क्षेत्रमापाद्य तेषु कोणगतेषु च।
दिग्विदिस्थेषु खण्डेषु कोणगानि पदान्यथ ।। १०६ ।।

मार्जयित्वा पञ्चकानि कल्पयेत् तत्र तत्र तु।
पूर्ववत् पूरयेत् सिञ्चेत् सैकं षट्च्छतमीरितम् ।। १०७ ।।

क्षेत्रे सर्वपुटे मध्ये दिक्षु स द्वादशं शतम्।
कृत्वा नवोत्तरशतं कोणेषु परिकल्पयेत् ।। १०८ ।।

पञ्चविंशतिभिर्द्रव्यैर्मध्यदिक्कोणयुक्तितः ।
आपूर्याभ्यर्च्य विधिवदधिवास्य विधानतः ।। १०९ ।।

उद्धृत्य दिग्विदिङ्मध्यक्रमात् स्नपितयेद् विभुम्।
एवमेकसहस्रान्तं द्रव्यावर्त्तिरुदीरिता ।। ११० ।।

अथ स्नानं प्रवक्ष्यामि त्रिधा भिन्नमुमापतेः।
पञ्चविंशतिभिर्द्रव्यैः द्रव्यान्तरसमन्वितैः ।। १११ ।।

तैलाद्यैरष्टभिर्द्रव्यैर्मृदष्टकसमन्वितैः ।
एकोऽपरस्तु गन्धाम्बुसंयुक्तैरेभिरेव च ।। ११२ ।।

अन्यः कर्पूरपूर्वैस्तु सप्तसप्तविभेदितैः।
अष्टाविंशतिभिर्द्रव्यैः पूर्वं पूर्वोदितैरपि ।। ११३ ।।

क्षेत्रे गोत्रपुटे मध्ये कृत्वा स नवकं शतम्।
बहिः षोडशसंख्यानि नवकानि प्रकल्पयेत् ।। ११४ ।।

पञ्चविंशतिभिर्द्रव्यैरन्तः सम्पूर्य पूर्ववत्।
बाह्ये षोडशखण्डेषु तैलाद्यैर्दिग्विदिक्स्थितान् ।। ११५ ।।

अन्तरालगतान् कुम्भान् मृद्भिः सम्पूरयेत् क्रमात्।
तदा तत्तत्परिघटान् पूरयेत् शुद्धवारिभिः ।। ११६।।

तैलादिपूरणे मन्त्राः शर्वाद्याः परिकीर्तिताः।
विद्येश्वरैरनन्ताद्यैः मृत्तिकान्यास ईरितः ।। ११७ ।।

तैलं गुलं नालिकेररसं तदुदकं तथा।
तीर्थतोयं नदीतोयं तटाकं कूपजज्जलम् ।। ११८ ।।

तैलोक्षवेदिकाक्षेत्र खलनद्याब्धितीर्थजाः।
विन्यस्यमृत्तिकाश्चाष्टौ पूरयेत् शुद्धवारिभिः ।। ११९ ।।

शर्वः पशुपतिः तद्वत् भवो देवो महादिकाः।
रुद्रेशानोग्रभीमाश्च मन्त्रा दिक्कोणसंस्थिताः ।। १२० ।।

अनन्तसूक्ष्मौ शिवोत्तमैकनेत्रौ क्रमेण च।
एकरुद्रस्त्रिमूर्तिश्च स श्रीकण्ठशिखण्डिनौ ।। १२१ ।।

विद्येश्वराः समाख्याताः ताराद्याश्च नमोन्तिकाः।
प्रतिखण्डं प्रपूज्यैकानधिवास्य यथाविधि ।। १२२ ।।

उद्धृत्य स्नपयेदेवं पूरणक्रमतस्सुधीः।
शतद्वयं त्रिपञ्चाशद्युक्तमेवं प्रदर्शितम् ।। १२३ ।।

क्षेत्रे गोत्रपुटे चैव कथ्यते त्रिशतक्रमः।
लुप्तकोणपदैस्सार्धं दलस्थकलशैस्सह ।। १२४ ।।

सैकविंशतिसंयुक्तं शतं सम्पाद्यमध्यतः।
विंशतिं नवकानां तु कल्पयेत् तद्बहिः क्रमात् ।। १२५ ।।

मध्यवीथ्योरुभयतः कल्पयेच्च चतुर्दिशम्।
तद्वीथिदक्षगं पूर्वे दक्षिणे प्रत्यगाश्रितम् ।। १२६ ।।

उदग्गतं पश्चिमायां सौम्यायां पूर्वसंस्थितम्।
दिक्षु कोणेष्वन्तरालानि तैलाद्यैः पूर्ववर्त्मना ।। १२७ ।।

पूरयेत् गन्धतोयैश्च शिष्टखण्डचतुष्टयम्।
मध्यवीथीसौम्यकन्तु पूर्वे याम्ये तु पूर्वगम् ।। १२८ ।।

प्रत्यक् दक्षिणगंसौम्ये प्रत्यक् संस्थं प्रपूरयेत्।
सैकं शतत्रयं कुर्यादेवं देशिकसत्तमः ।। १२९ ।।

यद्वा गोत्रपुटे क्षेत्रे दिक्षु मान्यपुटां बहिः ।
कल्पयेत् पञ्चदशकं कोणेषु नवकानि च।। १३० ।।

तदन्तरे चतुष्काणि त्रीणि त्रीणि च कल्पयेत्।
दिक्षु कोणेष्वन्तराले तैलाद्यैश्च प्रपूर्य च ।। १३१ ।।

भृशाभ्युदयपार्श्वस्थान् पूरयेत् गन्धवारिभिः।
एवं वा त्रिशतं सैकं कल्पयेद् देशिकोत्तमः ।। १३२ ।।

यद्वा मित्रपुटे मध्ये कृत्वा स नवकं शतम्।
अष्टासु दिक्षु तद्बाह्ये कल्प्यं द्वादशकाष्टकम् ।। १३३ ।।

त्रीणि त्रीणि चतुष्काणि तेषामभ्यन्तरेऽर्पयेत्।
एवं वा त्रिशतं सैकं पूर्ववत् पूरणं स्मृतम् ।। १३४ ।।

क्षेत्रे मित्रपुटे मध्ये शतं द्वादशकोत्तरम्।
कृत्वा द्वादशकं दिक्षु कोणे षोडशकं बहिः ।। १३५ ।।

चतुष्टयानां त्रितयमन्तरालेषु कल्पयेत्।
सैकविंशतिसंयुक्तं त्रिशतं परिकीर्त्तितम् ।। १३६ ।।

यद्वा मित्रपुटे क्षेत्रे मध्ये सनवकं शतम्।
तद्बाह्ये नवकान्यष्ट दिक्षु कोणेषु कल्पयेत् ।। १३७ ।।

अन्तरालेऽर्पयेत् तेषां त्रीणि त्रीणि त्रिकानि च।
तद्बाह्ये नवकान्यष्टाविंशतिं कल्पयेत् बुधः ।। १३८ ।।

पञ्चविंशतिभिर्द्रव्यैः अन्तस्सम्पूर्य पूर्ववत्।
दैविकावरणे तैलपूर्वैर्गन्धाम्बुभिस्तथा ।। १३९ ।।

आरभ्येशाननवकं मानुषावरणे पुनः।
प्रदक्षिणक्रमेणैव मध्यकुम्भान् प्रपूरयेत् ।। १४० ।।

कर्पूरवानरतटिच्चन्दनाम्बुरुगायसाम्।
पृथक् पृथक् सुसंपिष्टैः कर्दमैर्मिश्रिताम्बुभिः ।। १४१ ।।

वैडूर्यमिन्द्रनीलं च मणिं विद्रुमवज्रके।
मुक्ताफलं मरतकं न्यसेत् बह्न्यादिदक्षिणे ।। १४२ ।।

वटाश्वत्थशिरीषेध्म विल्वप्लक्षाम्रचर्मभिः।
पृथक् संपादितैः क्वाथैर्नैर्ऋतादीह पश्चिमे ।। १४३ ।।

गौधूमैश्शालिभिस्तद्वद् यवैर्मुद्गैस्तिलैरपि।
प्रियङ्गुभिश्च निष्पावैर्वाय्वाद्युत्तरतः क्रमात्।। १४४ ।।

सतोयैः पूरयेदेवं तत्तत्परिघटानपि।
शुद्धाम्बुभिस्समापूर्य तद्वदेव समुद्धरेत् ।। १४५ ।।

मनुभिः पुरुषाद्योरसद्यवामसमाह्वयैः।
पूर्वादि दिक् क्रमाद् विद्वान् पूरयेत् स्नपयेत् तथा ।। १४६ ।।

पञ्चाधिकं पञ्चशतं एवं सम्यक् प्रदर्शितम्।
क्षेत्रे मार्गपुटे मध्ये कृत्वा सनवकं शतम् ।। १४७ ।।

तद्बाह्ये नवकान्यष्ट दिक्कोणेषु प्रकल्पयेत्।
त्रिकाणां त्रितयं तेषां अन्तरालेषु कल्पयेत् ।। १४८ ।।

पञ्चविंशतिकान्येषां बाह्ये कोणेषु कल्पयेत्।
षट्कं प्रतिदिशं पञ्चदशकानां तदन्तरे ।। १४९ ।।

पञ्चविंशतिभिर्द्रव्यैः मध्ये सम्पूर्य तद्बहिः।
तैलाद्यर्दिग्विदिस्थानि नवकानि प्रपूर्य च ।। १५० ।।

मध्यस्थत्रिकमध्यस्थे मृत्तिका विन्यसेत् क्रमात्।
तत्पार्श्वस्थत्रिकद्वन्द्वमध्यस्थं गन्धपाथसा ।। १५१ ।।

पूरयेत् तद्बहिः पश्चादीशानादि क्रमेण तु।
कर्पूरप्रमुखैर्द्रव्यैः अष्टाविंशतिसम्मितैः ।। १५२ ।।

अभ्यर्च्य विधिवद् विद्वान् स्नापयेत् पूरणक्रमात्।
सैकादशं सप्तशतमेवं सम्यगुदीरितम् ।। १५३ ।।

अथ सप्तदशद्रव्यैः स्नानक्रम उदीर्यते।
क्षेत्रे सप्तपुटे मध्ये नवभिः पङ्कजं लिखेत् ।। १५४ ।।

त्रिकं दिक्षु विदिक्ष्वेकं दलेष्वष्टघटान् न्यसेत्।
पञ्चविंशतिभिः कुम्भैः स्नानमेवमुदीरितम् ।। १५५ ।।

क्षेत्रे नवपुटे मध्ये पञ्चविंशद्भिरम्बुजम्।
षट्कं चतुष्कं दिक्कोणेष्वन्तर्दलघटैस्सह ।। १५६ ।।

पञ्चाशत्येकहीने तु क्षेत्रमेवं प्रदर्शितम्।
एकादशपुटे मध्ये नवभिः पङ्कजं लिखेत् ।। १५७ ।।

दिक्षु कोणेषु नवकं दलेष्वष्टघटान्वितम्।
एकाशीतिघटस्नाने पदक्लृप्तिः प्रकाशिता ।। १५८ ।।

त्रयोदशपुटे क्षेत्रे मध्येऽब्जं नवभिः पदैः।
नवकं दिक्षु मध्ये च कोणे षोडशकं तथा ।। १५९ ।।

नवोत्तरशते कुर्यादेवं पदविधिं बुधः।
क्षेत्रे साकपुटे वीथीमृजेत् पञ्चपुटान्तरे ।। १६० ।।

कृत्वाब्जं पञ्चविंशत्या बाह्ये दिक्षु विदिक्षु च।
पञ्चविंशतिकानि स्युर्मध्ये दलघटान्वितम् ।। १६१ ।।

नवोत्तरे तु द्विशते पदविन्यास ईरितः।
सुवर्णरत्नगन्धोदैर्मध्यकुम्भं प्रपूरयेत् ।। १६२ ।।

पञ्चगव्यं पयः पश्चाद् दधिसर्पिर्मधूनि च।
रत्नोदं कुशतोयं च गन्धोदं पूरयेत् बहिः ।। १६३ ।।

इन्द्रादीशावसानं च प्रादिक्षिण्यक्रमेण तु।
तदा तत्परिकुम्भांश्च तद्वत्तोयैः प्रपूरयेत् ।। १६४ ।।

दलकुम्भेषु जलधीन् क्षारादीनथ पूरयेत्।
क्षारं गौलं सुरासर्पिदधि दुग्धाच्छकोदधीन् ।। १६५ ।।

गर्भोदधिं च संकल्प्य पूर्वादीशान्तमम्बुभिः।
रत्नोदं गन्धतोयं च पूर्वमेवप्रदर्शितम् ।। १६६ ।।

क्षमाग्नियजमानार्त्तवा रीरणनिशाकराः।
व्योमान्ता मूर्त्तयोबाह्ये कीर्तिता द्रव्यदेवताः ।। १६७ ।।

विद्येश्वरास्समुद्रेषु मध्ये देवः स्वयंशिवः।
पञ्चभिर्ब्रह्मभिर्गव्यैराप्यायस्वाणुना पयः ।। १६८ ।।

दधिक्राविणोति दध्निस्यात् तेजोऽसीतिघृतं तथा।
मधुना मधुवाताद्यैर्ऋग्भिर्न्नीराजयेत्तु वा ।। १६९ ।।

आकृष्णेनेति रत्नाम्भो देवस्यत्वा कुशोदकम्।
नवरत्नमयैर्द्रव्यैः स्नपयेद्वा महेश्वरम् ॥ १७० ॥

गन्धद्वारेतिगन्धाम्भः स्नापयेत् जलधींस्ततः॥

समुद्रज्येष्टवर्गेण प्रतिकुम्भं महेश्वरम्।
पूरणक्रमतस्तेषामुद्धाश्च प्रकीर्त्तितः ॥

एवं सप्तदशद्रव्यैः पञ्चधा स्नानमीरितम्।

नवकोष्टमये क्षेत्रे मध्येष्वम्बुजं लिखेत्।
स्वस्तिकान्यष्टकोष्टेषु तेषु रत्नैः प्रपूरयेत् ॥ १७१ ॥

मध्येऽब्जरागं पूर्वस्यां मौक्तिकं दक्षिणे पुनः ।
वज्रं प्रवालमाप्ये च सौम्ये मरतकं तथा ॥ १७२ ॥

कोणेषु पुष्यवैडूर्य नीलगोमेदकानि च।
मध्ये मनोन्मनीः बाह्ये वामाद्या देवता स्मृताः ॥ १७३ ॥

दिक्स्थां तत्पुरुषाद्यैस्तु कोणगानङ्गमन्त्रकैः।
सेचयेन्मध्यमेनेशपञ्चार्ण व्योमविद्यया ॥ १७४ ॥

स्नानं सप्तदशद्रव्यक्षेत्रेतत् प्रयोजयेत्।
अष्टोत्तरसहस्रस्य पदक्लृप्तिं च पूरणम् ॥ १७५ ॥

द्रव्याणि तद्देवताश्च स्नानक्रममहं ब्रुवे।
क्षेत्रे गर्भपुटे बाह्ये वीथी स्त्रिस्त्रिपुटान्तरे ॥ १७६ ॥

पदत्रयसमायुक्त पुटद्वन्द्वं चतुर्दिशम्।
सम्मार्ज्य तत्र द्वात्रिशन्नकानि प्रकल्पयेत् ॥ १७७ ॥

पुटेनैकेन वीथीश्च तदन्तः परितो मृजेत्।
मालापुटे तदन्तस्तु मृष्ट्वा त्रित्रि पुटान्तरे ।। १७८ ।।

एकाशीतिमितान्येवं नवकानि प्रकल्पयेत्।
एकाशीतिर्भवेत् ब्राह्मे नवभिर्नवकैस्ततः ।। १७९ ।।

एकाशीत्यष्टकं दैवे द्वासप्ततिमितैर्भवेत्।
नृभागे नवकानि स्युः द्वात्रिंशत्सम्मितानि च ।। १८० ।।

कोणस्थनवकेष्वत्र पदद्वन्द्वं विलोपयेत्।
आग्नेयवायुगतयोरीशरक्षोदिगागतम् ।। १८१ ।।

निशाचरेशगतयोर्वह्निमारुतदिग्गतम्।
एषां बाह्ये च परितः पुटत्रयमथालिखेत् ।। १८२ ।।

तत्र बाह्ये पुटद्वन्द्वं विभज्याथ त्रिधा समम्।
द्वारशोभादिकं कुर्यादन्तस्थेनाथ वीथिकाम् ।। १८३ ।।

अन्तस्त्रिभिर्बहिः पञ्चपदैर्द्वारं चतुर्दिशम्।
शोभोपशोभाः कर्त्तव्याः त्रिभिरेकेन च क्रमात् ।। १८४ ।।

शोभाश्चैवोपशोभाः स्युः दिक्षु दिक्षु तदा दश।
कोणानिषट्पदानिस्युरेवं क्षेत्रं प्रकल्पयेत् ।। १८५ ।।

ब्राह्मे तु मध्यनवके सुस्पष्टं पङ्कजं लिखेत्।
दलकुम्भैर्भवेदेवं नवोत्तरसहस्रकम् ।। १८६ ।।

शैलवर्गपुटैरेवं क्षेत्रक्लृप्तिस्समीरिता।
इन्द्राग्न्यादिक्रमादष्टदिक्संस्थनवकस्थितान् ।। १८७ ।।

पूरयेद् ब्रह्मकलशान् द्रव्यैः पाद्यादिभिस्ततः।
पाद्यमाचमनं चार्घ्यमभिषेकाह्वयं तथा ।। १८८ ।।

गव्यं मधु घृतं तद्वद् दधि द्रव्याष्टकं स्मृतम्।
दूर्वासिद्धार्थकतिलगिरिमृत्पाद्यमुच्यते ।। १८९ ।।

आचामं चन्दनौशीरखगजाती च षालकैः।
आपः क्षीरं कुशाग्राणि चाक्षतं यवतण्डुलम् ।। १९० ।।

तिलं सिद्धार्थकञ्चैवमर्घ्यमष्टाङ्गमुच्यते।
बृहतीमल्लिकाद्रोणकुसुमैरभिषेचनम् ।। १९१ ।।

क्षीरेणस्वर्णरत्नसुमनोगन्धसंयुतम्।
मध्यस्थब्रह्मकलशं विधिवत् पूरयेदथ ।। १९२ ।।

पाद्यादीनामथैतेषामष्टाष्टपरितः स्थितान्।
इन्द्राग्न्यादि क्रमेणैव बीजाद्यैः परिपूरयेत् ।। १९३ ।।

गोधूमाश्च यवास्तद्वत् प्रियङ्गु व्रीहयस्तथा।
नीवारयुक्ताः श्यामाका वैणवाश्शालयस्तथा ।। १९४ ।।

ऐन्द्रे परिघटेष्वेवं न्यसेत् बीजाष्टकं पृथक्।
तारं शिलाञ्जनेश्यामं माक्षिकं गैरिकं तथा ।। १९५ ।।

राजावर्तं च गन्धाश्मवह्नौ धात्वष्टकं तथा।
पलाशखदिराश्वत्थप्लक्षन्यग्रोधचर्मणाम् ।। १९६ ।।

औदुम्बराम्रकाष्मर्युक्तानां क्वाथैः पृथक् यमे।
गोश्रृङ्गनाम वन्मीक गजदन्तोत्थिता मृदः ।। १९७ ।।

नैर्ऋत्यां क्षेत्रसकुशवेदीकोलमुखाहृताः।
उशीरकुङ्कुमाभ्यां च मांसीचन्दनवानरैः ।। १९८ ।।

पत्रकुष्टमुरैराप्ये पूरयेत् परितः स्थितान्।
पद्मकैरवसौगन्धिनीलोत्पलजपुष्पकैः ।। १९९ ।।

पुन्नागनामाश्चमारचम्पकैश्च समीरणे।
कदलीपनसाम्राणां विल्वामलयोः फलैः ।। २०० ।।

नालिकेरस्य भव्यस्य बीजपुरस्य चोत्तरे।
सुवर्णरौप्यताम्रायस्त्रपुकैरथ शाङ्करे ।। २०१ ।।

आरकूटसुपिस्थाभ्यां कांस्येनापि प्रपूरयेत्।
मध्ये परिघटानाष्ट घृतेनैव प्रपूरयेत् ।। २०२ ।।

एकाशीतिघटानां तु ब्राह्मे पूरणमीरितम्।
तद्बाह्यतोष्टदिक्संस्थेष्वेकाशीतिषु दैविके ।। २०३ ।।

अष्टैकाशीतिमध्यस्य नवकस्थ महाघटान्।
इन्द्रादीशानपर्यन्तं रुद्राक्षेण प्रपूरयेत् ।। २०४ ।।

अष्टैकाशीतिमध्यस्थ नवके परितो घटान्।
इन्द्रादीशानपर्यन्तं पूरयेत् गन्धवारिभिः ।। २०५ ।।

तत्रैव परितोष्टाष्ट नवकस्थ महाघटान्।
इन्द्रादीशावसानं तु पृथग्रत्नैः प्रपूरयेत् ।। २०६ ।।

वज्रमुक्ताप्रवालानि स्फाटिकं पुष्यरागकम्।
शङ्खनीलं च वैडूर्यं रत्नाष्टकमुदीरितम् ।। २०७ ।।

एतेषां परितः कुम्भानष्टावष्टावनुक्रमात्।
इन्द्रादीशानपर्यन्तं द्रव्यैरेभिः प्रपूरयेत् ।। २०८ ।।

नालिकेररसैः पूर्वैरक्तचन्दनवारिभिः ।
आग्नेये दक्षिणे चाथ निशाचूर्णमयैर्जलैः ।। २०९ ।।

नैरृत्यां लाजतोयैश्च शालितोयैश्च वारुणे।
गन्धामलकतोयैश्च वायव्यां पूरयेत् घटान् ।। २१० ।।

ऐक्षवैश्चरसैस्सौम्ये कुशपद्माक्षतैस्तथा।
ऐशान्यां पूरयेदेवं एकाशीत्यष्टकाष्टके ।। २११ ।।

मानुषावरणस्थानि द्वात्रिंशत्सम्मितान्यथ।
वक्ष्यमाणक्रमाद् द्रव्यैर्न्नवकानि प्रपूरयेत् ।। २१२ ।।

ब्रह्मविल्वकुशाम्भोजान्युदुम्बरकपिप्पलौ ।
शमी च कुमुदार्कौ च तेषां पत्ररसं न्यसेत् ।। २१३ ।।

प्राच्यां मध्यस्थनवके मध्यादीशानपश्चिमम्।
रजनीसहदेवी च शिरीषं सूर्यवर्त्मनी ।। २१४ ।।

सदाभद्रा कुशाग्राणि दूर्वाग्रं च कृताञ्जलिः।
श्यामाकं च नवैतानि दक्षिणस्यां तु पूर्ववत् ।। २१५ ।।

नदीसंगमतीर्थाम्भो देवखातं तटाकजम्।
नैर्झरह्लदहेमाम्भो वापीकूपजमाप्यके ।। २१६ ।।

प्रियङ्गुशिम्बनिष्पाव वेणुमाषकुलस्थकान्।
तिलनीवारमुद्गांश्च सौम्ये तु नवके न्यसेत् ।। २१७ ।।

अनलादिचतुष्कोणेष्वान्तरं यच्चतुष्टयम्।
तच्चतुष्काणि सर्वाणि पयसा पूरयेत् क्रमात् ।। २१८ ।।

त्रीणि त्रीण्यत्र नवकान्यन्तराले स्थितान्यथ।
वास्तुदैवतसंस्थान क्रमेण परिपूरयेत् ।। २१९ ।।

भृशोऽन्तरिक्षः पूषा च भृङ्गराजो मृगस्तथा।
दौवारिकश्शोषरोगौ नागोदित्युदिती पुनः ।। २२० ।।

पर्ज्जन्यश्च तथैतेषां द्वादशस्थानगानि तु।
दधिसक्तुगुलं भस्मधानोडुम्बितमेव च ।। २२१ ।।

बलां चातिबलां चाणुं करम्भं च गवीथुकम्।
महाव्रीहीन् क्रमान्मध्ये द्रव्यद्वादशकं न्यसेत् ।। २२२ ।।

सत्योवितथसंज्ञश्च गृहपूर्वक्षतस्तथा।
गन्धर्वश्च स सुग्रीवः पुष्पदन्तासुरौ पुनः ।। २२३ ।।

मुख्यभल्लाटार्गलाश्च जयन्तेन्द्रौ क्रमेण तु।
नवकान्येषु संस्थानि गन्धाद्भिरभिपूरयेत् ।। २२४ ।।

चतुष्टयबहिर्भाग संस्थितानि त्रिकाण्यथ।
अग्न्यादीशावसानं तु पूरयेत् गन्धवारिभिः ।। २२५ ।।

प्रतिखण्डं परिघटान् पूरयेच्च तदा तदा।
सम्पूर्यैवं समभ्यर्च्य कलशानधिवास्य च ।। २२६ ।।

परेद्युः स्नपयेत् देवं वक्ष्यमाणक्रमेण तु।
उद्धरेत् रुद्रगायत्र्या कलशानखिलानपि ।। २२७ ।।

पाद्याद्यैः पञ्चभिर्देवं स्नपयेत् ब्रह्मपञ्चकैः ।
मध्वादिकं चतुष्कं तु हृदादिकवचान्तिमैः ।। २२८ ।।

अङ्गैस्तु व्योमविद्याया एकाशीत्यष्टके पुनः।
प्रधानकलशस्नानं व्योमव्यापि शिवेन तु ।। २२९ ।।

तत्रत्यपरिकुम्भानां स्नपनन्नेत्रमन्त्रतः।
बहिरावरणे मन्त्रा नमस्ते रुद्रपूर्वकाः ।। २३० ।।

षोडशस्युः तदन्यांस्तु स्नपयेदस्त्रमन्त्रतः।
तन्महेशाय मन्त्रेण चान्तरास्नानमाचरेत् ।। २३१ ।।

पूरणक्रमतस्तेषामुद्धारस्त्वमुना स्मृताः।
अन्या सहस्रकमश प्रक्रियैवमुदीरिता।।

उक्तेषु कलशक्षेत्रेष्विष्टं संपाद्य यत्नतः।
मध्येऽष्टपत्रं सुस्पष्टं पङ्कजं विलिखेदथ।।

चतुरश्रीकृते क्षेत्रे चतुष्षष्टिपदान्विते।
लिखेत् बाह्यावृतेरन्त वृत्तं तद्विभजेत् क्रमात्।।

द्वादशांशं बहिस्त्यक्त्वा दलाग्रस्य च मध्यतः।
अन्तर्भागं चतुर्धा तु कर्णिकादेर्यथाक्रमम्।।

कर्णिकायाः केसराणां दलसन्धेर्दलस्य च।
पदैश्चतुर्भिः प्रत्येकं गात्राणि परिकल्पयेत्।।

पदैस्त्रिभिस्त्रिभिः कुर्यात् कोणानां तु चतुष्टयम्।
गात्रपादान्तरे यद्वा सन्धाण्डमरुसन्निभान्।।

लिखेत् कोणं यथाखत्थपत्रकारं समालिखेत्।
कर्णिकां पीतरजसा दलानि सुसितेन तु।।

श्यामलेनान्तरालं च रक्तेन चतुरश्रकम्।
गात्राणि खेतपीताभ्यां कोणं कृष्णेन पूरयेत्।।

सन्धीन् रक्तेनरजसा विलिख्यैवं तुमण्डलम्।
निक्षिपेत् व्रीहि तण्डुल तिल सिद्धार्थकान् क्रमात्।।

अत्तरोत्तर संस्तीर्ण स्वछाहत नवाम्बरम्।
एवं समास्तृते पीठे कुरा कूर्चानि विन्यसेत्।।

एवं ब्राह्मे प्रकल्प्याथ दैविकाद्यावृतौ पुनः।
द्रव्यकुम्भस्थितिर्यत्र तत्र स्वस्तिकमालिखेत् ।। २३२ ।।

पदान्यन्यानि सर्वाणि यथा शोभं प्रपूर्य च।
व्रीहिभिः पीठिकाः कृत्वा तासुदर्भान् सकूर्चकान् ।। २३३ ।।

विन्यस्य साधनान्यान्याखिलानि समाहरेत्।
दीपांश्च विन्यसेदत्र यथास्थानं समुज्वलम् ।। २३४ ।।

।। इति कलशचन्द्रिकायां शिवभागे चतुर्थपटलः समाप्तः ।।

# कलशचन्दिकायां शिवभागः
# पञ्चमः पटलः

स्नात्वाचार्यस्समाचम्य नवाम्बरधरश्शुचिः।
देहं संस्कृत्य विधिवत् सकलीकृतविग्रहः ।। १ ।।

ब्रह्मकुम्भस्य पश्चात्तु समासीनो वरासने।
समाहितस्ततः पूजां प्रारभेत यथाविधि ।। २ ।।

इष्ट्वा गुरून् गणेशं च निजसव्यापसव्ययोः।
पीठपूजां ततः कृत्वा शक्तिमावाह्य पूजयेत् ।। ३ ।।

आबध्य पद्ममुद्रां च न्याग्विलं सादयेत् घटम्।
अस्त्रेण क्षालितं वर्म मनुना सूत्रवेष्टितम् ।। ४ ।।

मूलेन गन्धसंलिप्तं धूपितं प्रणवेन च।
ततश्शोषादिसंस्कारान् कुम्भस्य प्रविधाय च ।। ५ ।।

दर्भन्यासं सुगन्धाम्भः प्रोक्षणं चाक्षतार्पणम्।
आद्यैस्त्रिभिः पञ्चतत्त्वैः कृत्वा मूलेन संयजेत् ।। ६ ।।

उत्तानीकरणोद्धारौ पीठे विन्यसनं तथा।
तुरीयपञ्चमाभ्यां च मूलेन च समाचरेत् ।। ७ ।।

संप्रोक्ष्य तद्घटपुटे तारतः किञ्चिदर्चयेत्।
कुम्भस्यमूलमध्योर्ध्वभागेषु पृथगम्बुजम् ।। ८ ।।

वर्ज्यर्क्षषोडशदलं स्मृत्वा तेषु प्रविन्यसेत्।
अग्न्यर्केन्दुकलास्तत्तदृग्भिस्सह समष्टिभिः ।। ९ ।।

संव्याप्यमनुभिस्त्वेताश्चार्चयेदक्षतार्त्तवैः।
कुम्भेऽर्कचतुरर्णेन समावाह्य तदङ्गकैः ।। १० ।।

साङ्गीकृत्य प्रविन्यस्तेद्दिङ्मथ्येषु च तन्मुखे।
कलाविन्दुभवास्सूर्यमनुना च समर्चयेत् ।। ११ ।।

जननानन्तरं वह्नेः तत्र सम्पादितं घृतम्।
संस्पृश्य तद्घटे भूयः कुम्भमुद्रां प्रदर्श्य च ।। १२ ।।

ब्रह्माण्डरूपं तं कुम्भं ध्यात्वा सम्यक् विराण्मयम्।
तत्सुषुम्नात्मना ध्यात्वा विन्यसेत् कूर्चमादिना ।। १३ ।।

तेनैवाभ्यर्च्य तन्मूले हेमरत्नानि विन्यसेत्।
आत्माष्टाक्षरमन्त्रेण तज्जीवत्वेन चार्चयेत् ।। १४ ।।

तदंगसंघातधिया द्रव्यमूलेन च न्यसेत्।
प्रणवं शक्तिबीजञ्च हंसस्सोऽहं वदेत् पुनः ।। १५ ।।

स्वाहान्तमुद्धरेदेवं आत्माष्टार्णो मनुस्मृतः।
दोष्णा सामृतबीजेन कुम्भवक्त्रं पिधाय च ।। १६ ।।

उन्नीय तच्चेतनां च तारेण परमात्मना।
संयोज्य क्षाद्यकारान्तां ताराद्यां च शिरोन्तिमाम् ।। १७ ।।

लिपिं जप्त्वा द्वादशान्तपद्मगामृतदीधितेः।
अग्नीष्टोमात्मकैर्वरर्णैर्गलितैरमृतात्मना ।। १८ ।।

धिया सम्पूरयेत् कुम्भमथवारुण पाथसा।
शंखमापूर्याष्टगन्धं विलोड्यावाह्य मुलतः ।। १९ ।।

अभ्यर्च मूलं क्षाद्यन्तां लिपिं पूर्ववदेव तु।
प्रजपन् कलशे सिक्त्वा सम्पूर्याधाधिकं घटम् ।। २० ।।

लिपि पद्मार्चनं कृत्वा मूर्तीं तत्र समाह्वयेत्।
मूलान्ते शिवमूर्त्तये नम इत्युच्चरेत् पुनः ।। २१ ।।

शिवमूर्तिमावाहयामीति मन्त्र उदीरितः।
साङ्गं यष्ट्वा मूर्तिमस्मिन् कलावाहनमाचरेत् ।। २२ ।।

आदाय शङ्खे सलिलं हृन्मन्त्रेणाष्टगन्धकम्।
विलोड्य व्यस्तरूपेण समस्तेनादिना यजेत् ।। २३ ।।

कृशानोर्दशसूर्यस्य द्वादशेन्दोस्तु षोडश।
अकारोकारमार्णानां कलादश दशोरिताः ।। २४ ।।

चतस्रः पञ्च वा बिन्दोः नादजाष्षोडशेरिताः।
शक्तेस्त्रिस्रः शान्तकले उभे संख्योदिताः क्रमात् ।। २५ ।।

धूम्रार्चिरूष्माज्वलिनी ज्वालिनी विष्फुलिङ्गिनी।
सुश्रीस्सुरूपा कपिला हव्यकव्यवहे अपि ।। २६ ।।

तपिनी तापिनो धूम्रा मरीची ज्वालिनि रुचिः।
रुषुम्नां भोगदा विश्वा बोधिनी धारिणी क्षमा ।। २७ ।।

अमृता मानदा पूषा तुष्टी पुष्टी रतिर्धृतिः।
शशिनी चन्द्रिका कान्तिर्ज्योत्स्ना श्रीः प्रीतिरङ्गदा ।। २८ ।।

पूर्णा पूर्णामृता चेति तेजस्त्रयभवाः कलाः।
सृष्टिरृद्धिःस्मृतिर्मेधा कान्तिर्लक्ष्मीर्द्युतिःस्थिरा ।। २९ ।।

स्थितिस्सिद्धिरिति प्रोक्ता यथाक्रममकारजाः।
जरा च पालिनी शान्तिरैश्वरी रतिकामिके ।। ३० ।।

वरदाह्लादिनी प्रीतिर्दीर्घा चोकारसंभवाः।
तीक्ष्णा रौद्री भया निद्रा तन्द्री क्षुत्क्रोधिनी क्रिया ।। ३१ ।।

उत्कारी चैव मृत्युश्च मकाराक्षरजा मताः।
पीताश्वेतारुणसिता विन्दुजानं तयापि वा ।। ३२ ।।

निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिस्तथैव च।
इन्धिका दीपिका चैव रेचिका मोचिका परा ।। ३३ ।।

सूक्ष्मा सूक्ष्मामृता ज्ञानामृता चाप्यायिनी तथा।
व्यापिनी व्योमरूपा च सानन्ता नादसंभवाः ।। ३४ ।।

याद्यैः क्रमोत्क्रमप्रोक्त कभादिद्विद्विवर्णकैः।
आद्यैश्च कपटाद्यैश्च षाद्यैराद्यैः क्रमेण तु ।। ३५ ।।

बीजानि विन्दुसंयुक्तैरेभिरासां प्रकल्पयेत्।
तारपाशेश्वरी बीजसृण्याड्या प्रोत्स्वबीजतः ।। ३६ ।।

इच्छाज्ञानक्रियाश्शक्तेश्चिदानन्दे तु शान्तजे।
जाततत्सत्रयंबकाद्यास्तेजसामृचईरिताः ।। ३७ ।।

हंसाद्यश्च प्रतत्पूर्वस्त्र्यम्बकाद्यस्तदादिकः।
विष्णुराद्यश्च पञ्चैता ऋचस्तारांशसंभवाः ।। ३८ ।।

मं वह्निमण्डलायेति दशधर्मप्रदेति च।
कलात्मने नतिं ब्रूयादेवं प्राथमिको मनुः ।। ३९ ।।

अं सूर्यमण्डलायेति द्वादशार्थप्रदेति च।
कलात्मने नम इति द्वितीय मनुरुद्धृतः ।। ४० ।।

उं सोममण्डलायान्ते प्रोक्ता षोडशपूर्वकम्।
कामप्रदकलात्मने नम इत्यपरो मनुः ।। ४१ ।।

एवं समष्टिमन्त्रास्तु सम्प्रोक्तास्त्रैजसाः क्रमात्।
अकारब्रह्मपृथिवीगन्धघ्राणेत्युदीर्य च ।। ४२ ।।

अथोपस्थानन्दसृष्टि निवृत्तीति प्रकीर्त्तयेत्।
कलात्मने नमोऽन्तोऽयं मन्त्रः प्राथमिकोमतः ।। ४३ ।।

उकारविष्णवब्सान्ते जिह्वापायुविसर्गकान्।
स्थितिप्रतिष्ठेत्याभाष्य नमोन्तं च कलात्मने ।। ४४ ।।

वदेद् द्वितीयमन्त्रोऽयं तृतीयः कथ्यते मनुः।
मकाररुद्रेत्याभाष्य तेजोरूप इतीरयेत् ।। ४५ ।।

चक्षुः पादेति संप्रोक्त्वा गतिसंहार इत्यपि।
विद्याकलात्मने नम इति मन्त्रं समुद्धरेत् ।। ४६ ।।

बिन्द्वीश्वरवायुस्पर्शत्वक्पाण्यादान इत्यापि।
प्रोक्त्वा तिरोभाव शान्तिकलात्माद्यं समुद्धरेत् ।। ४७ ।।

नादं सदाशिवाकाशशब्दश्रोत्रावसानतः।
वाग्वचनानुग्रहान्ते शान्त्यतीतादिकं वदेत् ।। ४८ ।।

एवं समष्टिमनवः प्रोक्तास्तारांश संभवाः ।
शक्तिस्तारश्च सम्प्रोक्ते समष्टीशक्तिशान्तयोः ।। ४९ ।।

तारं पाशं तथा शक्तिमङ्कुशं यादिसान्तकान्।
त्रयोदशस्वरोपेतं वियद्विन्दुयुतं च सः ।। ५० ।।

अजपां वह्निकलानामित्यन्तं मनुमुद्धरन्।
पृथक् संयोजयेदेनमूर्ध्वांशेषु क्रमात् सुधीः ।। ५१ ।।

पूर्वं प्राणा इह प्राणा पुनर्जीव इहस्थितः।
पुनस्सर्वेन्द्रियाण्यादि वाङ्मनश्चक्षुरक्षरम् ।। ५२ ।।

श्रोत्रघ्राणयुतं प्राणा इहैवागत्य संयुतम्।
सुखं चिरं तिष्टन्तु स्वाहेत्यूर्ध्वांशास्त्रयः ।। ५३।।

क्रमात् वदेत् सूर्याद्यिमन्येषु स्मृतो सुस्थापने मनुः।
लिप्या मूलेन वा बिन्दोरनन्तकलयाऽथवा ।। ५४ ।।

चतुर्णवतिसंख्यायाः पूर्त्यर्थमभिवाहयेत्।
तत्तद्वर्ग्यास्समायोज्य कलाश्शंखजलेस्पृशन् ।। ५५ ।।

तदृचस्तत्समष्टीश्च स्वासुसंस्थापनाणुभिः।
सञ्जप्यमूलेनावाहय साङ्गीकृत्याथ तज्जलम् ।। ५६ ।।

निषिच्य कलशे व्याप्य विन्यसेत् ताः कलाः क्रमात्।
आधारस्त्रितये स्मृत्वा पङ्क्त्यर्कस्वरसम्मितैः ।। ५७ ।।

दलैरुपेतमम्भोजत्रयं तद्दलगाः कलाः
विन्यसेत् तैजसीः पूर्वं ततस्तारांशसंभवाः ।। ५८ ।।

पादे सन्ध्यष्टके साग्रद्वये सृष्टिकला न्यसेत्।
न्यसेत् स्थितिकला बाह्वोस्सन्ध्यग्रेषु च पादवत् ।। ५९ ।।

पायौ च वृषणे गुह्ये नाभौ कुक्षौ तथा हृदि।
पार्श्वयोः पृष्टककुदोः न्यसेत् तीक्षणादिकाः कलाः ।। ६० ।।

गले वक्त्रभ्रूयुगके न्यसेत् विन्दुकलाः क्रमात्।
प्रतिलोमस्वरस्थाने विन्यसेत् नादजाः कलाः ।। ६१ ।।

ससमष्टभिः र्ऋङ्मन्त्रैस्सप्राणस्थापनाणुभिः।
व्यापयेच्च कलान्यासस्थानेषु च तदा तदा ।। ६२ ।।

प्रणवत्रितयं चोर्वोरजपात्रितयं हृदि।
स्पृशेत् कराभ्यां सञ्जप्य हृदिस्थेति जपेद्धृदि ।। ६३ ।।

हृदिस्था देवता सर्वा हृदये नित्यसंस्थिता।
हृदि सर्वं समर्पयामि हृदि प्राणाः प्रतिष्ठिताः ।। ६४ ।।

आधारत्रितये शक्तिकलाश्शान्तिकले हृदि।
न्यसेद्वाव्यापयेत्ताभिः सर्वाङ्गे पञ्चभिस्तु वा ।। ६५ ।।

मूलाङ्गैस्सकलीकृत्य समाराध्य च मूलतः।
तत आवाहयेत् कुम्भे विद्यादेहमनन्यधीः ।। ६६ ।।

मूलान्ते प्रवदेद्विद्या देहाय नम इत्यतः।
विद्यादेहमावाहयाम्येवमेषमनुः स्मृतः ।। ६७ ।।

अनेनाथ त्रिशो व्याप्य सकलीकृत्य पूजयेत्।
तत्वव्यष्टि समष्टीनां कुर्यादावाहनं ततः ।। ६८ ।।

तत्त्वमन्त्रं समुच्चार्य षष्ट्यन्तं प्रवदेच्चतत्।
प्रोक्त्वा प्राणादिकान् पञ्चषष्टयाऽन्तः करणानि च ।। ६९ ।।

सम्बुद्ध्याजीवमागच्छयुग्मं संसोऽन्तथेश्वरीम्।
अजपां परमात्मानं वह्निजायां तथैव च ।। ७० ।।

जीवमावाहयाम्यन्तं षष्ट्या तत्वमनुं वदेत्।
एवं शिवादितत्वानि समावाह्य हृदम्बुजात् ।। ७१ ।।

योजयेत् शङ्खसलिले पुष्पाञ्जलिपुरस्सरम्।
संयोज्य कलशे तत्तु तत्वन्यासं विधाय च ।। ७२ ।।

मूलेनाभ्यर्च्य भूयोऽपि शङ्खमापूर्य पाथसा।
पञ्चतत्त्वादिमं प्रोक्त्वा नमसारहितं चतत् ।। ७३ ।।

ईशानस्य ततः प्रोक्त्वा प्राणापानादिकान् वदेत्।
वह्निजायन्तमीशानेत्यादि ब्रह्माण्डतत्त्वके ।। ७४ ।।

ईशानस्य जीवमावाहयामीति मनु स्मृतः।
एवमावाह्य सम्पूज्य कलशे स्थापयेदसून् ।। ७५ ।।

तत्त्वाणुं विनतीतिमीशानात्मने नमसा वदेत्।
अनेन मनुनाव्याप्य पूजयेत्तदनन्तरम् ।। ७६ ।।

एवमन्यानि चत्वारि मन्त्राण्यपि समुद्धरेत्।
पुरुषश्च तथाघोरो नामदेवस्तथैव च ।। ७७ ।।

सद्योजातश्च सम्प्रोक्ताः क्रमात्तेषां तु मूर्त्तयः।
व्यष्टिरेवं समुद्दिष्टा समष्टिरभिधीयते ।। ७८ ।।

तत्त्वानि पञ्च सम्प्रोक्ता नमसा रहितान्यपि।
ईशादिमूर्तिनामानि समस्यामन्तमुच्चरेत् ।। ७९ ।।

पूर्ववद्वह्निजायान्तं प्राणापनादिकान् वदेत्।
ब्रह्माणि पञ्च सम्प्रोक्त्वा षष्टयेशाद्यंतु पूर्ववत् ।। ८० ।।

जीवमावाहयाम्यन्तः समष्ट्याख्योमनुः स्मृतः।
तत्वानि पञ्च सम्प्रोक्त्वा नमसा रहितानि तु ।। ८१ ।।

समस्येशादिकं ब्रूयादात्मने नमसान्वितम्।
पूजयेदमुना व्याप्य प्राणसंस्थापनादनु ।। ८२ ।।

एवं व्यष्टिसमष्टीतु समावाह्य पृथक् पृथक्।
मूलेसम्पुटितेनाथ प्रणवत्रितयाणुना ।। ८३ ।।

कृत्वा परावाहनां च चिदात्मकममुं नयेत्।
अश्वत्थसहकारादिपल्लवैरस्त्रमन्त्रतः ।। ८४ ।।

फलतण्डूलदर्भाग्रस्फुरच्चाक्रिकया तथा।
पिधाय कुम्भवदनं वस्त्रयुग्मेन वर्मणा ।। ८५ ।।

आवेष्ट्य तारोपचार मूलैरावाहयेन्ततः।
त्रिशस्संव्याप्य विन्यस्येत् सूक्तवक्त्राङ्गकैरथ ।। ८६ ।।

ततस्संव्याप्य विन्यस्येत् लिपितत्व षडध्वनः।
मन्त्राक्षराणि विन्यस्य पुनरङ्गानि विन्यसेत् ।। ८७ ।।

पुनर्विचिन्तयेदेनं ध्यानसूत्रोक्तमार्गतः।
मुद्राः प्रदर्श्योपचारान् दत्वा सम्पूजयेदथ ।। ८८ ।।

तारोपचारमूलैश्च सूत्रवक्त्राङ्गहेतिभिः।
मूर्त्यादिपरिवारैश्च सम्पूज्यास्मै निवेद्य च ।। ८९ ।।

शेषोपहारान् दत्वा प्रसन्नार्चां विधाय च।
सहस्रावर्ति सञ्जप्य स्पृशन्मूलमनन्यधीः ।। ९० ।।

रक्षामस्त्रेण कृत्वाथ कलशानितरान्यजेत्।
पूर्वमेव घटानस्त्रक्षालितान् वर्ममन्त्रतः ।। ९१ ।।

वेष्टितान् गुणितैस्सूत्रैर्धूपितान् प्रणवेन तु।
न्याग्बिलान् सादयेत् पीठे पूरणक्रमतो खिलान् ।। ९२ ।।

प्रतिखण्डं पीठपूजां कृत्वा संस्कृत्य च क्रमात्।
सम्पूज्योत्तानितेष्वेषु द्रव्यविन्यासमाचरेत् ।। ९३ ।।

पाद्याद्यैरभिपूर्याथ पूर्वोक्तैस्स्वस्वमन्त्रकैः।
आवाहय खण्डशोऽभ्यर्च्य निवेद्याथ प्रसादयेत् ।। ९४ ।।

अथाधिवासहोमांश्च विदद्ध्युर्गुरुमूर्त्तिपाः।
ईशानेन गुरुर्मध्ये समुपस्थाय पावकम् ।। ९५ ।।

तस्माद् वह्न्यंशमादाय गुरुदत्तं तु मूर्त्तिपाः।
प्रागादिपारिकुण्डेषु कृत्वा चोल्लेखनादिकम् ।। ९६ ।।

स्वद्रव्यहोममनुभिः निक्षिपेयुर्विभावसुम्।
यद्वाग्निं समुपस्थाय मध्ये सप्तत इत्यृचा ।। ९७ ।।

विहरे दृग्भिराभिस्तु परिकुण्डेषु पावकम्।
ऐन्द्रेग्निमील आग्नेय्यामग्निः पूर्वेभिरित्यृचा ।। ९८ ।।

आग्निर्होता तथा याम्ये यदङ्गेति च नैर्ऋते।
उपत्वाग्ने च वारण्यां वायव्यां तु स नः पिता ॥ ९९ ॥

अग्निं दूतमुदीच्यामप्याग्निमग्निं च शाङ्करे।
प्रारभ्याग्निमुखं सर्वे प्रागिध्महवनादथ ॥ १०० ॥

आराध्यपीठमावाह्य देवमभ्यर्च्य पावके।
इध्माघारादिकं हुत्वा पुंसा पक्वं च होमयेत् ॥ १०१ ॥

पूजामन्त्रैर्घृतं हुत्वा पुनर्द्रव्याणि होमयेत्।
समिदाज्यचरूल्लाँजान् सर्षपांश्चतिलान् यवान् ॥ १०२ ॥

व्रीहीन् सक्तून् पुनश्चाज्यमीशानेन हुनेत् गुरुः।
दिक्षु तत्पुरुषाघोरसद्यवामक्रमेणतु ॥ १०३ ॥

ब्रह्माङ्गैर्हृच्छिखावर्म शिरोभिर्विदिशासु च।
पलाशखदिराश्वत्थप्लक्षन्यग्रोधविल्वजाः ॥ १०४ ॥

औदुम्बराश्च काष्मर्यस्समिधोन्त पलाशजाः।
व्योमव्यापि दशार्णेन पूर्णां द्रव्यान्तरे हुनेत् ॥ १०५ ॥

एकं वा पञ्च वा कुर्यात् कलशस्यानुरूपतः।
एकं चेदीशमनुना पञ्च चेत् ब्रह्मभिर्हुनेत् ॥ १०६ ॥

समिधस्तोरणद्रुत्था यद्वा पालाश्य एव वा।
होमशेषं समाप्याथ सम्पातद्रव्यवारिभिः ॥ १०७ ॥

प्रतिकुम्भंतु संस्पृश्य कलशानधिवासयेत्।
मङ्गलाङ्कुरपात्राणि परितो मङ्गलाष्टकम् ॥ १०८ ॥

यथास्थानं प्रदीपांश्च विन्यसेत् प्रज्वलच्छिखान्।
शङ्खं चक्रं ध्वजादर्शौ वृषमङ्कुशचामरे ।। १०९ ।।

मत्स्ययुग्मं याज्ञिकद्रुसमुत्थं मङ्गलाष्टकम्।
वीथीस्सम्मर्ज्य वासोभिः दर्भैराच्छाद्यतान् घटान् ।। ११० ।।

उपविश्याथ कलश क्षेत्रबाह्ये गुरूत्तमः।
तारेणैकात्म्यमापाद्य कलशानां परात्मनि ।। १११ ।।

पृथिव्यादि प्रकृत्यन्तं प्रकृत्यादि धरान्तिमम्।
विलापनं सर्जनं च तत्त्वानां प्रविधाय च ।। ११२ ।।

कलशेषु नियोज्याथ चितिमात्मनि संहृताम्।
षडध्वनोऽथ विन्यस्य पीठपूजापुरस्सरम् ।। ११३ ।।

आवाह्य सकलीकृत्य सम्यगिष्ट्वा निवेद्य च।
मन्त्रेणानेनाष्टदिक्षु परितो बलिमाहरेत् ।। ११४ ।।

देवं रुद्रं पुरस्कृत्य इमं बलिं प्रतिगृह्णन्तु।
गृह्णन्तु सर्वभूतानि पैशाचान्तं यजामहे ।। ११५ ।।

आचम्याथ प्रविश्यान्तर्न्निवेद्यस्य समर्पणम्।
विसर्जनं च कृत्वाथ प्रसन्नार्चां समाचरेत् ।। ११६ ।।

शुद्धाभवन्त्विमे कुम्भास्सकुशास्सापिधानकाः।
वातातपपरीताश्च शुभलक्षणसंयुताः ।। ११७ ।।

पञ्चविंशतिधा शंम्भोस्तत्त्वभेदेन तिष्टतः ।
द्रव्ये यत्ताश्रयास्सर्वास्संगच्छन्तां विभूतयः ।। ११८ ।।

आभ्यां मनुभ्यां सम्प्रोक्ष्य शिष्टसम्पातसर्पिषा।
कलशानस्त्रमन्त्रेण विकिरेदक्षतार्त्तवैः ।। ११९ ।।

शास्त्रोदितमिदं चास्तु स्नपनं देवनिर्मितम्।
अनेन स्नपनेनास्तु प्रसन्नो भगवान् हरः ।। १२० ।।

अनेन मनुना प्रार्थ्य बद्धाञ्जलिपुटो गुरुः।
अर्घ्यं दत्वावसानीयं रक्षेत् तालत्रयादिना ।। १२१ ।।

प्रासादाग्रे ततः स्थित्वा पुष्पमाराध्य साञ्जलिः।
विज्ञापयेद् देवदेवमधिवासः कृतादिना ।। १२२ ।।

अधिवासः कृतो देवः स्नपनाय मया तव।
क्षणेन मे प्रसादोऽस्य क्रियतां परमेश्वर ।। १२३ ।।

ततो मण्डपमासाद्य समासीनो निजासने।
ध्यायं ध्यायं परं तत्त्वां विनिद्रस्तु निशां नयेत् ।। १२४ ।।

अथ प्रभातकृत्यान्ते स्वाचान्तश्शुद्धमानसः।
विधाय विधिना देहशुद्धिमात्मार्चनं तथा ।। १२५ ।।

द्वास्थ पूजापूर्वमन्तः प्रविश्यार्घ्यं प्रदाय च।
निर्माल्यमपनीयाद्भिरभिषिच्यनिवेद्य च।। १२६ ।।

आराध्य पुष्पनिकरं देवदेवस्य पादयोः।
गुरुविघ्नार्चनं कृत्वा पीठपूजां विधाय च ।। १२७ ।।

आवाह्य देवं विन्यस्य लिपितत्त्वमनूनपि।
अर्घ्यादि दत्वा सम्प्राप्ते स्नानकालेऽभिषिच्य च ।। १२८ ।।

अर्चयित्वा च रक्षां च कृत्वास्त्रेण बहिर्व्रजेत्।
प्रविश्य मण्डपं सर्वकुम्भैकात्मधियागुरुः ।। १२९ ।।

प्राग्वदभ्यर्च्य तारेण पुष्पाञ्जलिपुरस्सरम्।
पृथग्भावं भावयित्वा प्रतिखण्डं समर्च्य च ।। १३० ।।

गुरूक्तरीत्या कुम्भानां तत्तत्तत्वात्मतां स्मरन्।
पुष्पैराराध्य सम्प्राप्य प्रागुद्धार्य घटान्तिकम् ।। १३१ ।।

नीराज्यार्घ्यं प्रदायान्तरुपनीयाथ तं घटम्।
अर्घ्यं प्रदाय नीराज्य कलशेनाभिषिच्य च ।। १३२ ।।

सिञ्चेत् तत्परिकुम्भैश्च यदा तेषां तु सम्भवः।
अर्चयित्वा निवेद्याद्भिरभिषिच्यान्तरान्तरा ।। १३३ ।।

प्रतिखण्डं तन्महेशमनुना परमेश्वरम्।
तन्महेशाय विद्महे वाग्विशुद्धाय धीमहे ।। १३४ ।।
(तन्नशिवः प्रचोदयात् ) एवमर्घ्यादि कलशैरपि तंस्नापयेत् प्रभुम्।
अथमण्डपमासाद्य कुम्भराजे च पावके ।। १३५ ।।

कृत्वा पुष्पाञ्जलिं किञ्चित् ब्राह्मं कलशमर्चयेत्।
कृत्वा नान्दीमुखं दानं विप्रेभ्यश्च यथाबलम् ।। १३६ ।।

ध्वजतोरणकुण्डादि संश्रितामखिलां चितिम्।
उद्वास्य ब्रह्मकलशे पीठशक्तिं च योजयेत् ।। १३७ ।।

साङ्गं संरक्ष्य नीराज्य स्वयमुद्धृत्य देशिकः।
सोत्तरीय शिष्यस्य हस्ते कलशमर्पयेत् ।। १३८ ।।

दीपनीराजने तद्वत् कर्करी देशिकस्तथा।
ब्रह्मकुम्भघटेशौचकर्त्ता याने क्रमस्मृतः ।। १३९ ।।

प्रसादं च परीत्याथ द्वारि चार्घ्यं प्रदाय च।
अन्तः प्रविश्य वर्धन्या जलैस्सिक्त्वा प्रदक्षिणम् ।। १४० ।।

ततो देवं तु नीराज्य कुम्भेशेनाभिषिच्य च।
त्रितत्वमनुभिर्न्यस्त्वा लिपितत्वमनूनथ ।। १४१ ।।

कृत्वा मौहूर्तिकं दानं देवं नीराज्य यत्नतः।
ब्रह्मकुम्भं समादाय ध्यात्वादेवमुमापतिम् ।। १४२ ।।

शिवजीवमयं घटान्तरुद्यद्द्रुतजाम्बूनदसप्रभम् ।
स्फुरिताखिलतत्वविग्रहेऽस्मिन् विधिरन्ध्राननतः प्रणीय चान्तः
।। १४३ ।।

निखिलाम् तनुमश्नुवानमीक्षमाणान्निखिलाधारपदेषु विश्रमय्य।
हृदयाब्जगतेष्टमन्त्रमूर्त्तौऽज्वलदर्कप्रतिमं विभावयन् तत्
।। १४४ ।।

तत्स्नपयन् विधिकुम्भचिन्मयोदैः परिपूर्णाय समर्पितार्त्तवौ
घः न्यसनं प्रविधाय तत्र चासुप्रभृतीनां सकलं विभावयेत्तम्।
जीवपुर्यष्टकमनुलिपितत्वषडध्वभिः ।। १४५ ।।

न्यस्त्वादेवं समाराध्य पायसान्नं निवेद्य च।
किञ्चिदिष्ट्वाथ नीराज्य रक्षामस्त्रे कल्पयेत् ।। १४६ ।।

बीजं नमश्शिवायान्ते प्राणापानादिकान् क्रमात्।

आत्मने नाति संयुक्तान् ब्रूयान्मन्त्रा दशेरिताः ।। १४७ ।।

हौं ह्यैं ह्वं ह्वीं ह्लामिति च बीजानां पञ्चकं क्रमात्।
प्राणादिपञ्चकं प्रोक्तं तथा नागादिपञ्चकम् ।। १४८ ।।

प्राणापानव्यानोदानसमाना इति ते स्मृताः।
नागः कूर्मश्च कृकलोदेवदत्तो धनञ्जयः ।। १४९ ।।

पादनासान्तरे प्राणमपानं पृष्ठतस्ततः।
कट्यन्तमङ्गे सकले व्यानं व्यापितया न्यसेत् ।। १५० ।।

आहृत्कुक्षेरुदानं च नाभेराहृदयं परम्।
आस्योदृशोर्न्नासिकयोर्न्नागादि त्रितयं न्यसेत् ।। १५१ ।।

विन्यस्येद्व्यापकत्वेन देवदत्तं धनञ्जयम्।
अङ्गुल्योऽङ्गुष्ठतघुक्ततर्ज्जाद्याः पञ्चकद्वये ।। १५२ ।।

जीवन्यासं विधायैव न्यसेत् पुर्यष्टकं क्रमात्।
बुद्ध्यहङ्कारचित्तानि पञ्चतत्त्वानि ते क्रमात् ।। १५३ ।।

बुद्ध्यादित्रितयं यद्वा तन्मात्राणीह पञ्च च।
हृत्पद्मस्याष्टपत्रेषु कर्णिकायां न्यसेत् सुधीः ।। १५४ ।।

अष्टाक्षरेण पुटितं शिवतत्वमनन्यधीः।
अथ हृत्पुण्डरीकस्य दिग्दलेषु च मध्यतः ।। १५५ ।।

ब्रह्माणि पञ्चतत्वानि विन्यसेत् परमेशि तु।
पञ्चतत्वैः कादिषु च षट्त्रिंशत्तत्वकैः पुनः ।। १५६ ।।

विन्यस्य तत्त्वैस्तैरेव स्थितिन्यासं समाचरेत्।

शिखाद्युपस्थपर्यन्तं धरादिव्योमपश्चिमम् ।। १५७ ।।

स्वस्वस्थानेषु विन्यस्येत् स्थितिन्यासोऽयमीरितः।
अवस्रुतैः प्रतिद्रव्यमद्भिश्च तदनन्तरम् ।। १५८ ।।

नन्द्यादि परिवारांश्च क्षेत्रपालान्तमुक्षयेत्।
कर्त्तारं च ततो भक्तान् प्रोक्षयेत सकलानपि ।। १५९ ।।

अथ सम्पूज्य विधिना निवेद्य च महद्धविः।
प्रीणयित्वाग्निरूपंतं कृत्वा च परिषद्बलिम् ।। १६० ।।

आचम्यान्तः प्रविश्याथ समर्प्यैतद् विसृज्य च।
शेषोपहारान् दत्त्वास्मै प्रसन्नार्चां विधाय च ।। १६१ ।।

सहस्रावर्ति सञ्जप्य देवस्य हृदयं स्पृशन्।
पुष्पाञ्जलिं ततः कृत्वा रक्षामस्त्रेण कल्पयेत् ।। १६२ ।।

तीर्थं दत्वाथ भक्तेभ्यः स्तुत्वा नत्वा क्षमापयेत्।
मूर्त्तिपेभ्यः सदस्येभ्यो होमकर्त्तृभ्य एव च ।। १६३ ।।

पारायणादि जप्तृभ्यः कर्त्ता सन्तुष्टमानसः।
गुरवे च यथाशक्ति दद्याद् हेमादिदक्षिणाम् ।। १६४ ।।

सार्वजन्यं ततोऽन्नाद्यं तद्दिनं तु समाचरेत्।
दिशा होमं ततः कुर्यादाचार्यस्तु परेऽहनि ।। १६५ ।।

इन्द्रादिबलिपीठानामुदग्भागे समूर्त्तिपः।
उपलिप्य निधायाग्निं स्वकल्पोदित वर्त्मना ।। १६६ ।।

विधायाग्निमुखं सर्वे दक्षिणे कलशार्चनम्।

परिधिस्थापनात्पूर्वं कृत्वा च परिधिं न्यसेत् ।। १६७ ।।

पक्वहोमं ततः कुर्यादिध्माघारादिपूर्वकम्।
इन्द्रक्रतुमिति प्राच्यामग्निं दूतं हुताशने ।। १६८ ।।

नाके सुपर्णं याम्यायां नैर्ऋत्यां मोषुणः परा।
यं रक्षन्तीति वारुण्यां वायवायाहि पावने ।। १६९ ।।

सोमं राजानं वरुणं सौम्ये शार्वे त्र्यम्बकम्।
एभिर्मन्त्रैः पञ्चतारान् पुरोऽनूच्य यथाक्रमम् ।। १७० ।।

तत आज्याहुतीर्हुत्वा पूजामन्त्रैः सकृत् सकृत्।
पृथगष्टोत्तरशतं चतुर्द्रव्याणि होमयेत् ।। १७१ ।।

पलाशखदिराश्वत्थप्लक्षन्यग्रोधसम्भवाः।
औदुम्बराश्च काष्मर्य समिधस्तु प्रकीर्त्तिताः ।। १७२ ।।

पलाश्य एव वा ग्राह्याः सर्वत्र समिधः क्रमात्।
इन्द्रादीनां नाममन्त्रा द्रव्य होमाय कीर्त्तिताः ।। १७३ ।।

जात्याधिपत्यहेत्यादिसंयुक्ताः केवलास्तु वा।
कार्या पूर्णाहुतिर्व्योमविद्यया चान्तरान्तरा ।। १७४ ।।

ततस्स्विष्टकृतं हुत्वा होमशेषं समाप्य च।
प्रणीता जलसम्पातभस्माद्यं कलशेक्षिपेत् ।। १७५ ।।

संक्षाल्य दर्भमृत्वग्भिः संघृष्य बलिपीठकाः।
भूयोऽभिषिच्य भूतानां संहारं शोषणादिकम् ।। १७६ ।।



भूतसृष्टिं च कृत्वाथ पद्मान्तं पीठमर्चयेत्।

स्वस्वनामभिरावाह्य तासु वासवपूर्वकान् ।। १७७ ।।

प्रकल्प्य प्रणवेनाङ्गमर्घ्याद्यमुपचर्य च।
कलशेनाभिषिच्याथ किञ्चिदभ्यर्चने कृते ।। १७८ ।।

हुतशिष्टेन हविषा विकीर्य सजलं बलिम्।
पुष्पमाराध्य रक्षेच्च दिक्ष्वष्टास्वेवमाचरेत् ।। १७९ ।।

कृत्वैवमथ मातॄणां पीठिकाश्शोधयेत् क्रमात्।
प्राग्वदग्निमुखं कृत्वा दक्षिणे कलशान् नव ।। १८० ।।

सम्पूर्य वीरभद्रादिमन्त्रैरावाह्य पूजयेत्।
मध्यादि भूयः पक्वं तु हुत्वा तत्पुरुषेण च ।।१८१ ।।

वीरभद्रादिमनुभिः चतुर्द्रव्यं तु होमयेत्।
समाप्य होमं संशोध्य कलशैरभिषिच्य च ।। १८२ ।।

सम्पूज्य वीरभद्रादीन् पीठिकासु बलिंहरेत्।
ततश्चण्डेश्वरस्यापि पक्वान्ते स्वीयमन्त्रतः ।। १८३ ।।

चतुर्द्रव्यहुतं कृत्वा प्राग्वत् शेषं समाचरेत्।
महापीठस्योत्तरतः स्थण्डिलेऽग्निं निधाय च ।। १८४ ।।

कृत्वाग्निमुखमाराध्य दक्षिणे कलशान् नव।
पक्वं पुरुषगायत्र्या हुत्वाज्येन तु होमयेत् ।। १८५ ।।

हरसेनस्य नाम्नाष्टशतं तारादिकेन तु।
अष्टाविंशति संख्यं वा पूर्णां दत्वाथ देशिकः ।। १८६ ।।



सम्पातं मध्यकलशे सिक्त्वा भूतिदपूर्वकैः।

अष्टाष्टवारमाज्येन हुत्वा पूर्णां पृथक् ददेत् ।। १८७ ।।

पृथक् पृथक् च सम्पातमर्चयेत् कलशाष्टके।
चतुर्द्रव्यं तु मूलेन हुत्वा होमं समाप्य च ।। १८८ ।।

बलिपीठं तु संशोध्य पीठपूजापुरस्सरम्।
आवाह्य सकलीकृत्य हरसेनमिहोपरि ।। १८९ ।।

अधः पीठाष्टके तद्वत् भूतिदादीन् प्रकल्प्य च।
आसनस्वागतार्घ्यादीन् दत्त्वा नीराजनान्वितम् ।। १९० ।।

मध्यादिकलशैः सर्वानभिषिच्यार्चने कृते।
होमशिष्टान्धसा दत्त्वा बलिं सर्वान् क्षमापयेत् ।। १९१ ।।

दिशा होमं विधायैवं रात्रौ भूतबलिं हरेत् ।।

।। इति कलशचन्द्रिकायां शिवभागे पञ्चमपटलः समाप्तः ।।

# कलशचन्दिकायां शिवभागः
## षष्ठः पटलः

देहसंस्कारमात्मार्चां शङ्खपूरणमर्चनम्।
अभिधास्यामि तद्युक्तास्सकलास्तु क्रियामताः ।। १ ।।

स्नात्वाचम्य विधानेन समासीनो वरासने।
वन्देत साञ्जलिकरस्स्वगुरून् गणनायकम् ।। २ ।।

करयोस्तलपृष्ठपार्श्वेषु पाशुपतास्त्रतः।
संव्याप्यास्त्रौजसा दग्धाविति बाहूविचिन्तयेत् ।। ३ ।।

व्याप्यमूलाणुना बाहू परौ मन्त्रमयौ स्मरेत्।
न्यस्त्वार्णाङ्गान्यङ्गुलीषु तलान्तं युगपद्द्वयोः ।। ४ ।।

आभ्यां कराभ्यां तनुयात्ततः पाशुपतास्त्रतः।
तालत्रयं दिशाबन्धमग्निप्राकारमेव च ।। ५ ।।

भानुवारादिजापासु संरोधक्रमवर्धिते।
शब्दार्थभुवनस्फूर्जासमष्टयात्मन्यनन्यधीः ।। ६ ।।

आस्थाय भूमनिस्वस्मिन् नाडीशोधनमाचरेत्।
अस्त्रासुरोधनाद्यद्वा तारांशासु निरोधनात् ।। ७ ।।

विमुच्यदक्षनाड्यामित्यग्निसंख्यं तयानिलम्।
षडाधारं तु समापूर्य कुम्भयित्वार्कवारतः ।। ८ ।।

व्यामुञ्चेदीडया तद्वदुमेडां परिशोध्य च।
मुञ्चेत् पिङ्गलतया तद्वदुभाभ्यां परिपूर्य च ।। ९ ।।

नाडीद्वन्द्वानुरोधेन परिपूर्णं तु मारुतम्।
सुषुम्नायां समाकृष्य जपन्ममिति षट्ततः ।। १० ।।

सन्धार्यादित्यवारं तु निखिलग्रन्थिभेदनम्।
कृत्वा तां ब्रह्मनाडीं तु परिशोध्यशिताशयः ।। ११ ।।

व्यामुञ्चेत् पिङ्गलेडाभ्यां व्यत्ययेनाथमारुतम्।
शुद्धब्रह्मपथोल्लासी परमार्चिष्कलोदयात् ।। १२ ।।

जाग्रज्जीवपुनर्मोहमीषद्दुर्वासनापहम्।
स्वरवारं जपन्स्तारं रेचयेद् दक्षयानिलम् ।। १३ ।।

ततस्स्वस्थानमास्थाय पूरयेदिडयानिलम्।
दन्तसंख्यं तद्द्विगुणं ब्रह्मनाड्यां तु कुम्भयोः ।। १४ ।।

तदा स्वपरमैश्वर्यं भावयेन्निशिताशयः।
उन्नीय हंसमनुना जीवमाधारचक्रतः ।। १५ ।।

संगमय्यार्त्तपद्मस्थ परमात्मनि तं पुनः।
वक्ष्यमाणक्रमेणाथ क्ष्मादिभूतानि संहरेत् ।। १६ ।।

पादाग्रनाभिहृदय ग्रीवाचिल्लियुगान्तरे।
पृथिव्यादीनि भूतानि कल्पयेत् स्वस्वमण्डले ।। १७ ।।

चतुरस्त्रं धराबिम्बमष्टशूलविभूषितम्।
अर्धेन्दुसदृशं बिंबमाप्यं पङ्कजसंयुतम् ।। १८ ।।

त्रिकोणं स्वस्तिकोपेतमाग्नेयं मण्डलं स्मृतम्।
षड्बिन्दुलाञ्छितं वृत्तं वायुमण्डलमीरितम् ॥ १९ ॥

वृत्तं व्योम्नः स्वस्वभूतद्युतिभाञ्ज्यप्यमूनिहि।
घ्राणोपस्थसमायुक्तां गन्धादिषु गुणान्विताम् ॥ २० ॥

जिह्वा वायुयुतं तोयं रसाद्यब्धिगुणान्वितम्।
चक्षु पादयुतं वह्निं रूपादित्रिगुणान्वितम् ॥ २१ ॥

त्वक्पाणिसंयुतं वायुं स्पर्शादिद्विगुणान्वितम्।
शब्दैकगुणमाकाशं श्रोत्रवागन्वितं तथा ॥ २२ ॥

शब्दैस्पर्शरूपरसगन्धाः पञ्चगुणास्मृताः।
पीताच्छारुणधूम्रासितानि क्ष्मादीनि च क्रमात् ॥ २३ ॥

चतुरङ्गुलमूर्ध्वोर्ध्वभ्रूमध्यात् कल्पयेत् ततः।
मनोहङ्कारबुद्धींश्च प्रकृतिं च यथाक्रमम् ॥ २४ ॥

ह्लामादिबीजमुच्चार्य भूतनाम ततो वदेत्।
आत्मने हुंफडन्तं च मनवः पञ्चकीर्त्तिताः ॥ २५ ॥

एभिः स्वगुणसंख्यं तु पञ्चविंशतिसंख्यया।
प्राणानायम्य संहृत्य तन्मात्रासु विलाप्य च ॥ २६ ॥

ऊर्ध्वोर्ध्वे व्याप्य तं भूते संहरेत्स्वस्वकारणे।
व्यापने पञ्चतत्त्वानि मनवः प्रतिलोमतः ॥ २७ ॥

भां भीं भूं पृथगपृथक् बीजानि मन आदिषु।
आत्मने हुं फडन्तत्वं तेषां पूर्ववदेव तु ॥ २८ ॥

योजयेत् हृच्छिवायार्णं बीजस्योपरि सर्वतः।
एकैकवारमायम्य पञ्चविंशतिसंख्यया ।। २९ ।।

संहृत्य व्याप्योर्ध्वमूर्ध्वं कारणे स्वे विलापयेत्।
संहृत्यैवं प्रकृत्यन्तं प्रकृतिं पुरुषे तथा ।। ३० ।।

तदादिशिवनिष्ठं तु संहरेत् स्थाणुसंयमैः।
व्यापने मन आदीनां नमोऽन्तः प्रणवःस्मृतः ।। ३१ ।।

क्रियाशक्तिं ज्ञानशक्तिं इच्छाशक्तिं क्रमेण तु।
तारेण हुं फडन्तेन संयम्यायोजयेत् शिवे ।। ३२ ।।

ततस्तारेण संयम्य तं विशुद्धं विभावयेत्।
संख्यानोक्तासुयमने तत्र स्यात् पञ्चविंशतिः ।। ३३ ।।

येनासुरोधो विहितस्तत् कुर्यात् तन्मनुञ्जपन्।
वायुं पिङ्गलया मुक्त्वा यमितिस्वरसंख्यया ।। ३४ ।।

इडास्ये नाभिपद्मे च धूम्रमानिलमण्डले।
ध्यात्वायं बीजमिडया दन्तवारं प्रपूर्य च ।। ३५ ।।

तद्बीजद्वन्द्वसंघट्टसमुत्भूतोग्रवायुना।
निजं शरीरमखिलं शोषयन् कुम्भयेत्सुधीः ।। ३६ ।।

अर्णसंख्यं ब्रह्मनाड्या दक्षया तं बहिस्त्यजेत्।
इडया रेचयित्वाथ हृत्पद्मेपिङ्गलामुखे ।। ३७ ।।

अग्निबिम्बेऽरुणं ध्यात्वा रमित्यापूर्य पूर्ववत्।
तद्बीजाघट्टनोत्भूतबह्निनाङ्गं तु सन्दहन् ।। ३८ ।।

कुम्भयित्वा पूर्वसंख्यमिडाया तं बहिस्त्यजेत्।
दक्षया रेचयित्वाथ वं बीजं षोडशापरम् ।। ३९ ।।

इडामुखेऽर्कपद्मस्थ सौधार्चिषिसितं स्मरन्।
अबिम्बे वं समापूर्य तद्बीजद्वन्द्वयोगजम् ।। ४० ।।

परिचित्सुधाम्बुपूरं प्रवर्षेदाप्लवार्हकम्।
लंबीजेनाष्टवारं तु कुम्भयित्वा तदम्भसि ।। ४१ ।।

ध्यायेदण्डं समुत्पन्नं कलिलं बुद्बुदोपमम्।
रन्ध्रीकृत्याष्टवारं तद्धं बीजासुनिरोधनात् ।। ४२ ।।

आयोज्य जीवं सोऽहमित्यस्मिन्नात्मनि संहृतम्।
इच्छाज्ञानक्रियाशक्तीः सृजेत् त्रिस्तारसंयमैः ।। ४३ ।।

ततश्शिवादितत्त्वानि स्वस्वमन्त्रासुसंयमैः।
सृष्ट्वासषष्टित्रिशततारजापासुसंयमात् ।। ४४ ।।

जीवमब्दोषितं ध्यात्वा फडन्तप्रणवं जपन्।
भित्वा तदण्डं शकलेरोदसीतं विचिन्तयेत् ।। ४५ ।।

तदन्तर्भ्राजमानां स्वां विराजं चिन्तयेत् तनुम्।
अथ लिप्या नियम्यासुलीनाम्बुरुहमध्यतः ।। ४६ ।।

आद्यर्णरूपामृताम्बुधारां स्वस्योत्तमाङ्गके।
निपात्य देहमाप्लाव्य तनुं तन्वीत तन्मयीम् ।। ४७ ।।

अथवा पञ्चभूतानि विलाप्य परमे शिवे।
शोषादिपञ्चकं कृत्वा जीवमायोज्य पूर्ववत् ।। ४८ ।।

सृष्ट्वाथ वियदादीनि कुर्याल्लिपिमयीं तनुम्।
जीवमात्मनि संयोज्य कृत्वा शोषादिपञ्चकम् ।। ४९ ।।

आयोज्य जीवमथवा कुर्यादर्णमयीं तनुम्।
गुरुलाघवमुद्वीक्ष्य कर्मण्येवं विशोधयेत् ।। ५० ।।

षड्भिः करतलपृष्ठपार्श्वेषु व्यापकम् न्यसेत्।
स्वराणां दशकं ज्येष्ठाद्यङ्गुलीष्वप्रदक्षिणम् ।। ५१ ।।

न्यस्य तर्ज्जाद्ये तदन्तं कादीन् पर्वाग्रकेषु च।
अङ्गुष्ठयोर्हलक्षार्णान्युगपद्विन्यसेत् द्वयोः ।। ५२ ।।

षडङ्गानि प्रवित्यस्य चाङ्गुष्ठादि तलान्तिमम्।
आभ्यां दोर्भ्यां स्वरस्पर्श व्यापकाख्यभिदा क्रमात्।। ५३ ।।

आकेशादापदाम्भोजं लिप्या संव्यापयेत्तनौ।
कास्यवृत्ताक्षिकर्णेषु नासागण्डोष्ठदत्सु च ।। ५४ ।।

कास्ययोः करपत्सन्धितदग्रेषु च पार्श्वयोः।
सपृष्ठनाभिजठरहृत्कुक्षेषु ककुद्यपि ।। ५५ ।।

दक्षसव्यपाणिपादध्वजास्येषु हृदादितः।
एकपञ्चाशदर्णैस्तु लिप्या विद्वान् प्रविन्यसेत् ।। ५६ ।।

वर्गैर्विषण्डबिद्वन्तह्रस्वदीर्घान्तरागतैः।
षड्भिरङ्गानि षट्कुर्याद् ऋषिच्छन्दश्च देवता ।। ५७ ।।

प्रोक्ता ब्रह्मा च गायत्री देवी लिपि सरस्वती।
प्रजप्य लिपि मेनां तु विघ्नबीजादिकं जपेत् ।। ५८ ।।

प्रत्यक् चितिं मूलचक्रादहहेति समुच्चरन्।
उन्नीय निशितात्मा तां विलाप्य परमात्मनि ।। ५९ ।।

मन्त्रात्मना परिणमय्यैश्वरन्तन्महस्ततः।
सोऽहमित्युच्चरन्मन्त्री योजयेत् हृदयाम्बुजे ।। ६० ।।

तत्तादृगात्मतनुतत्परिवारप्रपञ्चिताम्।
न्यसेत् तदाधारार्थं च योगपीठमथात्मनि ।। ६१ ।।

गुरून्मूर्ध्निन्यसेद्विघ्नं मूलचक्रे तदादितः।
ऊर्ध्वोर्ध्वमाहृदाधारशक्त्यादिक्ष्मावधीनि च ।। ६२ ।।

दक्षाद्यूर्वं सयुग्मेषु धर्मादींश्चतुरो न्यसेत्।
नाभिपार्श्वास्यपार्श्वेषु चाधर्मादीन् प्रदक्षिणम् ।। ६३ ।।

सत्वादीन् व्याप्यमध्ये तु पद्मं हृत्पङ्कजे न्यसेत्।
अस्मिन् वामादिशक्तींश्च दलेष्वष्टसुमध्यतः ।। ६४ ।।

दलकेसरयोर्विष्वक् कर्णिकायां न्यसेत् क्रमात्।
सूर्यसोमाग्निबिम्बानि तद्वदेव प्रविन्यसेत् ।। ६५ ।।

आत्मानमन्तरात्मानं परमात्मानमेव च।
ज्ञानात्मानं न्यसेत् मध्ये समष्ट्या व्यापयेत्तनुम् ।। ६६ ।।

मन्त्रं चिदानन्दघनं महस्तस्मिन् प्रकल्प्य च।
हृदम्बुजस्थं तत्तेजो दर्शनीयं विभुंस्मरन् ।। ६७ ।।

कर्मात्मा तु स्वयं मन्त्री हृदग्राब्जाग्रदलस्थितः।
तारोच्चारादर्कपद्मात् स्रवद्भिरमृताम्बुभिः ।। ६८ ।।

अभ्यर्हैरुपहारैस्तं निजभूतात्मकैर्यजेत्।
बीजं नमश्शिवायार्णान् पृथिवीमात्मना युताम् ।। ६९ ।।

आभाष्य सद्योजातं च टान्तं गन्धमितीरयेत्।
कल्पयामि पदं ब्रूयादेवमन्यान् समुद्धरेत् ।। ७० ।।

पृथ्व्याकाशवाग्वगन्यापस्सद्येशपुरुषास्तथा।
अघोरवामौ सम्प्रोक्तं क्रमात्तत्त्वञ्च कद्वयम् ।। ७१ ।।

गन्धं पुष्पं धूपदीपौ निवेद्यं चोपहारकम्।
कनिष्ठाङ्गुष्ठतर्ज्जाश्च मध्यमानामिके क्रमात् ।। ७२ ।।

साङ्गुष्ठं दर्शयेदस्मै चाङ्गुष्ठं तर्ज्जयायुतम्।
उपहारार्पणे मुद्रा मनवश्च प्रकीर्त्तिताः ।। ७३ ।।

यो ब्रह्माद्यणुनात्मानं समर्प्य परमात्मने।
सञ्जप्याव्ययमार्गेण मनुं तेजोमयं स्मरन् ।। ७४ ।।

तच्चित्सुधाद्रवमयात् तेजोलेशं कराञ्जलौ।
निपात्य पिङ्गलाद्वारा प्राचरेत् करभावनाम् ।। ७५ ।।

ताराभिरुद्धमूलेन व्यापय्य करयोर्द्वयोः।
तले पृष्ठे च पार्श्वे च विन्यसेदङ्गुलीष्वथ ।। ७६ ।।

पुरुषाघोरसद्यांश्च वामेशो युगपत्क्रमात्।
तर्ज्जामध्यकनिष्ठासु चानामाङ्गुष्ठयोरपि ।। ७७ ।।

यद्वाङ्गुष्ठाद्याकिनिष्ठमीशादीन् विन्यसेत् क्रमात्।
षडङ्गानि प्रविन्यस्येदङ्गुष्ठादि तलान्तिमम् ।। ७८ ।।

युगपत्करयोरेवं सम्प्रोक्ता हस्तभावना।
आभ्यां कराभ्यां मूलेन त्रिशो व्याप्य निजां तनुम् ।। ७९ ।।

सूत्रवक्त्रषडङ्गानि विन्यसेत् क्रमशस्सुधीः।
वक्त्रहृत्पादगुह्येषु मूर्ध्नि तत्तत्पदान्वितान् ।। ८० ।।

पुरुषाघोरसद्याश्च वामेशौ बीजसंयुतान्।
प्राग्याम्य प्रत्यक् सौम्यौर्ध्व वक्त्रेष्वपि च पूर्ववत् ।। ८१ ।।

कास्यहृत्गुह्यपादेषु यद्वेशादीन् क्रमात् न्यसेत्।
ऊर्ध्वप्राग्याम्यसौम्याप्येष्वाननेषु क्रमेण च ।। ८२ ।।

बीजानिमूलमन्त्रस्य नाद्यर्णानि क्रमेण तु।
बीजान्युक्त्वा मूर्त्तिनाम न्यासस्थानं च ङेयुतम् ।। ८३ ।।

नमोन्तमुद्धरेदेवं प्रोक्तं सूत्राणुपञ्चकम्।
तारं बीजं मूर्त्तिनामङेन्तं पूर्वादिवक्त्रकम् ।। ७४ ।।

ङेनत्यन्तं वदेदेवं वक्त्रमन्त्रान् समुद्धरेत्।
ततः षडध्वनो यद्वा लिपितत्वमनून्न्यसेत् ।। ८५ ।।

हौमादि बीजयुक्तास्तु शान्त्यतीतादिकाः कलाः।
कलात्मने नमोनिष्ठाः कलाः पञ्च समुद्धरेत् ।। ८६ ।।

कास्यहृत्गुह्यपादेषु पञ्चैता विन्यसेत् कलाः।
शान्त्यतीता च शान्तिश्च तथा विद्याह्वया पुनः ।। ८७ ।।

प्रतिष्ठा च निवृत्तिश्च शक्तयः पञ्च कीर्त्तिताः।
परमादिश्शिवश्शक्तिस्सदाशिवयुतेश्वरौ ।। ८८ ।।

शुद्धविद्या तथा माया कालश्च नियतिः कला।
अशुद्धविद्यारागश्च पुरुषः प्रकृतिस्तथा ।। ८९ ।।

ततोबुद्धिरहङ्कारो मनस्तन्मात्रकाणि च।
शब्दस्पर्शरूपरसगन्धास्तन्मात्रकाणि तु ।। ९० ।।

श्रोत्रत्वक्चक्षुषी जिह्वा घ्राणं ज्ञानेन्द्रियाणि च।
वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाण्यपि ।। ९१ ।।

आकाशवायुतेजोऽम्बु पृथिव्यो भूतपञ्चकम्।
नादश्शिवे क्षादिकान्तैर्बीजान्यन्येषु कल्पयेत् ।। ९२ ।।

बीजान्यखिलतत्त्वेषु यद्वा पाशान्वितं वियत्।
नादशक्त्यजपासादिकान्तैर्यद्वा प्रकल्पयेत् ।। ९३ ।।

यद्वा बीजानि मन्त्रार्णैः कल्पयेत् शुद्धपञ्चके।
तारं बीजं नमश्चोक्त्वा शिवायेतिपदं वदेत् ।। ९४ ।।

एवं तत्वानि षट्त्रिंशत् निशितात्मा समुद्धरेत्।।

हृत्पुण्डरीकं सूर्यादिमण्डलत्रितयं क्रमात्।
बीजैः शहसरार्णैस्तु पूर्वन्यायेन चोद्धरेत्।।

तारं बीजं नतिं प्रोक्त्वा शिवायेति पदं वदेत्।
आत्मने नतिसंयुक्तात् तत्तछक्तिमथोद्धरेत्।।

आत्मने नतिनिष्ठं च तत्त्व नाम समुद्धरेत्।
शक्तयःशान्त्यतीताद्या होमाद्यं बीजपञ्चकम् ।। ९५ ।।

अथवान्त्यनतेः पूर्वं ईशानादीन् समुद्धरेत्।

ङेन्तान् क्रमात् पञ्चतत्वान्युद्धृतानि समासतः ।। ९६ ।।

तारं क्षं बीजसंयुक्तं शिवायेति पदं वदेत्।
आत्मनेऽन्तं कोपतत्त्वं संवर्त्तक पदं तथा ।। ९७ ।।

ङेनत्यन्तं वदेदेवं कोपतत्वं समुद्धृतम्।
शिवाद्यैस्तु प्रकृत्यन्तैस्तत्वैस्संव्यापयेत्तनौ ।। ९८ ।।

बुद्ध्याद्यं हृदये न्यस्त्वा शब्दाद्यं कादिपञ्चके।
श्रोत्रादिदशकं स्वस्वस्थानेष्वेव प्रविन्यसेत् ।। ९९ ।।

व्योमाद्यं कादिषु न्यस्य हृत्पद्मे विन्यसेत् पुनः।
हृत्पुण्डरीकं सूर्यादिमण्डलत्रितयं तथा ।। १०० ।।

कास्यहृत्गुह्यपादेषु पञ्चतत्त्वानि विन्यसेत्।
व्यापयेत् कोपतत्त्वेन तत्त्वन्यासोऽयमीरितः ।। १०१ ।।

बीजं नतिं शिवायार्णानुक्त्वा भूर्भुवनात्मने।
नत्यन्तमुद्धरेत् तारखण्डैर्बीजानि कल्पयेत् ।। १०२ ।।

भूर्भुवस्वरिति प्रोक्तं भुवनानां त्रयं क्रमाः।
ऊर्ध्वोर्ध्वं व्यापयेदेभिः पादहृद्वदनादितः ।। १०३ ।।

भुवनाध्वा समाख्यातो वर्णाध्वा कथ्यतेऽधुना।
मूलाणुरुद्धलिप्यर्णैर्यथास्थानं प्रविन्यसेत् ।। १०४ ।।

ततः पदानि विन्यस्येद् व्योमव्यापि महामनोः।
तारं व्योमव्यापिने च व्योमरूपाय कीर्त्तयेत् ।। १०५ ।।



सर्वव्यापिने शिवाय तथानन्ताय चोद्धरेत्।

अनाथायानाश्रिताय ध्रुवायेत्युद्धरेत् पुनः ।। १०६ ।।

शाश्वताय योगपीठसंस्थिताय वदेत् पुनः।
नित्यार्णाद्यं योगिने च ध्यानाहाराय इत्यपि ।। १०७ ।।

मूलं सर्वप्रभुंङेन्तं शिवायेशानपूर्वकम्।
मूर्ध्ने प्रोक्त्वा तत्पुरुष वक्त्रायाघोरशब्दतः ।। १०८ ।।

हृदयाय वामदेव गुह्यायेति वदेत् पुनः।
सद्योजातमूर्त्तये च तारं हृद्द्वितयं वदेत् ।। १०९ ।।

ततो गुह्यातिगुह्याय गोप्त्रत्वनिधनाय च।
सर्वविद्याधिपायाथ सर्वयोगाधिवर्णतः ।। ११० ।।

गताय ज्योतीरूपाय परमेश्वरवर्णतः।
उक्त्वा पराय चेतनाद्यं पदानां सप्तकं पुनः ।। १११ ।।

व्योमिन् व्यापिनरूपिंश्च प्रथमस्तेज इत्यपि।
ज्योतिरन्तं च संबुद्ध्या प्रतिबीप्स्य समुद्धरेत् ।। ११२ ।।

भूयोरूपतथानग्ने अधूमाभस्म इत्यपि।
अनादे च तथा नाना नाधू धू धू इतीरयेत् ।। ११३ ।।

तारपूर्वाव्याहृतयस्तिस्रस्त्वनिधनेति च।
निधनं निधनोद्भवशिव सर्वपदान्यपि ।। ११४ ।।

परमात्मन् महेश्वरपदद्वन्द्वं समुद्धरेत्।
महादेवपदं भूयस्सम्बुद्ध्यैतानि चोद्धरेत् ।। ११५ ।।



सद्भावेश्वरेति पुनर्महातेजोपदं ततः।

योगाधिपते च प्रोक्त्वा पदानां तु चतुष्टयम् ।। ११६ ।।

मुञ्च प्रथम शर्वेति भवेत्युक्त्वाथ वीप्सया।
भवोद्भवसर्वभूतसुखप्रदपदे पुनः ।। ११७ ।।

सर्वादिसान्निद्ध्यकर ब्रह्मविष्ण्वर्णतः परम्।
उक्त्वा रुद्रपरेत्यन्तं पदानां दशकं पुनः ।। ११८ ।।

उक्त्वानर्चितासंस्कृतपूर्वस्थितपदान्यपि।
साक्षिन् तुरूपतङ्गानि पिङ्गज्ञानपदे तथा ।। ११९ ।।

शब्दसूक्ष्मपदे तद्वत् प्रतिवीप्स्य समुद्धरेत्।
शिवशर्वसर्वदेति पदत्रितयमीरयेत् ।। १२० ।।

तारं हृत्पञ्चवर्णं च तारं हृद्वितयं तथा।
एवं समुद्धृतस्सम्यक् व्योमव्यापीमहामनुः ।। १२१ ।।

तारपञ्चक नादादि दीर्घत्रयमथादितः।
सर्वदान्ते षडर्णं च शक्त्यायुक्तं तदेव तु ।। १२२ ।।

नादान्वितं तदेवैवमुद्धरेद्वा मनूत्तमम्।
मन्त्रस्यास्य प्रवक्ष्यामि षडङ्गानि समप्सतः ।। १२३ ।।

तारं नमस्सर्वात्मने पराय परिभाष्य च।
परमेश्वरपराय योगायेति वदेत् ततः ।। १२४ ।।

योगसम्भवाय पदं प्रभाष्य तुरुयुग्मकम्।
भवयुग्मं च सम्प्रोक्त्वा भवोद्भवपदं वदन् ।। १२५ ।।

पुनस्सर्वकार्य प्रशमन सदाशिव नमोऽस्तुते।

स्वाहा हृदयाय नम इति प्राथमिकोमनुः ।। १२६ ।।

तारान्ते सुशिवशिवहृत् ब्रह्मशिरसे वदेत्।
शिरसे वह्निजायां च द्वितीयोमनुरुद्धृतः ।। १२७ ।।

तारं शिवान्ते हृदये ज्वालिन्यग्निप्रियां वदेत्।
ज्वालिन्यै च शिखायै च वषडन्तं समुद्धरेत् ।। १२८ ।।

शिवात्मकं महादेवं सर्वज्ञं प्रभुमव्ययम्।
आवर्तय महाघोरं कवचं पिङ्गलं शुभम् ।। १२९ ।।

आयाहि पिङ्गलमहाकवचेति शिवाज्ञया।
हृदयं बन्धयुग्मं च ज्वलयुग्मं च कीर्त्तियेत् ।। १३० ।।

घूर्णयुग्मकं किरियुगं सूक्ष्मयुग्मतः परम्।
वज्रधरवज्रपाशवज्रशरीर इत्यपि ।। १३१ ।।

ममशरीरमन्विति प्रविश्येति प्रभाष्य च।
सर्वदुष्टानिति प्रोक्त्वान्तं भयद्वयमीरयेत् ।। १३२ ।।

हुं फट् स्वाहा पिङ्गलाय कवचाय हुमीरयेत्।
चतुर्थोऽयं तारपूर्वः कवचाख्यो मनुस्मृतः ।। १३३ ।।

तारं ह्रीं मृत्युजिन्मन्त्रज्योतीरूपाय इत्यपि।
नेत्रत्रयायवौषडित्युद्धरेन्नेत्रमन्त्रकम् ।। १३४ ।।

ओं ह्रीं स्फुरस्फुरेत्यादि मनुमाघोरमुच्चरन्।
अस्त्राय फडिति ब्रूयादस्त्रमन्त्र उदाहृतः ।। १३५ ।।

वसिष्ठोऽनन्तगायत्री चर्ष्याद्याः परमेश्वरः।

अमोघत्रिष्टुभौव्योमव्यापि रुद्रोऽथवा स्मृताः ।। १३६ ।।

मूर्ध्निमध्ये चतुर्दिक्षु फाले च चिबुके तथा।
दृक्श्रोत्रनासागण्डास्य कास्यात्मास्युपदेषु च ।। १३७ ।।

पाणिपादसन्ध्यग्रेषु तत्तदङ्गुलिपञ्चके।
वामेकश्रवणांसेषु पार्श्व कट्येश्च दक्षिणे ।। १३८ ।।

कटिपार्श्वांसश्रवणकेषु पाणिपदद्वये।
ऊर्वोर्घ्राणेमूर्ध्नि बाह्वोरेकाशीति पदानि तु ।। १३९ ।।

पदाध्वायं समुद्दिष्टो मन्त्राध्वाथ निगद्यते।
ईशादिपञ्चब्रह्माणि कास्यात्मान्धुपदद्वये ।। १४० ।।

ऊर्ध्वप्राग्रयाम्यसौम्याप्यमुखेष्वपि च विन्यसेत्।
क्रमात् ज्येष्ठाद्यङ्गुलीभिस्तत्कलाश्च ततो न्यसेत् ।। १४१ ।।

शशिनीसाङ्गदेष्टदामरीचिश्चांशुमालिनी।
निवृत्तिश्च प्रतिष्ठा च विद्याशान्त्यभिधा तथा ।। १४२ ।।

तमोरूपा च मोहा च क्षया निद्रा व्यथा तथा।
मृत्युः क्षुधा तृषा रजोरूपा रक्षा रतिस्तथा ।। १४३ ।।

कामा क्षमा संयमिनी क्रिया सन्ध्या स्थिराह्वया।
कालरात्रिर्भ्रामणी च मोहिनी श्री समाह्वया ।। १४४ ।।

सिद्धिरृद्धिर्द्युतिर्मेधा कान्तिः प्रज्ञा प्रभा सुधा।
दन्तीभविश्वभूताब्धिनागेभाष्यधिसम्मितैः ।। १४५ ।।



वेदेषुनेत्रर्त्तुशरवह्निभूतशरोन्मितैः।

गिरीषु भूतेषु नेत्रमुनिभूताक्षिसम्मितैः ।। १४६ ।।

अचलद्वारदिङ्नेत्ररसेभोरगसम्मितैः।
नेत्रानिभूताब्धिनेत्ररससंख्योन्मितैर्युताः ।। १४७ ।।

ब्रह्माक्षरैर्ङेनन्यन्ता अष्टत्रिंशत् कलास्मृताः।
मूर्ध्नः प्राग्याम्याप्यसौम्यमध्येष्वीशकला न्यसेत् ।। १४८ ।।

पूर्वाप्य याम्य सौम्येषु वक्त्रेषु पुरुषोद्भवाः।
हृद्ग्रीवांससनाभिकुक्षिपृष्ठवक्षःस्वघोरजाः ।। १४९ ।।

गुह्याण्डयोरूरुजानुजङ्घास्फिक् द्वितयेषु च।
एकरूपतया कम्याः पार्श्वद्वन्द्वे तु वाट्योः ।। १५० ।।

पद्मोस्तलेषु घ्राणे ते बाह्वोस्सद्यः समुद्भवाः।
साङ्गमेवं प्रविन्यस्येत् मन्त्राध्वायमुदीरितः ।। १४१ ।।

मूलार्णांस्तारसंरुद्धान् नमोन्तान् विन्यसेत् पुनः।
शिरोवदनहृद्गुह्यजानुपाद द्वये तथा ।। १५२ ।।

सृष्टिन्यासस्तुसंहारः प्रतिलोमेन कीर्त्तितः।
गुह्यादि हृदयान्तं च स्थितिन्यासस्समीरितः ।। १५३ ।।

एभिरेवाक्षरैः पश्चात् गोलकान्यासमाचरेत्।
हृन्मुखांसोरुयुग्मेषु षड्वर्णान् क्रमतःसुधीः ।। १५४ ।।

कर्णमूले तथा नाभौ पार्श्वयुक् पृष्ठहृत्सु च।
मूर्धास्य नेत्रघ्राणेषु दोः पत्सन्ध्यग्रकेषु च ।। १५५ ।।



सशिरो वक्त्र हृदय जठरोरुपदेष्वपि।

हृदाननपरश्वेणाभीत्याख्यावरदेषु च ।। १५६ ।।

मुखांसहृदयेषु त्रीन् परान् पादोरुकुक्षिषु।
ऊर्ध्वाधोगोलकावत्तु न्यासोऽयं गोलकाह्वया ।। १५७ ।।

न्यसेत् तत्पुरुषाघोरवामसद्येश संज्ञकान्।
फालांसयुक् कुक्षिहृत्सु स्थाणुमन्त्रञ्जपेत्रिशः ।। १५८ ।।

नमोऽस्तुस्थाणुभूताय ज्योतिर्ल्लिङ्गावृतात्मने।
चतुर्मूर्त्तिवपुच्छाया भासितांगाय शम्भवे ।। १५९ ।।

स्थाणुमन्त्रस्समाख्यातस्त्वयमेवौपचारिकः।
हृत्फालान्तशिखाबाहुयुग्मेष्वक्षिषु दोस्तले ।। १६० ।।

जात्याख्यासंयुतैर्मूलवर्णैरङ्गानि कल्पयेत्।
हृदयं सशिरस्तद्वच्छिखा च कवचं पुनः ।। १६१ ।।

नेत्रत्रयं तथास्त्रं च ङेन्तान्याख्या स्मृता अमी।
नमस्स्वाहा वषड्हुं च वौषट् फडिति जातयः ।। १६२ ।।

अनामा मध्यमा मध्यप्रसृताङ्गुष्ठमुष्ठिका।
मुद्रैषा हृदये प्रोक्ता शिरोमुद्रा तु कथ्यते ।। १६३ ।।

तर्ज्जाग्रमुष्टिसंलग्न प्रथमाग्राहि सास्मृता।
उत्तानीकृत्य चाङ्गुष्ठं शिष्टैर्मुष्टिं प्रकाशयेत् ।। १६४ ।।

समाख्याता शिखामुद्रा कथ्यते कवचात्मिका।
गूढाङ्गुष्ठकराभ्यां तु कवचे परिवेष्ट्य च ।। १६५ ।।

गात्रं समाहरेत् तर्ज्जैः स्तनान्ते समुदीरिता।

तर्ज्जानामामध्यमाभिर्न्नेत्रयोरभिमर्शनम् ।। १६६ ।।

ललाटे युगपन्नेत्रमुद्रा सम्यक् प्रदर्शिता।
कृत्वा नाराच मुष्टी तु तिर्यक् सम्परिवर्त्त्य च ।। १६७ ।।

आयम्य मुञ्चेदेषैवमस्त्रमुद्रा समीरिता।
ऋषिस्तु शिरसाधार्यच्छन्दश्च रसनागतम् ।। १६८ ।।

मन्त्रात्मिका देवता च हृदयाम्बुजसंस्थिता।
निकुञ्च्यतिर्यक् प्रहितवेदाङ्गुलि समन्विता ।। १६९ ।।

मुद्रा परश्वधस्येयं ऊर्ध्वाङ्गुष्ठ प्रशालिनी।
तिर्यक् प्रसारिताङ्गुष्ठ शिरस्संस्थाग्रके पुनः ।। १७० ।।

अनामामध्यमे कुर्यान्मुद्रैषा हरिणस्य तु।
बहिर्मुखाश्चोत्तम्भित पाणिशाखामनाक् पुनः ।। १७१ ।।

प्रकम्प्राभयरूपा यामुद्रा साभयसंज्ञिता।
उत्तानपाणिप्रसृताशाखा निम्नितोदरा ।। १७२ ।।

वरदाख्या च मुद्रैषा स्वस्थाने दर्शयेदमूः।
हृदये भावयित्वाथ देवदेवमुमापतिम् ।। १७३ ।।

उपहारैर्धियाभ्यर्च्य यथाशक्तिमनुं जपेत्।
सतारं हृदयं ङेन्तं शिवार्णं च समुद्धरेत् ।। १७४ ।।

मनुराम्नाय सारोऽयं स्मरणाच्चिन्तितार्थदः।
वामदेव ऋषिः प्रोक्तः पङ्क्तिः छन्द उदाहृतः ।। १७५ ।।

देवता सर्ववेदान्त संग्रहस्तु सदाशिवः।

पुनरङ्गादिकं कृत्वा शङ्खपूरेणमारभेत् ।। १७६ ।।

वामभागोपलिप्ते तु मण्डले न्यस्य वर्द्धनीम्।
गन्धपुष्पादिकं क्षिप्त्वा जपेत् सृष्ट्वा इमा इति ।। १७७ ।।

इमा आपश्शिवास्सन्तु शुभाश्शुद्धाश्च निर्मलाः।
पावनाशीतलाश्चैव पूतास्सूर्यस्य रश्मिभिः ।। १७८ ।।

अथोपलिप्य पुरतोमण्डलं गोमयाम्भसा।
गन्धपुष्पाक्षतं तत्रनिक्षिप्य प्रणवेन च ।। १७९ ।।

शङ्खं सपादमम्भोभिः क्षालयित्वास्त्रमन्त्रतः।
मण्डले न्यस्य शङ्खाङ्घ्रिं वह्निबिंबमनुं जपन् ।। १८० ।।

सूर्यबिम्बाणुना शङ्खमस्मिन् विन्यस्य दर्शयेत्।
शङ्खमुद्रां हृदा तस्मिन् क्षिप्त्वा गन्धाक्षतार्त्तवम् ।। १८१ ।।

क्षाद्यक्षरैः शिरोनिष्ठैरापूर्य सलिलैश्शुभैः।
अस्मिन् गन्धादिकं क्षिप्त्वा पादशङ्खजलेष्वथ ।। १८२ ।।

वह्निसूर्य सोमविम्ब मनुभिः पूजयेत् क्रमात्।
संबध्य गालिनीं मुद्रां शिखयोत्पूय तज्जलम् ।। १८३ ।।

समन्त्रं निर्विषीकृत्य मुद्रया गरुडाख्यया।
सुरभेर्मनुमुद्राभ्याममृतीकुरुतादथ ।। १८४ ।।

इतरेतरतज्जात्यामनामे प्रकलय्य च।
दीर्घरूपेण संश्लिष्य मध्यमेद्वे प्रसारयेत् ।। १८५ ।।

तर्ज्जनीमूल संलग्नौ कृत्वाङ्गुष्ठौ कनिष्ठके।

कुर्यादनामसंलग्नौ शङ्खमुद्रा प्रकीर्त्तिता ।। १८६ ।।

आबध्यान्योन्यमङ्गुष्ठ कनिष्ठाद्वितयं पुनः।
शिष्टाङ्गुलीरधोवक्त्राः किञ्चिदाकुञ्चिताग्रिकाः ।। १८७ ।।

भ्रामयेदूर्ध्वतोमुद्रा गालिन्यैषा प्रकीर्त्तिता।
परावृत्य करौ ज्येष्ठाद्वयाग्रमवलम्ब्य च ।। १८८ ।।

तर्ज्जा कनिष्ठाद्वितयमन्योन्यं प्रकलय्य च।
पक्षवच्चालयेदन्या मुद्रैषा गारुडी मता ।। १८९ ।।

कनिष्ठानामयोर्द्वन्द्वं तर्ज्जामध्यमयोर्मिथः।
कुर्याद्व्यत्यस्तबन्धाग्रमधोमुखमितीरिता ।। १९० ।।

मुद्रेयं सौरभीनाम तन्मन्त्रस्तु निगद्यते।
एह्येहि सुरभीत्युक्त्वा अमृते अमृताद्भवे ।। १९१ ।।

अमृतवर्षिणीति ठं वं बीजं तथामृतम्।
उद्धरेत्स्रावयद्वन्द्वं स्वाहान्तं तारपूर्वकम् ।। १९२ ।।

वीक्ष्य नेत्राणुनाम्भस्तद्वर्मणाच्छाद्यदोर्युजा।
बध्वादिशोऽस्त्रमन्त्रेण गङ्गेचेत्यणुना ततः ।। १९३ ।।

आदित्यमण्डलात्तीर्थमावाह्यास्मिन्नियोजयेत्।
गङ्गे च यमुने चैव गोदावरिसरस्वती ।। १९४ ।।

नर्मदे सिन्धु कावेरी जलेऽस्मिन् सन्निधिं कुरु।
ततः पीठं समभ्यर्च्य मन्त्री स्वहृदयाम्बुजात् ।। १९५ ।।

ज्योतिरावाह्य मूलेन साङ्गीकृत्याभिपूज्य च।

हस्ते निषिच्य किञ्चित्तत् स्थूलसूक्ष्मपरात्मना ।। १९६ ।।

निषिच्यशङ्खवार्येव त्रिष्कृत्वस्तत्प्रजप्य च।
वर्धन्यान्तर्ज्जलं किञ्चित् प्रतिषिच्यामुना त्रिशः ।। १९७ ।।

प्रोक्षयेद्यागभूमिं तं द्रव्याण्यात्मानमेव च।
न्यासक्रमेण सम्पूज्य पीठं देहे शिताशायः ।। १९८ ।।

त्र्याधारभाजितेजांसि परिभाव्य जलादिभिः।
तानि सम्पूज्य तारांशैः प्लुतं प्रणवमुच्चरन् ।। १९९ ।।

एकीकृत्याणुमायम्य मूलेनावाह्य चित्कला।
सकलीकृत्य दत्वार्घ्याद्युपहारान् क्रमेण तु ।। २०० ।।

तारोपचारमूलार्णैरर्चयित्वा जलादिभिः।
ईशादिब्रह्मभिः पश्चात् गन्धपङ्केन लेपयेत् ।। २०१ ।।

फाले गलेंऽसे दक्षे च वामे च हृदये तथा।
स्थाण्वात्मकेन मनुना पञ्चकृत्व स्वमूर्धनि ।। २०२ ।।

कृत्वा पुष्पाञ्जलिं सूनैर्विविधैः प्रयजेदथ।
तुलस्यश्मारिकमलै र्विमलैररुणैः क्रमात् ।। २०३ ।।

दक्षे सव्ये तथा भागे द्विचन्दनरसोक्षितैः।
आनाभिपादादाहृच्च तस्मादाचिल्लियुक्ततः ।। २०४ ।।

पञ्चकृत्वः पृथङ्मूलेनैतैर्ध्वर्कसमन्वितैः।
अशेषाङ्गेष्वशेषैश्च कुसुमैरर्चयेत् ततः ।। २०५ ।।

एषां लाभो यदिभवेदेतत् कर्त्तव्यमेव तु।

धूपदीपौ समर्प्याथ चिदानन्दसुधामयम् ।। २०६ ।।

दत्त्वा निवेधेबुद्ध्यार्घ्य प्रसन्नार्चां विधाय च।
ब्रह्मार्पणादिकं कृत्वा लयाङ्गं प्रविधाय च ।। २०७ ।।

कालात्मकोऽस्त्रमनुना कुर्यात्तालत्त्रयादिकम् ।।

।। इति कलशचन्द्रिकायां शिवभागे षष्ठपटलः समाप्तः ।।

# कलशचन्दिकायां शिवभागः
# सप्तमः पटलः

अथ पूजां समासेन वक्ष्याम्यागमचोदिताम्।
पुरुषार्थप्रदत्वाच्च कर्त्तव्यत्वाच्च देशिकैः ।। १ ।।

स्थाप्यते नित्यपूजार्थं भगवान् परमेश्वरः।
वितानाग्नौ यथा होमः कार्यस्तत्रार्चनंतथा ।। २ ।।

देवतां द्रव्यमात्मानमजानन्तोऽर्चयन्ति ये।
तृणकल्पितपुत्राद्यैरात्मानं मोदयन्ति ते ।। ३ ।।

पूर्ववत् शङ्खमापूर्य पीठेदेवस्य पादयोः।
कृत्वाथ शक्तिं बीजेन मूलेन कुसुमाञ्जलिम् ।। ४ ।।

गुरुवन्दनमारभ्य कृत्वा प्राकारपश्चिमम्।
गुरुविन्घार्चनं कुर्यादुदक् दक्षिणयोरथ ।। ५ ।।

आधारशक्तिं प्रकृतिं कूर्मानन्तौ वसुन्धराम्।
अभ्यर्च्य मध्ये बह्न्यादिकोणगां पादरूपिणः ।। ६ ।।

धर्मं ज्ञानं च वैराग्यमैश्वर्यं तारपूर्वकम्।
प्रागाद्येतान् नञ्विशिष्टान् पीठांघ्रींस्तन्मयान् यजेत् ।। ७ ।।

स्वाद्यक्षरैस्सत्वरजस्तमस्संज्ञान् गुणात्मकान्।
गुणान्मायाञ्च विद्यां च यजेच्छादनवाससी ।। ८ ।।

तत्र मध्ये यजेत् पद्ममष्टपत्रं सुशोभनम्।
नवशक्तीः केसरेषु कर्णिकायां यजेत् पुनः ॥ ९ ॥

वामा ज्येष्ठा तथा रौद्री काळी कलविकलिनी।
तद्वत् बलविकलिनी बलप्रथमनी तथा।
सर्वभूतदमनी च नवमी च मनोन्मनी ॥ १० ॥

सूर्यसोमाग्नि बिम्बानि स तारांशानि च क्रमात्।
दलकेसरमध्येषु विष्वक् सञ्चिन्त्य संयजेत् ॥ ११ ॥

मण्डलानामभेदेन व्यस्त तारांशसंयुतम्।
आत्मानमन्तरात्मानं परमात्मानमेव च ॥ १२ ॥

ज्ञानात्मानं यजेन्मध्ये तारशक्ति समन्वितम्।
तारनामचतुर्थ्यन्ता नत्या च मनवः स्मृताः ॥ १३ ॥

तारं नमो भगवते प्रभाष्य सकलाक्षरान्।
गुणात्मशक्तियुक्ताय तथानन्ताय कीर्त्तयेत् ॥ १४ ॥

योगपद्मेति सम्प्रोक्त्वा वदेत् पीठात्मने नमः।
एवं समष्टिमनुना यजेत् पीठार्चनं स्मृतम् ॥ १५ ॥

जलगन्धप्रसूनैश्च धूपदीपसमन्वितैः।
एवमाराधितं पीठं प्रकृतित्वेन भावयेत् ॥ १६ ॥

तत्र मन्त्रमयीं मूर्त्तीं मूलेन परिकल्प्य च।
तस्यामावाहयेत् विद्वानैश्वरं परमं महः ॥ १७ ॥

तारत्रयं स्थाणुमन्त्रं मूलसंज्ञं महामनुम्।

संबुद्धिरूपं भगवच्छब्दमागच्छयुग्मकम् ।। १८ ।।

तारान्ते शिवमावाहयामीत्यावहनं चरेत्।
मूलचक्रादात्मचित आद्येन चलनं स्मृतम् ।। १९ ।।

तदाकृष्टिः परेणोर्ध्वमुद्गमय्य परात्मनि।
विलापनं तृतीयेण तारेण परिभावयेत् ।। २० ।।

उपचारेण संस्तूय मूलेन प्रविधाय च।
मन्त्रात्मना परिणतिं पुष्पपूरकराञ्जलौ ।। २१ ।।

पदत्रयेणावतीर्य शिष्टेन मनुना पुनः।
प्रतिमाहृदयाम्भोजस्फुरन्मूर्त्तौ नियोजयेत् ।। २२ ।।

आवाहनादिकामुद्राः पञ्चमन्त्रैः प्रदर्शयेत्।
पूर्वमावाहितो भव ततस्संस्थापितो भव ।। २३ ।।

सन्निधापितो भव सन्निरुद्धो भवेति च।
सुप्रसन्नो भवेत्येते पञ्चमन्त्राः प्रकीर्त्तिताः ।। २४ ।।

कुर्याद् यद्वावकुण्ठनममृतीकरणं तथा।
सन्निरोधस्य परतः प्रसादात् पूर्वमेव तु ।। २५ ।।

हस्ताभ्यामञ्जलिं बध्वा कनिष्टाद्वयमूलयोः।
सक्ताग्राङ्गुष्ठयुगलामुद्रा सावाहनी भवेत् ।। २६ ।।

अधोमुखीयमेवस्यान्मुद्रा संस्थापनीमता।
संसक्तावुच्छ्रिताङ्गुष्ठौ करौ सम्बद्धमुष्टिकौ ।। २७ ।।



तथैव भ्रामयेदेषा मुद्रा स्यात् सन्निधापनी।

गर्भाङ्गुष्ठौ तथा युक्तौ भवेदिह निरोधिनी ।। २८ ।।

शिरस्यधोमुखौ कृत्वा चानुपुष्पाञ्जलिं करौ।
तत आपादसंस्पर्शान्मुद्रा स्यादवकुण्ठनी ।। २९ ।।

मूर्ध्नि संयोजिता धेनुमुद्रा प्रोक्तामृतीकृतः।
उत्तानमुष्टिद्वितयमनुमोदक्रमात् पुनः ।। ३० ।।

तिर्यक् प्रसारयेदेषा मुद्रा प्रोक्ता प्रसादिनी।
गन्धदिग्धकराभ्यां तु मूलेन व्यापयेदथ ।। ३१ ।।

सूत्रवक्त्राङ्गकं न्यस्त्वा मूलेन व्याप्यतं पुनः।
लिपितत्त्व मनुन्यासैस्साङ्गैर्यद्वा षडध्वभिः ।। ३२ ।।

सकलीकृत्य विन्यस्तभूषायुधमनुस्मरेत्।
बिभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः ।। ३३ ।।

सर्वालङ्कारदीप्तः सरसिजनिलयो व्याघ्रचर्मात्तवासाः।
ध्येयो मुक्तापरागामृत कलितरसादिप्रभः पञ्चवक्त्रः ।। ३४ ।।

त्र्यक्षः कोटीरकोटीघटित तुहिन रोचिष्कलातुङ्गमौलिः।
प्रदाय विष्टरत्वेन तस्मै पीठं समर्चितम् ।। ३६ ।।

स्वागतं प्रवदेदंघ्र्योः पुष्पमाराध्य मूलतः।
पाद्यं पादद्वये दद्यादर्घ्यमास्ये ददे द्विभोः ।। ३७ ।।

आचामं वदने दक्षे मधुपर्कं करे ददेत्।
पुनराचमनं दत्त्वा विहरेत् परिषद्गणम् ।। ३८ ।।



वह्नेर्यथा स्फुलिङ्गानि तरङ्गाण्यम्बुधौयथा।

एषां तद्वद्भिदा कल्प्या भेदाभेदेन मूर्त्तितः ।। ३९ ।।

ततोऽस्मै स्नपनं वासो युगलं चोपवीतकम्।
भूषणानि च दत्त्वाथ तदङ्गेभ्यः समर्चयेत् ।। ४० ।।

स्नानवासोभूषणानि स्नानमात्रमथार्पयेत्।
तदन्यपरिवाराणामथ गन्धादिभिर्यजेत् ।। ४१ ।।

तारोपचारमूलैश्च सूत्रवक्त्राङ्गहेतिभिः।
सम्पूजयेद्देवमूर्त्तौ शम्भुपक्षोऽयमीरितः ।। ४२ ।।

प्राक् दक्षिणाप्यसौम्योर्ध्वेष्विज्यास्तत्पुरुषादयः।
अग्नीशरक्षोवायूनामाशासु कवचान्तिमम् ।। ४३ ।।

नेत्रत्रयं पुरोभागे चतुर्दिक्ष्वस्त्रमर्चयेत्।
दिक्ष्वनन्तं च सूक्ष्मं च शिवोत्तमैक नेत्रकौ ।। ४४ ।।

एकरुद्रं त्रिमूर्त्तिं च श्रीकण्ठं च शिखण्डिनम्।
ईशादिकोणेष्वभ्यर्च्य चोत्तराद्यनिलान्तिमम् ।। ४५ ।।

उमा चण्डेश्वरो नन्दी महाकालो गणेश्वरः।
वृषोऽभिङ्गिरिटिस्कन्दः सम्पूज्या क्रमशो अमी ।। ४६ ।।

तद्बाह्ये पूजयेत् पूर्वादीशान्तं लोकनायकान्।
इन्द्रोऽग्निश्च यमस्तद्वन्निरृतिर्वरुणस्तथा ।। ४७ ।।

वायुः सोमस्तथेशानस्त्वनन्तो निरृतौ स्थितः।
ईशे ब्रह्मात्वर्चनीयः तद्बहिश्च तदस्त्रकान् ।। ४८ ।।

वज्रं शक्तिं तथा दण्डं खड्गं पाशं तथाङ्कुशम्।

गदांत्रिशूलं चक्रं च पद्ममभ्यर्चयेत् क्रमात् ।। ४९ ।।

लोके शान्तर्यजेदीशे चण्डं निर्माल्यभोजिनम्।
जलगन्धार्त्तवैरेवं क्रमेणैतान् प्रपूज्य च ।। ५० ।।

पुष्पावृतिं ततः कुर्याद् वक्ष्यमाणक्रमेण तु।
गन्धद्वयाम्बुसंसिक्तैः तुलसीद्वयपूर्वकैः ।। ५१ ।।

पुष्पैः पूर्ववदाराध्य देवबिम्बे ततस्त्रिशः।
आद्या पुष्पावृतिरियं द्वितीया मूलवर्णकैः ।। ५२ ।।

इन्द्रवज्रादिरहितैः परिवारैः प्रकीर्त्तिताः।
मूलेनाङ्गैस्तृतीया च तुरीया परत्वतः ।। ५३ ।।

त्रिशः पुष्पाञ्जलिं कृत्वा सान्द्रघण्डारवान्वितम्।
नीचैर्धूपंदीपमुच्चैः सर्वावरणसंयुतम् ।। ५४ ।।

दत्त्वास्मै तदा वृतिभ्यो जलं दत्त्वा सकृत् सकृत्।
विभूतिजातं तारेण पुष्पाञ्जलिपुरस्सरम् ।। ५५ ।।

देवे विलाप्य तं किञ्चिदर्चयित्वा ददेदथ।
पाद्यमर्घ्यं तथाचामं पुरोभूमिं विशोध्य च ।। ५६ ।।

निवेद्यजातमाधाय कदल्याज्यगुलान्वितम्।
प्रोक्ष्यास्त्रेण सुसंरक्ष्य वायुजप्ताम्भसा ततः ।। ५७ ।।

विशोध्य न्यस्ताग्निबीजदक्षदोष्णा प्रदह्य तत्।
वामदोर्गतवं बीजस्नुतामृतरसाप्लुतम् ।। ५८ ।।

अष्टशोमूलसञ्जप्तं ध्यायेन्मन्त्रामृतीकृतम्।

प्रदर्श्य सौरभीमुद्रां जलाद्यैस्तद्यजेत् पुनः ।। ५९ ।।

अभ्यर्थयेदाभिमुख्यं विहितप्रसवाञ्जलिः।
विसारयेच्चवदनादर्चिर्भगवतस्ततः ।। ६० ।।

परिषिच्याभिमृश्याथ दत्त्वोपस्तरणामृतम्।
ससूनकरयुग्मेन निवेद्य वदनार्चिषोः ।। ६१ ।।

कृत्वा सम्बन्धमन्योन्यमर्पयेदमृतं मुखे।
निवेदयामि भवते जुषाणेदं हविर्हर ।। ६२ ।।

अनेन प्राणादिमुद्रामनुभिश्च समर्पयेत्।
वामदोष्णा ग्रासमुद्रां दर्शयन्नुत्पलाकृतिम् ।। ६३ ।।

प्राणादिमन्त्रास्ताराद्या ङेन्ता स्वाहा समन्विताः।
कनिष्ठानामिके मध्या तर्ज्जन्यौज्येष्ठयास्पृशेत् ।। ६४ ।।

मध्यानामे तथानाम मध्या तर्ज्जास्तथाखिलाः।
एताः प्राणादिमुद्रास्युः ज्यायस्याभिमृशेत्तु वा ।। ६५ ।।

कनिष्ठाद्याश्चतस्रोऽपि तर्ज्जन्या ज्यायसीमपि।
मलधातू परित्यज्यरसांशं वदनार्चिषि ।। ६६ ।।

अन्नादेवं समायोज्याथानेन मनुना ततः।
तारं श्लिष्टतयोच्चार्य टान्तामृतमनुस्वरान् ।। ६७ ।।

नतिं शिवायाबात्मना वामदेवं च टान्वितम्।
निवेद्यं कल्पयामीति ब्रूयादेवं मनुःस्मृतः ।। ६८ ।।



सकले हृद्गते देवे वितते त्वनलात्मके।

रसादपि रसांशं तदिन्दुरूपं समर्पयेत् ।। ६९ ।।

अङ्गुष्ठाभ्यामनामे द्वे स्पृष्ट्वास्मै दर्शयन् सुधीः।
ततस्तु शक्ति ताराभ्यामिन्दुरूपां नियोजयेत् ।। ७० ।।

शिवैकभोग्यां प्रकृतिमानन्दैकस्वरूपिणीम्।
अनलान्तर्भासमाने चिद्रूपे तु शिवात्मके ।। ७१ ।।

जाज्वल्यमानं तत्तेजो वह्निरूपमनुस्मरन्।
सम्बध्य धेनुमुद्रां च साञ्जलिं मूलमष्टशः ।। ७२ ।।

जप्त्वा तालत्रयाद्यैश्च रक्षामस्त्रेण कल्पयेत्।
बध्वा कवाटमासाद्य पूजाहोमाय तद्गृहम् ।। ७३ ।।

अग्न्यर्चनान्ते पीठेज्यापूर्वमावाह्यशङ्करम्।
अभ्यर्च्य साङ्गावरणं होमं कुर्याद् यथाविधि ।। ७४ ।।

तारव्याहृति पीठादि मनुभिश्च सकृत् सकृत्।
मूलेनाष्टशतं चाङ्गमनुभिस्तद्दशांशकम् ।। ७५ ।।

एकैकवारमन्यैश्च परिवारैर्यथोदितैः।
तथा व्याहृतितारैश्च हुत्वा जप्त्वा प्रसाद्य च ।। ७६ ।।

निष्कलीकृत्य चोद्वास्य परिषद्बलिमाहरेत्।
सर्वेभ्यो भूतेभ्यश्शिवपार्षदेभ्य इतीरयेत् ।। ७७ ।।

बलिमन्त्रः समाख्यातस्तारादिर्नमसायुतः।
वह्नौ वायौ तु वा दद्यात् त्रिमुष्ट्या बलिपीठके ।। ७८ ।।



प्रणम्याचमनं कृत्वा द्वास्थानुज्ञा पुरस्सरम्।

अन्तः प्रविश्य संवन्द्य पानीयार्पण पूर्वकम् ।। ७९ ।।

मुखार्चिरुद्वास्य मुखे रसग्रहरतं पुनः।
दत्वा पिधानीय जलं निर्माल्य प्रसवादिकम् ।। ८० ।।

उदगुद्धृत्य विन्यस्य चण्डेशाय समर्पयेत्।
विशोध्य भूमिं गण्डूषदन्तधावनपूर्वकम् ।। ८१ ।।

हस्तमार्ष्टिं चाचमनं मुखवासं समर्पयेत्।
जलगन्धार्तवाद्यैश्च समभ्यर्च्य प्रसाद्य च ।। ८२ ।।

पुष्पाञ्जलिं विधायाथ पञ्चब्रह्मपुरस्सरैः।
पञ्चभिर्मनुभिश्चाथ वक्ष्यमाणाऽणुभिस्ततः ।। ८३ ।।

गुरुभ्य इदमित्याद्यैर्न्नमोन्तैस्तारपूर्वकैः।
गुरुपितृस्वमात्रात्म सहोदरकुडुम्बिनीः ।। ८४ ।।

तनयं वंश्यसाध्यांश्च महीतलसमाश्रितान्।
त्रिभुवनाश्रितांस्तद्वत् समुद्दिश्य ततोऽमुना ।। ८५ ।।

मन्त्रेण वक्ष्यमाणेन कर्मतच्च समर्पयेत्।
प्रीणातु भगवानीशः कर्मणानेन शाश्वतः ।। ८६ ।।

यन्मयेत्यादिमनुना यद्वा कर्म समर्पयेत्।
यन्मया क्रियते कर्म जाग्रत्स्वप्न सुषुप्तिषु ।। ८७ ।।

तत्सर्वं तावकी पूजा भूयाद् भूत्यैव मे शिवम्।
सहस्रवारं सञ्जप्य मूलं पादाम्बुजं स्पृशन् ।। ८८ ।।



गुह्यातिगुह्यमनुना महादेव पदाम्बुजे।

सोदकं भक्तिनम्राङ्ग कुर्यात् जपसमर्पणम् ।। ८९ ।।

गुह्यातिगुह्य गोप्तस्त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देव त्वत्प्रसादाद् हृदि स्थितः ।। ९० ।।

इतः पूर्वेत्यादिना च मां मदीयादिना तथा।
ओं तत्सदित्यात्मना च तस्मैस्वात्मनमर्पयेत् ।। ९१ ।।

इतः पूर्वं प्राणबुद्धिदेहकर्माधिकारतः।
जाग्रत्स्वप्नसुषुप्तीनामन्तेऽवस्थास्वितीरयेत् ।। ९२ ।।

मनसा वाचा कर्मणा हस्ताभ्यामिति कीर्त्तयेत्।
पद्भ्यामुदरेण शिश्ना यत्स्मृतं चेति कीर्त्तयेत् ।। ९३ ।।

यदुक्तं यत्कृतं चेति तत्सर्वमिति चोच्चरेत्।
ब्रह्मार्पणं भवत्विति वह्निजायां वदेत् ततः ।। ९४ ।।

मां मदीयं चेति सर्वं साम्बायेति प्रकीर्त्तयेत्।
सर्वेश्वराय ब्रह्मणे समर्पयामीत्युद्धरेत् ।। ९५ ।।

देवपादाब्जयुगले दक्षदोष्णा तु सोदकम्।
स्वात्मने ब्रह्मणे मन्त्रैस्त्रिभिरात्मानमर्पयेत् ।। ९६ ।।

ततः प्रणवसावित्री वेदमन्त्रैरुमापतिम्।
परितोष्य प्रसन्नार्घ्यं प्रदद्यात् प्रश्रयान्वितः ।। ९७ ।।

भगवत्पादसविधं विहिते तु दरोदरे।
तत्करोल्लासिकलशस्रुतामृतजलात्मकम् ।। ९८ ।।

आहृत्याम्भोपरीयस्तत् स्वीयपुण्यफलं स्मरन्।

गुरूनुद्दिश्य देवाग्रे शाङ्कर्यामममृतान्धसः ।। ९९ ।।

रक्षोदिशि च दैतेयान् पुरोभुवि पितॄनपि।
स्वात्मानं साध्यमन्यांश्च तदम्भोभिस्समुक्षतु ।। १०० ।।

प्राक्षल्य शङ्खमापूर्य मान इत्यादिमन्त्रतः।
नमस्कृत्यात्मनो ज्ञातज्ञातमेनो विशोध्य च ।। १०१ ।।

कृत्वा पुष्पाञ्जलिं तारेणास्मै दत्वार्घ्यमादरात्।
अवसानीयकं देवं निष्कलीकृत्य गोपयेत् ।। १०२ ।।

मण्डपेऽथ नमस्कृत्य देवदेवं क्षमापयेत्।
यद्वा प्रासादबीजेन पूजयेत् परमेश्वरम् ।। १०३ ।।

ईशानादिक्रमानन्यस्येज्ज्येष्ठाद्यङ्गुलिषु क्रमात्।
पूर्ववत् पीठपूजादि कृत्वा वाहन पश्चिमम् ।। १०४ ।।

सूत्रवक्त्रङ्कन्यसेद् वक्ष्यमाणक्रमेण च।
ईशतत्पुरुषाघोरवामसद्यान् सबीजकान् ।। १०५ ।।

विश्वादि विषमाद्भिस्तु विक्लीबैः बिन्दुसंयुतैः।
विहायसा संयुतेन बीजान्येषां प्रकल्पयेत् ।। १०६ ।।

कास्यादिषूर्ध्वप्रागादि मुखेष्वपि च विन्यसेत्।
विहायसादीर्घषट्कयुक्तेनाङ्गानि कल्पयेत् ।। १०७ ।।

ऋष्याद्या वामदेवश्च पङ्क्तींश्चैव सदाशिवः।
चतुर्दशस्वरोपेतं वियद्बिन्दुसमन्वितम् ।। १०८ ।।



प्रासादसंज्ञसंप्रोक्तो बीजरूपो मनूत्तमः।

शूलाही टङ्कघण्डासिसृणि कुलिशापाशाग्न्यभीतीश्चदोर्भिः।
बिभ्राणं देवदेवं दशभिरथ चतुर्भिस्तु वा दक्षिणाद्यैः ।। १०९ ।।

रुद्राक्षस्त्रक्कपाले त्रिशिखमपि सखट्वाङ्गकं चाध ऊदर्ध्वम्।
ध्यायेत् प्रासादरूपं स्फटिकमणिनिभं पद्मसंस्थं प्रसन्नम्।
न्यासक्रमेण सम्पूज्य सूत्रवक्त्राङ्गहेतिभिः ।। ११० ।।

वारुणोदीच्ययाम्यप्रागूर्ध्वदिक्संस्थितैः क्रमात्।
सद्याद्यैरीशपर्यन्तैरन्यत् पञ्चार्णवद्यजेत् ।। १११ ।।

पञ्चब्रह्मविधानेन पूजयेद् वा महेश्वरम्।
ईशादिसूक्तैर्विन्यस्थेत् ज्येष्ठाद्यङ्गुलिषु क्रमात् ।। ११२ ।।

अङ्गुष्ठादितलान्तं च तदङ्गानि प्रविन्यसेत्।
न्यस्त्वा ब्रह्ममनून् सूत्रवक्त्रक्ळप्त्यास्वविग्रहे ।। ११३ ।।

अष्टत्रिंशत् तत्कलाश्च तदङ्गानि च विन्यसेत्।
पञ्चतारोपविष्ठात्तु सर्वज्ञायेति हृन्मनुः ।। ११४ ।।

अमृते तेज इत्युक्त्वा मालिनीति ततो वदेत्।
तृप्ताय ब्रह्मशिरस इति मन्त्रश्शिरोगतः ।। ११६ ।।

ज्वलितशिखिशिखे चानादिबोधा च ङेन्विताः।
शिखा स्यात् वाज्रिणे प्रोक्त्वा वज्रधराय इत्यपि ।। ११७ ।।

स्वतन्त्रायेति कवचं सौं चौं हौमिति कीर्त्तयेत्।
अलुप्तशक्तये नेत्रमन्त्रं पाशुपतं वदन्।। ११८ ।।

अनन्तशक्तये चास्त्रं ज्यात्याख्या संयुतास्त्वमी।

ऋषिच्छन्द्रोदैवतानि कथ्यन्तेऽथक्रमेण च ।। ११९ ।।

ईशानतत्पुरुषानि वामदेवहराः क्रमात्।
भूर्यनुष्टुप्गायत्री भूयोरनुष्टुप् तथा कृतिः ।। १२० ।।

अनुष्टुबीश्वरस्तद्वदापं आपो भगो भगः।
मनुराम्नायसारोऽयं ज्ञातन्यो गुरुसन्निधौ ।। १२१ ।।

प्राग्वत् सम्पूजिते पीठे समावाह्येश पूर्वकैः।
सद्याद्यैरावहनादिमुद्राः पञ्च प्रदर्शयेत् ।। १२२ ।।

ईशेनोपहृती दत्वा तारस्थाण्वीश पूर्वकैः।
सूत्रवक्त्राङ्गायुधैश्च कृत्वा विग्रहपूजनम् ।। १२३ ।।

ऊर्ध्वप्राग्याम्यसौम्याप्य दिक्षु सम्पूजयेदथ।
ईशादिसूक्तमनुभिः अनन्ताद्यैस्ततोर्चयेत् ।। १२४ ।।

अक्षमाला कपालेऽधः शूलं खट्वाङ्गमूर्ध्वतः।
बिभ्रतं कुन्दसङ्काशं वन्दे बालेन्दुशेखरम् ।। १२५ ।।

एषामेकतरेणापि पूजयेदिन्दुशेखरम्।
अष्टाक्षरेण वा देवं पूजयेदम्बिकापतिम् ।। १२६ ।।

प्राक् प्रोक्तपीठे देवेशमावाह्य विधिना गुरुः।
कास्य हृद्गुह्य पादेषु न्यसेदीशादिपञ्चकम् ।। १२७ ।।

ऊर्ध्वप्रागादिवक्त्रेषु हृल्लेखादिसमन्वितम्।
हृल्लेखांगगनाख्यां च दत्तान्तस्तद्वत् करालिकाम् ।। १२८ ।।



महोच्छुष्टां नतेः पूर्वं चतुर्थ्यन्तास्तु योजयेत्।

न्यसेत् मन्त्राक्षरैर्विद्वान् गोलकां वज्रपूर्विकाम् ।। १२९ ।।

आधारनाभिहृदयानननेत्रयुग्म भ्रूमध्यफालशिरसिक्रमशोष्टवर्णान्।
न्यस्येच्छिरस्यलिकदृक् श्रुतियुग्विनासा-
गण्डाधरास्यरसनाचिबुकान्धरेषु ।। १३० ।।

द्वोः पादसन्धिषु च साङ्गुलिषु क्रमेण।। १३१ ।।

ग्रीवाककुस्तनयुगेषु च पार्श्वपृष्टे।
बाह्वन्तरे च हृदयं परिताश्शिरोक्षि-
वक्त्रेषु हृत्परशुखेटवराभयेषु ।। १३१ ।।

न्यासः पृथक् प्रणवशक्ति युतैर्न्नमोन्तैः।
सान्निध्यकारि नितरां जनरञ्जनं च ।। १३२ ।।

सदीर्घशक्ति प्रासादबीजयुक्तैः षडक्षरैः।
अङ्गान्यष्टाक्षरैर्यद्वा कुर्यात् सोदरपृष्ठकम् ।। १३३ ।।

ऋष्याद्या वामदेवश्च पङ्क्तिश्चाथ सदाशिवः।
आदौ तु शक्तिगायत्री संविद्युक्ता इमे स्मृताः ।। १३४ ।।

शक्तिः प्रासादसंयुक्तो मनुरेव षडक्षरः।
वामाङ्कन्यस्त वामेतरकर कमलायास्तथा वामबाहु-
न्यस्तारक्तोल्पलायास्तनविधृतिलसद्वामबाहुप्रियायाः।
सर्वकल्पाभिरामो धृतपरशुमृगेष्टः करैः काञ्चनाभो
ध्येयः पद्मासनस्थः स्मरललिततनुः समादे पार्वतीशः
।। १३५ ।।

पञ्चब्रह्मवदेवस्यात् परिवारार्चने क्रमः।
तारं ह्रीं स्फुरयुगलं तथा प्रस्फुरयुग्मकम् ।। १३६ ।।

घोर घोरतरेत्युक्त्वा तनुरूपपदं वदेत्।
चटप्रचटकहेतिवमवमबन्धेति वीप्सया ।। १३७ ।।

घातयेति च सम्प्रोक्त्वा हुं फडन्तं समुद्धरेत्।
अघोरत्रिष्टुबघोररुद्रा ऋष्यादयस्मृताः ।। १३८ ।।

भूतभर्त्तुभिर्न्नागेन्द्रसूर्यार्णैरङ्गकल्पना।
कालाभ्राभः कराग्रैः परशु डमरुकौ खड्गखेटौ च बाणे-
ष्वासौ शूलं कपालं दधति भयदो भीषणास्यः त्रिनेत्रः।
रक्ताकल्पाम्बरो हि प्रवरघटितगात्राऽरिनागग्रहादीन् ।। १३९।।

खादन्निष्टार्थदायी भवदनभिमतच्छित्तयेस्यादघोराः।
छान्तः कर्णेन्दुसंयुक्तो भृगुस्सर्गी ध्रुवादिकः ।। १४० ।।

मृत्युजिन्मनुराख्यातः सामाद्यङ्गसमन्वितः।
कहोलानुष्टुमृत्युजिद्रुद्रा ऋष्यादिका स्मृताः ।। १४१ ।।

पुटितनलिनसंस्थं मौलिबद्धेन्दुरेखागलममृतरसार्द्रं
चन्द्रवह्न्यर्कनेत्रम्।
स्वकर कलित मुद्रा पाशवेदाक्षमाल
स्फटिकरजतमक्ता गौरमीशं नमामि ।। १४२ ।।

ताराद्यं शरशक्तिबीजं प्रोक्त्वा रज उपाधये।
स्थूलवीराश्शरीराय विश्ववैश्वानरात्मने ।। १४३ ।।

सर्वस्रष्टे ब्रह्मणे च पदान्येवं समुद्धरेत्।
सरस्वतीसहिताय सर्वज्ञाय वदेत् तथा ।। १४४ ।।

सदात्मने सङ्गाखण्डसंविदे च पदे वदेत्।
समूलः परमात्मने नम इत्येवमुद्धरेत् ।। १४५ ।।

तारतन्मध्य हृल्लेखा बीजद्वयमुदी च।
वदेत् सत्त्वोपाधये च सूक्ष्मशब्दादनन्तरम् ।। १४६ ।।

हिरण्यगर्भेत्युक्त्वा च शरीरायेति कीर्त्तयेत्।
तैजसेति समाभाष्य वदेत् सूत्रात्मने पदम् ।। १४७ ।।

प्रोक्त्वा सर्वपालकाय विष्णवे पदमुद्धरेत्।
लक्ष्मीसहिताय तथा सर्वज्ञाय पदे वदेत् ।। १४८ ।।

भूय आनन्दात्मने तथा सङ्गाद्वयसंविदे।
प्रोक्त्वाथ मूलमन्त्राद्यमुद्धरेत् पूर्ववत्सुधीः ।। १४९ ।।

तारान्त्यबीजं ह्रींकारं ततस्मम उपाधये।
सौषुप्तिज्ञानवर्णान्ते शरीरायेति कीर्त्तयेत् ।। १५० ।।

प्राज्ञेश्वरात्मने सर्वसंहर्त्रे च पदे वदेत्।
प्रोक्त्वा सदाशिवायेति तथोमासहिताय च।। १५१ ।।

सर्वज्ञाय चिदात्मने तथा सङ्गेति कीर्तयेत्।
अपशेक्षसंविदे च प्रोक्त्वा मूलाद्यमुद्धरेत् ।। १५२ ।।

गुणसाम्यो पाधेय च व्याकृताव्याकृतेति च।
शरीरायेति च प्रोक्त्वा प्रत्यक् ब्रह्मात्मने तथा ।। १५३ ।।

सर्वोत्पत्तिस्थितीत्युक्त्वा कर्त्रे संहारपूर्वकम्।
सर्वेश्वरायेति पुनः मूलप्रकृतिवर्णतः ।। १५४ ।।

मायासहितायेत्युक्त्वा सर्वज्ञाय पदं वदेत्।
सदानन्दचिदात्मने असंगाखण्ड वर्णतः ।। १५५ ।।

अद्वया परोक्षसंविदेऽथ मूलाद्यमुद्धरेत्।
द्वितारशक्तिबीजाद्यो मनुरेवं समुद्धृतः ।। १५६ ।।

तारत्रयं शक्तिबीजं निरवद्यार्णतः परम्।
आभाष्य निर्गुणायशीः या शरीराय वर्णकान् ।। १५७ ।।

असंगप्रत्यगित्युक्त्वाऽथाद्वयाय पदं वदेत्।
स्वभासावभासितान्ते कृत्स्नायेति पदंपुनः ।। १४८ ।।

असंगबोधायेत्युक्त्वाथासंगाखण्डवर्णतः।
वदेदद्वयापरोक्ष सदानन्द चिदात्मने ।। १५९ ।।

स्वबोधध्वस्तानर्थार्णानुक्त्वा द्वैतायकीर्त्तयेत्।
निरालम्बनबिम्बाय प्रोक्त्वा हीनमहोदयम् ।। १६० ।।

ङेन्तमुक्त्वाथ मूलाद्यमुद्धरेत् पूर्ववत्सुधीः।
एवं समुद्धृताः पञ्चपुष्पाञ्जलिमनूत्तमाः ।। १६१ ।।

समासेदवमाख्याता पूजा सर्वार्थ सिद्धिदा।
एनामहरहः कुर्वन् याति ब्रह्म सनातनम् ।। १६२ ।।

।। इति कलशचन्द्रिकायां शिवभागे सप्तमपटलः समाप्तः ।।

# कलशचन्दिकायां शिवभागः
# अष्टमः पटलः

अथोत्सवविधिं वक्ष्ये समासात्पार्वतीपतेः।
शुभे दिने तीर्थयात्रां पूर्वमेव प्रकल्प्य च ॥ १ ॥

द्वादशाहं नवाहं वा सप्ताहं वा स्वशक्तितः।
ध्वजस्थापनपूर्वं तु कुर्यादुत्सवमादरात् ॥ २ ॥

मासिपुष्ये तु पुष्यान्तं माघे वा माघपश्चिमम्।
फल्गुन्यन्तं फल्गुने वा चैत्रे चित्रान्तमेव वा ॥ ३ ॥

वैशाखे विशाखान्तं मार्द्रान्तं मार्गशीर्षके।
ध्वजदण्डस्य दैर्घ्यं तु द्वारोत्सेधेन कल्पयेत् ॥ ४ ॥

शरवर्गैरुत्तमं स्यादत्यष्टया मध्यमं भवेत्।
कनिष्ठं स्याद् दशगुणं त्रिधेवं परिकीर्त्तितम् ॥ ५ ॥

स्नात्वाऽचार्यः समाचम्य मन्त्रसात्कृतविग्रहः।
मण्डपे स्वस्तिकं कृत्वा पीठे व्रीह्यादिकल्पिते ॥ ६ ॥

लौहं वा दारुजं यद्वा वृषं नालसमन्वितम्।
संशोधितं पात्रस्थं पताकां च समुज्वलम् ॥ ७ ॥

न्यस्य नन्दीमुखं कृत्वा पुण्याहं च स मूर्त्तिपः।
अत्र तूत्सवदेवताः प्रीयन्तामिति योजयेत् ॥ ८ ॥

पीठमभ्यर्च्य भूतानि संहृत्य परिशोध्य च।
शोषदाहादिभिः कृत्वा वृषं लिपिमयं ततः ।। ९ ।।

आदिनाभ्यर्च्य देवाग्रमुपनीयाथ तद्द्वयम्।
देवाग्रतः समावाह्य वाहने वाहनाणुना ।। १० ।।

सकलीकृत्य ताराङ्गैः पताकामपि कल्पयेत्।
प्रकृतित्वेन सम्पूज्य स्वस्वमन्त्रेण तद्द्वयम् ।। ११ ।।

आह्वयेत् बिम्बपीठाभ्यां यद्वा मूलेन बीजतः।
अभ्यर्च्य पीठमावाह्य देवदेवं प्रपूज्य च ।। १२ ।।

प्रसाद्यास्मात् समावाह्य तस्य रक्षां समाचरेत्।
वाहं पताकां सन्धार्य शिष्येणाथ बहिर्व्रजेत् ।। १३ ।।

शङ्खतूर्यादिघाषेण गत्वा चैव प्रदक्षिणम्।
ध्वजस्थानं समासाद्य क्षालितं पूर्वमेव च ।। १४ ।।

पुण्याहशिष्टतोयैश्च माकन्दाश्वत्थपल्लवैः।
सन्नद्धध्वजदण्डं तु शोषणाद्यैर्विशोध्य च ।। १५ ।।

पीठं तस्मिन् समभ्यर्च्य संस्थाप्याग्रेऽस्य वाहनम्।
बध्वा पताकां तद्वामेखण्डां मालासमन्वितम् ।। १६ ।।

गर्ते पांसूनुदस्याथ तद्गर्त्तमुपलिप्य च।
विन्यस्य कूर्चाक्षतानि तस्मिन् पीठं समर्च्य च ।। १७ ।।

ध्वजदण्डं तु संस्थाप्य तस्मिन् विप्रैश्च यत्नतः।
स्थिरीकृत्थ च तन्मूले कुर्याद्वेदिं समेखलाम् ।। १८ ।।

आवाह्य वृषमाराध्य सनिवेद्यं प्रसाद्य च।
बलिमाहृत्य तन्मूले मन्त्राभ्यां प्रार्थयेत् पुनः ।। १९ ।।

नमस्तेऽस्तु त्रिनेत्राय ध्वजाधिपतये नमः।
नन्दिने तु नमस्तुभ्यमुत्सवस्य प्रसिद्धये ।। २० ।।

नमस्तेऽस्तु पताकायै सर्वलोकस्य धात्र्यै।
उत्सवस्य शिवस्यास्य त्राययस्व सदा नमः ।। २१ ।।

अभ्यर्थने च पूजायां मन्त्रौ ध्वजपताकयोः।
यद्वाष्टदिक्षु संस्थाप्य ध्वजान्नन्द्यादिमन्त्रतः ।। २२ ।।

संस्थाप्यावाह्य सम्पूज्य बलिं दत्वा प्रगोपयेत्।
बीजार्पणेन सह चेत् तद्रात्रौ तत्समाचरेत् ।। २३ ।।

ततो देवं च सम्पूज्य रात्रौ भूतबलिं हरेत्।
परेऽहनि समारभ्य सम्पूज्य सवनत्रये ।। २४ ।।

प्रातस्यायं बलिं दद्यादौत्सवं भौतिकं तु वा।
द्वयोः सवनभेदेन यद्वैकैकं समाचरेत् ।। २५ ।।

यत्रनित्यबलिः पूर्वं तत् कृत्वान्यत्समाचरेत्।
प्रातः प्रासादबीजेन मध्याह्ने ब्रह्मपञ्चकैः ।। २६ ।।

पञ्चाक्षरेण सायं च पूजयेत् परमेश्वरम्।
स्नापयेन्मध्यसवने पयोदध्याज्यगव्यकैः ।। २७ ।।

केरोदैर्गन्धतोयैश्च कलशौर्नित्यशः प्रभुम्।
वासयित्वा क्षौमवासो गन्धैरालिप्य सर्वतः ।। २८ ।।

स्रग्भिश्च भूषणैर्देवमलंकृत्याभिपूज्य च।
गुलाज्यकदलीकेरयुतमन्नं निवेदयेत् ।। २९ ।।

तदाननेषु विहितं निवेद्यं च निवेदयेत्।
ईशे तु पायसं पुंसि हारिद्रं कृसरं तथा ।। ३० ।।

अघोरे वामदेवे तु गौलं सद्येऽखिलं स्मृतम्।
वेदैर्वाद्यैस्तथागानैर्देवदेवं प्रतोषयेत् ।। ३१ ।।

सहायवानाथाचार्यो बलिं दातुमथारभेत्।
कृत्वाहविषि पीठार्चां किञ्चिदावाह्यमूलतः ।। ३२ ।।

तेनसम्पूज्य विभजेत् तद्धविश्च त्रिधा ततः।
दैविकं कल्पयेदाद्यं चण्डान्तं तत्प्रकीर्त्तितम् ।। ३३ ।।

सभूतकूरावितरौ पार्षदं भौतिकं क्रमात्।
आमन्त्रणं ततः कुर्याद् भूतानां वाद्यघोषणैः ।। ३४ ।।

पाणित्रयैः तत्वमिति पञ्चतालेषु योजयेत्।
समपाणिस्तथोपपूर्व पाणिश्चोपपदादिकः ।। ३५ ।।

तृतीयं तालमाद्यं तु मुद्रगाख्यन्द्वितीयकम्।
तलटाख्यं तृतीयं स्यात् चतुर्थं पञ्चमाह्वयम् ।। ३६ ।।

एकतालं पञ्चमं स्यात् तालानां पञ्चकं स्मृतम्।
आद्यं तु सप्तमात्रं स्यात् द्वितीयं पञ्चमात्रकम् ।। ३७ ।।

षण्मात्रकं तृतीयं स्यात् चतुर्थं नवमात्रकम्।
पञ्चमं त्वेकमात्रं स्यादेषाम्मात्राः प्रकीर्त्तिताः ।। ३८ ।।

देवस्थानं तदित्युक्तन्त्वभित्यावृतिरुच्यते।
यत्र कुत्र गतानां तु भूतानां स्थानवर्त्तिनाम् ।। ३९ ।।

अनेनाह्वानमुद्दिष्टं बलिभाजां मनीषिभिः।
सपवित्रस्सोत्तरीयो गुरुर्मूर्त्तिपसंयुतः ।। ४० ।।

सम्प्रार्थ्य देवमायोज्य कौतुके मूर्त्तिपेन तु।
सन्धार्यामुं तत्समक्षं भूतेभ्यो बलिमाहरेत् ।। ४१ ।।

सृष्टिस्थितिविनाशानां कर्तृभूतपते हर।
त्वत्पार्षदमुख्यानां बलिदानाय शाधिमाम् ।। ४२ ।।

प्रोक्ष्याराध्य विभाव्याब्जसंस्थिता देवताः क्रमात्।
दत्वा पाद्यादिकं तत्तदणुना परिपूज्य च ।। ४३ ।।

दत्वाबलिं पार्श्वदेशे तत्तत्पारिषदामपि।
तत्तन्मन्त्रेण मूलेन प्राच्यापो बलिमुद्रया ।। ४४ ।।

एतान् प्रधिनुयादेवं बलिकर्म प्रदर्शितम्।
मुष्टिर्या सोन्नताङ्गुष्ठा बलिमुद्रा प्रकीर्त्तिता ।। ४५ ।।

अथ गर्भगृहद्वारे पूजयेद् दक्षसव्ययोः।
नन्दिनं च महाकालं दक्षिणे विघ्नशङ्करौ ।। ४६ ।।

परशुं शूलपाणिं च द्वारदक्षिणसव्ययोः।
इन्द्रादीनष्टदिक्ष्वष्टौ ब्रह्माणं शर्वसन्निधौ ।। ४७ ।।

अनन्तं निऋतौ प्रत्यक् द्वारे वरुणपूर्वकान्।
ऋषभं वाहनं श्रेष्ठं पूजयेदग्रमण्डपे ।। ४८ ।।

मातृन् दक्षिणतस्तासां प्रत्यक् शास्तारमर्चयेत्।
वायुसोमान्तराले च दुर्गास्कन्दधनाधिपान् ।। ४९ ।।

अन्तरेषां बलिं दद्यात् स्वस्वपारिषदैस्सह।
अन्तहाराद्वारपार्श्वे तीक्ष्णदंष्ट्रमृगास्यकौ ।। ५० ।।

बाह्येऽष्टदिक्षुनन्द्यादि प्रमुखेभ्यो बलिं हरेत्।
विंशद्भूतगणेभ्योऽथ द्वितीयावरणे बहिः ।। ५१ ।।

देवासुरग्रहादीनां तृतीयावरणे ददेत्।
देवादिबलिदानान्ते तत्र तत्र तदा तदा ।। ५२ ।।

गृह्णन्त्वित्यादिना यद्वा क्षिपेन्मूलेन दिग्बलिम्।
महापीठस्याष्टदिक्षु भूतिदादीन् प्रपूज्य च ।। ५३ ।।

अथ पिङ्गलमूर्धे तु हरसेनं समर्चयेत्।
उदीच्यां क्षेत्रपालस्य बलिंदत्वा समापयेत् ।। ५४ ।।

द्वितीयावरणात् पूर्वं महापीठे बलिस्तु वा।
इन्द्राग्नी च यमं तद्वन्निॠतिर्वरुणस्तथा ।। ५५ ।।

वायुरस्सोमस्तथेशान ब्रह्मानन्तादिशाधिपाः।
वीरभद्रगणेशानौ मातृणामभितः स्थितौ ।। ५६ ।।

ब्रह्माणी चैव माहेशी कौमारी वैष्णवीतथा।
वाराही च तथेन्द्राणी चामुण्डी मातरः स्मृताः ।। ५७ ।।

मातृभ्यों लोकमातृभ्यः सर्वमातृभ्य इत्यपि।
सर्वमातृगणेभ्यश्च मातृणां पुरतो हरेत् ।। ५८ ।।

नानारूपेत्यादिना च मातॄणां पृष्ठतः क्षिपेत्।
धुनि चण्डहुम्फटिति चण्डेश्वरमनुः स्मृतः ।। ५९ ।।

नन्दी चैव महाकालो भूतनाथो महीधरः।
पर्वतेशो गुहेशश्च कालपाशकपालिनौ ।। ६० ।।

भूतिदो दुर्न्निरीक्ष्यश्च भीमरूपस्सुलोचनः।
सुमुखश्च महाबाहुस्त्रिशिरास्त्रिभुजः क्रमात् ।। ६१ ।।

तारहृन्मध्यगैरेषां नामभिर्मनवः स्मृताः।
भैतिको बलिराख्यातः औत्सवस्तु निगद्यते ।। ६२ ।।

एष एव क्रमस्तत्र विशेषस्त्वभिधीयते।
नोध्रियन्तेऽत्र मनवो लिख्यन्ते लाघवाय तु ।। ६३ ।।

ओम् स्फुरस्फोटय हुं त्रयक्षस्वाहा।
ओम् नन्दिने नमः। ओम् नन्दिपार्षदेभ्यो नमः।
ओम् महाकालाय नमः। ओं महाकालपार्षदेभ्यो नमः।
नमस्ते सर्वभुतेश सर्वसम्पत्प्रदायिने
सर्वविघ्नविनाशाय विघ्नेशाय शिवात्मने
गं गणपते नमः तत्पार्षदेभ्यो नमः।
नमस्तेस्तु महायोगिन् व्याख्यामुद्रा लसत्करः
दक्षिणामूर्तिरुपायरुद्रायपरमात्मने
दं दक्षिणमूर्तये नमः तत्पार्षदेभ्यो नमः।
नमस्ते द्वारियुक्ताय परशुव्याग्रपाणये
दृष्ट्या निहतदैत्याय शङ्कराय नमो नमः।

इत्युपस्थानमन्त्रः।

ओम् परशुपाणये नमः। तत्पार्षदेभ्यो नमः।
नमस्ते द्वारियुक्ताय शूलहस्ताय धीमते
दृष्ट्या निहतदैत्याय शाङ्कराय नमोनमः।
ओम् शूलपाणये नमः। तत्पार्षदेभ्यो नमः।
दैत्यदर्पविनाशाय सहस्राक्षाय धीमते
कुलिशव्यग्रहस्ताय नमस्तेऽस्तु शतक्रतो।
इन्द्राय सुराधिपतये रुद्रपार्षदे नमः।
इन्द्रपार्षदेभ्यो नमः।

ओम् नमो भूतेभ्योऽरिष्टकृद्भ्यः सद्भ्योऽ-
सद्भ्यस्सदसद्भ्यः सर्वगणेभ्यो नमो नमः।

अथवा-

ओम् नमो भूतेभ्यो भूतकृद्भ्यस्सर्वेभ्योऽरिष्टकृद्भ्यस्स-
दसद्भ्यस्सर्वगणेभ्यो नमो नम स्वाहा ।। ६४ ।।

पुर्वस्यां दिशि शिवस्य भगवते ये गणा वज्रपाणयः
श्वेताश्वेताक्षा श्वेतलोहिताः-

दिव्यान्तरिक्षभौमाः पातालनिवासिनश्च
तेभ्यस्ताभ्यो नमो नमः स्वाहा-

ये भूताः पुरस्सदो निशिचरा रौद्रास्सन्तोऽसन्तस्स-
दसन्तो विरूपा विश्वरूपा महारूपा
घोररूपामृगास्या विहगाननाः

पृष्टिकृतोऽपुष्टिकृतः कामदाश्च बलिमिच्छन्ति।
तेषां सर्वेषां बलिं हरामि-

महद्भ्यः क्षुद्रकेभ्यः तेभ्यस्ताभ्यो नमोनमः स्वाहा।

मुखं यः सर्वदेवानां येन हव्यं च नीयते।
येन प्रवर्त्तते सर्वं नमस्तस्मै हविर्भुजे ।।

अग्नये तेजोऽधिपतये रुद्रपार्षदे नमः।
अग्निपार्षदेभ्यो नमः-
आग्नेय्यां दिशि शिवस्य भगवतो ये गणाः।
शक्ति पाणयो रक्ता रक्ताक्षा रक्तलोहिता इत्यादि।
येन संह्रियते सर्वं येन धर्मं च रक्ष्यते।
यस्माद् बिभेतिऽलोकोऽयं प्रेतनाथ नमोऽस्तुते।
ओम् यमाय प्रेताधिपतये रुद्रपार्षदे नमः।

यमपार्षदेभ्यो नमः-
ओम् नमो भूतेभ्य इत्यादि-
याम्यायां दिशि शिवस्य भगवतो ये गणा दण्डपाणयः
कृष्णाः कृष्णाक्षकाः कृष्णलोहिता इत्यादि
ये भूताः दक्षिणसदो निशाचरा इत्यादि
राक्षसा यातुधानाश्च पिशाचाश्चाश्रयन्ति यम्
तस्मै निऋतिरूपाय रक्षसां पतये नमः।
निऋतये रक्षोऽधिपतये रुद्रपार्षदे नमः

निऋतिपार्षदेभ्यो नमः-

ओम् नमो भूतेभ्य इत्यादि-
नैऋत्यां दिशि शिवस्य भगवतो ये गणाः-
खड्गपाणय श्यामाः श्यामाक्षा श्यामलोहिता इत्यादि-
येन प्रसूयते सर्वं यस्मिन् सर्वं प्रलीयते।

अमोघपाशहस्ताय तस्मैऽपां पतये नमः

अथवा-

वरुणाय जलेशाय पाशहस्ताय ते नमः
इत्युत्तरार्धे-
ओम् वरुणाय जलाधिपतये रुद्रपार्षदे नमः
वरुणपा-
ओम् नमो भूतेभ्य इत्यादि-
वारुण्यां दिशि शिवस्य भगवतो ये गणाः
पाशपाणयः शबलाश्शबलाक्षाः
शबललोहित इत्यादि-
ये भूताः पश्चिमसदो निशाचरा इत्यादि-

पूर्यन्ते च ह्रियन्ते च येन प्राणादयः क्रमात्।
भूतानां पतये नित्यं नमस्तस्मै मरुत्पते ।।
ओम् वायवे प्राणाधिपतये रुद्रपार्षदे नमः।
वायुपा-
ओम् नमो भूतेभ्य इत्यादि-
वायव्यां दिशि शिवस्य भगवतो ये गणाः अङ्गुशपाणयः

पीताः पीताक्षाः पीतलोहिता इत्यादि-

नक्षत्राणां च सर्वेषां सोमो राजा प्रकीर्त्तितः।
गदापट्टसधारी च सोमराजाय ते नमः।

अथवा

यं प्राश्यामरतां यान्ति देवा यज्ञशरीरिणः
सोमाय गदिने तस्मै ज्योतिषां पतये नमः।।
ओम् सोमाय नक्षत्राधिपतये रुद्रपार्षदे नमः।

सोमपा-
ओम् नमो भूतेभ्य इत्यादि-
सौम्यायां दिशि शिवस्य भगवतो ये गणाः।
गदापाणयस्सितासिक्षा सितलोहिता - इत्यादि-
ये भूता उत्तरसदो निशाचरा इत्यादि-

यत्प्रसादाज्जगत्सर्वं धनेन परिपूर्यते।
यक्षगुह्यकनाथाय धननाथ नमोऽस्तु ते।।

कुबेराय यक्षाधिपतये रुद्रपार्षदे नमः।
कुबेराय नमः, धनदाय नमः।
कुवैरपा-

येन कालाग्निना लोको युगान्तेष्ववदह्यते।
तस्मै ते ब्रह्मणः पुत्र विरूपाक्ष नमोऽस्तु ते।।

ईशानाय विद्याधिपतये रुद्रपार्षदे नमः।

ईशानपार्षदे -

ओम् नमो भूतेभ्य इत्यादि-

ऐशान्यां दिशि शिवस्य भगवतो ये गणा शूलपाणय
कपिलाः कपिलाक्षाः कपिललोहित इत्यादि-

येन सृष्ठं जगत्सर्वं सर्गादौ हरशासनात्।
पितामह नमस्तुभ्यं सर्वभूतेश पद्मज ।।

ओम् ब्रह्मणे लोकाधिपतये रुद्रपार्षदे नमः।
ब्रह्मपा-

ओम् नमो भूतेभ्य इत्यादि-
ऊर्ध्वायां दिशि शिवस्य भगवतो ये गणा पद्मपाणयः।
सूक्ष्माः सूक्ष्माक्षाः सूक्ष्मलोहिता इत्यादि-
येन भूमिः सहस्रेण फणानां चाखिला धृता।
तस्मै नागाधिपतये विष्णाश्शय्यात्मने नमः।
अनन्ताय नागाधिपतये रुद्रपार्षदे नमः।
अनन्तपा-

ओम् नमो भूतेभ्य इत्यादि-

अधस्ताद् दिशि शिवस्य भगवतो ये गणा विषपाणयः
धूम्रा धूम्राक्षा धूम्रलोहिता इत्यादि-

वाहनाय महाशम्भोः शैलार्णवघनस्वन-
ऋषभाय नमस्तेऽस्तु सर्वदुष्ट प्रशान्तये।।

ओम् ऋषभाय नमः। हरवाहनाय नमः।
महाबलाय सौरभेयाय नमः
सौरभेयाय विद्महे महाबलाय धीमहे।
तन्नो वृषः प्रचोदयात्।
ऋषभपार्षदेभ्यो नमः।
वीरभद्र नमस्तेऽस्तु नमो विघ्नेश्वराय च।
ब्राह्म्यादिभ्यश्च मातृभ्यस्सर्वाभ्यो वै नमो नमः।
विं वीरभद्राय नमः
गं गणपतये नमः
व्योम् ब्रह्माण्यै नमः
मं माहेश्वर्यै नमः
मां कौमार्यै नमः
हेम् वैष्णव्यै नमः
हैम् वाराह्यै नमः
होम् इन्द्रण्यै नमः
हुम् चामुण्ड्यै नमः

वीरभद्राय विद्महे महाननाय धीमहे
तन्नश्शान्तः प्रचोदयात्।

एकदन्ताय विद्महे गजाननाय धीमहे
तन्नो विघ्नः प्रचोदयात्।

ब्रह्मभूतायै विद्महे कुशहस्ताय धीमहे
तन्नो ब्राह्मी प्रचोदयात्।

महेश्वरभूतायै विद्महे शूलहस्तायै धीमहे
तन्नो माहेश्वरी प्रचोदयात्।

स्कन्दभूतायै विद्महे शक्तिहस्तायै धीमहे
तन्नो कौमारी प्रचोदयात्।

विष्णुभूतायै विद्महे चक्रहस्तायै धीमहे
तन्नो वैष्णवी प्रचोदयात्
प्रजापतिभूतायै विद्महे खड्गहस्तायै धीमहे
तन्नो वाराही प्रचोदयात्
इन्द्रभूतायै विद्महे वज्रहस्तायै धीमहे
तन्नो इन्द्राणी प्रचोदयात्
रुद्रभूतायै विद्महे खड्गहस्तायै धीमहे
तन्नश्चामुण्डी प्रचोदयात्
वीरभद्रपार्षदेभ्यो नमः
गणपतिपार्षदेभ्यो नमः
ब्रह्माणिपार्षदेभ्यो नमः
माहेश्वरीपार्षदेभ्यो नमः
कौमरीपार्षदेभ्यो नमः
वैष्णवीपार्षदेभ्यो नमः
वाराहीपार्षदेभ्यो नमः
इन्द्राणीपार्षदेभ्यो नमः
चामुण्डीपार्षदेभ्यो नमः
मातृभ्यो नमः

लोकमातृभ्यो नमः
सर्वमातृभ्यो नमः
सर्वमातृगणेभ्यो नमः

नानाख्या मातरः प्रतिदिशं व्यवास्थिताः
दिव्यान्तरिक्ष भौमाः पातालनिवासिनश्चेहायान्तु
रुद्राज्ञयो मामनुगृह्णन्तु - प्रतिगृह्णन्तु पूजाम्
सौम्यरूपधारिण्यः ताभ्यो देवीभ्यो नमो नमः
स्वाहा-

उद्वासिन्यै नमः।
चण्डिकपालि विद्महे बहुमांसिनि धीमहि
तन्न उद्वासिनी प्रचोदयात्
उद्वासिनी पार्षदीभ्यो नमः। एवं मातृणां बलिं समापयेत्
नानारूपेति समापयेद्वा।
ओम् घ्रूं नमः पराय गोप्त्रे।
शास्त्रे नमः।
शम्बर कुमाराय नमः।
हस्त्यश्वाय नमः।
नीलय नमः।
कालाय नमः।
कपर्दिने नमः।
अग्राय नमः।
रुद्रसुताय नमः।

भूतेशाय नमः।

भूताधिपतये नमः।

भूतनाथाय नमः।

भूतनाथाय विद्महे भवपुत्राय धीमहे तन्नश्शास्ता प्रचोदयात्।

शास्तृपार्षदेभ्यो नमः।

चाम्बादीनां गणास्सर्वे कोटिकोटि गणाधिपाः।

भवन्तु सहिताः सर्वे तेभ्यस्ताभ्यो नमो नमः।

अनेन शास्तुः पश्चिमतो बलिं हरेत्।

ओम् ह्लीं दुर्गायै नमः।

दुर्गपार्षदीभ्यो नमः।

ओम् वचद्भुवे नमः।

कार्त्तिकेयाय नमः।

सनत्कुमाराय नमः।

स्कन्दाय नमः।

इन्द्राय नमः।

विशाखाय नमः।

षष्ठाय नमः।

षण्मुखाय नमः।

सनत्कुमाराय विद्महे षडाननाय धीमहे तन्नस्कन्दः प्रचोदयात्।

स्कन्दपार्षदेभ्यो नमः।

ओम् धुनिचण्ड हुंफड् स्वाहा।

चण्डाय नमः।

चण्डचण्डाय नमः।

चण्डेश्वराय नमः।

चण्डचण्डाय विद्महे चण्डेश्वराय धीमहे।

तन्नश्चण्डः प्रचोदयात्।

चण्डेश्वर पार्षदेभ्यो नमः।

एकदन्तं जलाद्यैस्तु धूपदीपसमन्वितैः।

उपहारैः समभ्यर्च्य तितिमुष्ट्या बलिं हरेत्।

ओम् तीक्ष्ण दंष्ट्राय नमः।

ओम् मृगास्याय नमः।

महापीठं समासाद्य किञ्चित् स्थित्वा तदुन्मुखः।

ये समस्तादिना सर्वानुपस्थाय बलिं हरेत्।।

ये समस्तं जगद्व्याप्य तिष्टन्ति बलिकाङ्क्षिणः।

रुद्रपार्षदास्सर्वे गृह्णन्तु बलिमुत्तमम्।।

नन्दिने नमः।

महाकालाय नमः।

भूतनाथाय नमः।

महीधराय नमः।

पर्वतेशाय नमः।

गुहेशाय नमः।

कालपाशाय नमः।

कपालिने नमः।

प्राक्स्थितेभ्यो विंशात् भूतगणेभ्यो नमः।

आग्नेय्यां स्थितेभ्यो विंशद्भूतगणेभ्यो नमः।

याम्यायां नैऋत्यां वारुण्यां वायव्यां सौम्यायां ऐशान्यां-

ऊर्ध्वायां अधस्तात् स्थितेभ्यो विंशद्भूतगणेभ्यो नमः।

एवं दत्त्वा द्विरावृत्या महापीठे बलिं हरेत्।

भूतिदाय नमः।

दुर्न्निरीक्ष्याय नमः।

भीमरूपाय नमः।

सुलोचनाय नमः।

सुमुखाय नमः।

महाबाहवे नमः।

त्रिशिरसे नमः।

त्रिभुजाय नमः।

पिङ्गलाय नमः।

हरसेनाय नमः।

ओम् महाबलाय नमः।

हरसेनाय विद्महे महाबलाय धीमहे तन्नशक्तिः

प्रचोदयात्।

हरसेनपार्षदेभ्यो नमः।

ओम् दशमूर्त्तये नमः।

दशमूर्त्तिपार्षदेभ्यस्सद्भ्योऽसद्भ्यस्सदसद्भ्यस्सर्वगणेभ्यो
नमोनम स्वाहा।

असंख्यता गणास्सर्वे कोटिकोटि गणाधिपाः
भवन्तु सहितास्सर्वे तेभ्यस्ताभ्यो नमो नमः।।

देवताभ्यः पितृभ्योऽथ भूतेभ्यस्सहजंगमैः।
एतस्थानधिवासिभ्यो प्रयच्छामि बलिं नमः।।

एभिर्मन्त्रैः बलिपीठिकायामेव बलिं हरेत्।
पुनर्ध्वजमूले आभ्यां बलिं हरेत्।।

त्रिनेत्राय च रुद्राय ध्वजाधिपतये नमः।
नन्दिने च नमस्तुभ्यं उत्सवस्य प्रसिद्धये।।

ओम् नन्दिने नमः।

ततस्तृतीयावरणे एकावृत्या बलिं हरेत्।
ये समस्तं जगद्व्याप्य तिष्टन्ति बलिकाङ्क्षिणः।।

रुद्रपार्षदास्सर्वे गृह्णन्तु बलिमुत्तमम्।
ओम् नमो भूतेभ्यो भूतकृद्भ्यस्सर्वेभ्योऽरिष्टकृद्भ्य-
स्सद्भ्योऽसद्भ्यस्सदसद्भ्यसर्वगणेभ्यो नमोनम स्वाहा।

गृह्णन्तु बलिमेतत्तु बाह्यस्था विहगाननाः।
ये क्रूरा येऽल्पसत्वाश्च भूतप्रेतनिशाचराः।।

वेतालाश्चैव मातङ्गा हीनाहीनाश्च ये गणाः
तेषां सर्वेषां बलिं हरामि।

महद्भ्य क्षुद्रेभ्यस्सर्वेभ्यो तेभ्यस्ताभ्यो नमो नम स्वाहा।।
अथ चतुर्थावरणे देवग्रहादयः पूज्याः-

देवग्रहेभ्यो नमः।
असुरग्रहेभ्यो नमः।
गन्धर्वग्रहेभ्यो नमः।
यक्षग्रहेभ्यो नमः।
पितृग्रहेभ्यो नमः।
नागग्रहेभ्यो नमः।
राक्षसग्रहेभ्यो नमः।
पिशाचग्रहेभ्यो नमः।
मूलेन दिग्बलिः।
ओम् रुद्रपार्षदेभ्यो भूतेभ्यो नमः।
अनेन पातालबलिः।
ओम् क्षां क्षेत्रपालाय नमः।
ओम् वटुकनाथाय नमः।

विश्वक्षेत्राधिपतये विश्वसिद्धिप्रदायिने।
विश्वरक्षणशीलाय क्षेत्रपालाय ते नमः ।।

एवं बलिं क्रमाद् दत्त्वा क्षेत्रपाले समाप्य च।
अन्तः प्रवेश्य देवेशं प्रासादं संप्रदक्षिणम् ।।

सम्पूज्य कौतुकस्थं तं मूलबिम्बे नियोजयेत्।
बलिकर्म समाख्यातमेवमौत्सव नामकम् ।।

मार्ज्जनालेपनाभ्यां तु बहिरन्तर्विशोधितम्।
चित्रस्तम्भवितानाद्यैः सर्वतस्समलङ्कृतम् ।।

नानाकुसुमसंबद्धदामभिश्च विलम्बितम्।
महिषाक्षागरुशीरसन्धूपामोदगर्भितम् ।।

भेरीपटहढक्काद्यैर्मद्दलोत्तालतालकैः।
काहलीमुरलीश्रृङ्गैर्मुखरीकृतदिङ्मुखम् ।।

माद्यन्मातङ्गनिवहैः करिणीभिश्च सङ्कुलम्।
छत्रव्रातैः पताकाभिश्चामरैश्च समाकुलम् ।।

दीपिकाभिर्यन्त्रदीपैर्दीपावलिभिरुज्वलम्।
परतत्वं विचिन्वद्भिर्यतिभिश्च निषेवितम्।।

विप्रैर्विविधशास्त्रार्थ पारगैरभिनन्दितम्।
नानाभरणसन्दीप्तैर्भूपालैश्च प्रगोपितम् ।।

आत्तायुधकरैर्द्दृप्तैर्भटैस्सर्वत आवृतम्।
अपदानं भगवतो गायद्भिर्वन्दिभिर्वृतम् ।।

उद्दामहेलालोलाभिर्महिलाभिर्मनोहरम्।
क्ष्वेलैरास्फोटनैर्गानैर्ज्जयशब्दैर्विजृम्भितम् ।।

बहलान्नाद्यभूयिष्ठं नृत्तानन्दितसत्सभम्।
सर्वाह्लादकरं हृद्यं सर्वदोषविमर्द्दकम् ।।

सर्वमङ्गलभूयिष्ठं सर्वदेव प्रप्तोषकम्।
एवमेव दिनेष्वेषु कुर्यादुत्सवमादरात् ।।

यात्रा पूर्वदिनेसायं क्षेत्रपालमृते बलिम्।
दत्त्वाऽथ गोपुरदारपार्श्वयोर्द्वारपालयोः ।।

निष्क्रम्य गोपुराद् बाह्ये गन्धपुष्पान्नसंयुतम्।
शिबिकायां कुञ्जरे वा देवमारोप्य यत्नतः ।।

प्रदीप शतसंयुक्त नानावाद्यैश्च सङ्कुलम्।
चतुष्पथेषु ग्रामस्य पर्यन्तेषु चतुष्वपि ।।

गोष्ठेषु चैत्यस्थानेषु तथा देवालयेष्वपि।
मन्त्राभ्यां वक्ष्यामाणाभ्यां तत्र तत्र बलिं हरेत् ।।

रुद्रपार्षदेभ्यश्च प्रमथेभ्यो नमो नमः।
मातृभ्यस्तद्गणेभ्यश्च सर्वाभ्यो वै नमो नमः ।।

ओम् नमो भूतेभ्यो इत्यादिना वा बलिं हरेत्।
कृत्वाथ मृगयां तत्र मांसभुक् भूततृप्तये ।।

राजोपचारतो यद्वा तस्मिंस्तद्धर्मसम्भवात्।
ततो देवालयं प्राप्य परिभ्रम्य प्रदक्षिणम् ।।

क्षेत्रपस्य बलिं दत्वा मूलबिम्बे नियोजयेत्।
अथ स्नात्वा समाचम्य गुरुस्सकल विग्रहः ।।

रचयेन्मण्डपे सम्यगष्टपत्राम्बजे सुधीः।
व्रीह्यादि कल्पिते पीठं पर्यङ्कं सोपधानकम् ।।

उपपीठं च तत्पार्श्व वस्त्रास्तीर्णं च विन्यसेत्।
पीठपूजाद्वयोः कृत्वा शय्यायां शक्तिमर्चयेत् ।।

न्यसेदङ्कुरपात्राणि मङ्गलान्यपि सन्तिचेत्।
अन्तः प्रवेश्य सम्पूज्य पीठमावाह्य शङ्करम् ।।

समभ्यर्च्य प्रसाद्यैनं दत्त्वाथ व्यजनादिकम्।
कृताञ्जलिः प्रार्थयताद्देवं च मनुनामुना।।

तीर्थयात्रा त्वया देव श्वः कर्त्तव्या सुरेश्वर।
अद्य प्रतिसरारम्भं त्वमनुज्ञातुमर्हसि ।।

ततः समारभेत् कर्मघृतारोपणनामकम्।
अश्वत्थपत्रद्वितये न्यस्य दूर्वात्रयं पृथक् ।।

सर्षपश्च घृतस्यस्त्वा गृहीत्वा पात्रयोर्द्वयम्।
हस्तौ व्यत्यस्य द्वि पार्श्वे समन्त्रं च रणद्वयात् ।।

आरभ्यामूलमारोप्य क्षिपेद् देवस्य पृष्ठतः।
मूलादारभ्य कण्ठान्तं तस्मादामस्तकं पुनः ।।

पत्रक्षेपानन्तरं च क्षालयेदन्तराकरम्।
यद्वा निशाचूर्णयुतं दूर्वासर्षपसंयुतम् ।।

घृताक्तवर्त्तीज्वलितान्यस्याश्वत्थदलद्वये।
घृतारोपणकर्मैतत् त्रिभिर्मन्त्रैस्समाचरेत् ।।

अंसु शोभनमित्येकं मुं सुभद्रमतः परम्।
मं सुमङ्गलमित्येवं भवत्वन्तं मनुत्रयम् ।।

कर्मार्चामभिषिच्याथ देवाग्रे विनिधाय च।
विधाय तस्य पुण्याहं मूर्त्तिपैस्सहितो गुरुः ।।

कर्मार्चायाः करे दक्षे कृत्वा कौतुकबन्धनम्।
अघोर मनुना तस्य भूतसंहारपूर्वकम् ।।

शोषदाहादिकं कृत्वा सृष्ट्वा भूतानि पूर्ववत्।
लिपि विन्यसनं कृत्वा पीठमस्मिन् प्रपूज्य च ।।

प्रकल्प्य मूर्त्तिं चिद्रूपमूलादस्मिन्नियोजयेत्।
सगन्धकुसुमाम्भोभिः पूरिते शङ्खवारिणि ।।

पद्ममात्रं पीठमिष्ट्वा कराभ्यां तत् समुद्धरन्।
तारोपचारौ मूलाणुरुद्धतत्वानि पञ्च च ।।

सार्धं ब्रह्मभिरुच्चार्य सृष्टिसंहारयोगतः।
तदीयहृदयाम्भोजादानीय महसः कणम् ।।

आयोज्याधिरोदन्ततत्सृष्ट्या तत्वानि पूर्ववत्।
उक्त्वाथावाहयाम्यन्तं मनुनार्चां तु सेचयेत् ।।

कर्मार्चा हृदयाम्भोजे योजयेत् तत्परं मुहुः।
सकलीकृत्य कर्मार्चां व्यापकाङ्गादिभिस्ततः ।।

लिपितत्वादिभिः पश्चान्मूलसंस्थं च गोपयेत्।
नीराज्योद्धृत्य शङ्खादिनिस्वनैरथ कौतुकम् ।।

निर्गत्यास्थाप्योपपीठे कवाटं बन्धयेद् दृढम्।
पुनरावाह्य हृत्पद्मात् सकलीकृत्य तं विभुम् ।।

दत्त्वोपहारान् सम्पूज्य निवेद्यैनं प्रसाद्य च।
ताम्बूलव्यजनाद्यं तु समर्प्यान्त्यार्घ्यतः पुरा ।।

शय्यायां शाययेद् देवं पञ्चतत्त्वानि सञ्जपन्।
व्याप्यैनमुत्क्रमेणाथ पञ्चतत्त्वैश्च मूलतः ॥

देवदेवं ध्रुवेणापि व्यापय्यानन्दचिन्मयीम्।
दशां प्राप्यस्वरूपानुभूतौ लीनं विभाव्य तम् ॥

आच्छाद्य वाससा रक्षामन्त्रेण परिकल्प्य च।
अनुभूयात्मनात्मानं विनिद्रस्तु निशांनयेत् ॥

उपास्य प्रथमां सन्ध्यां विशोधित कलेबरः।
कृतात्म यागो देवस्य कृत्वा पुष्पाञ्जलिं सकृत् ॥

तारमूलेषु तत्त्वैश्च व्याप्य सृष्टिक्रमात्ततः।
देवदेवममुं ध्यायेद् जागरूकं पुनस्सुधीः ॥

उत्थाप्यैनं तु धेन्वादि मङ्गलादि प्रदर्श्य च।
अवसानीयमर्घ्यं च दत्त्वा निष्कलतां नयेत् ॥

पीठं सम्पूज्योपपीठे देवमास्थाप्य तत्र च।
सकलीकृत्य मूलेन समार्प्यासनपूर्वकम् ॥

पुनराचामपर्यन्तं दन्तधावनमाचरेत्।
गण्डूषत्रितयोपेतजिह्वा निर्लेखनं तथा ॥

पुनर्द्वादशगण्डूषान् दत्त्वा पाद्यादि दापयेत्।
संस्नाप्य पाद्याचमने दत्त्वा लिङ्गैस्सुमुक्ष्य च ॥

अक्त्वा मधुघृताभ्यां तन्निशाचूर्णपुरस्सरैः।
प्रघृष्यासिच्यतोयैस्तमभिषिञ्चेत् समन्त्रकम् ॥

वस्त्राद्युपहृतीर्दत्त्वा दूर्वाणां त्रितयं ततः।
पुष्पं गन्धं रोचनायोरसौ चास्मै समर्पयेत् ।।

आदर्शं च प्रदर्श्याथ गोभ्यो यवसमर्पयेत्।
विप्रेभ्यस्तण्डुलघटं ससुवर्णं प्रदाय च ।।

इतिहासपुराणानि श्रावयेत् भारतं तथा।
अर्चयित्वा निवेद्यैनं प्रसाद्य शयनादिकम् ।।

उद्वास्यैनं गर्भधाम नयेदेनं गुरुः स्वयम्।
मूलार्चामभिषिच्येष्ट्वापीठमूर्त्तिं प्रकल्प्य च ।।

योजयेत् कौतुकगतं मूलबिम्बेऽथ पूर्ववत्।
पुनरावाह्य देवेशमर्चयेद् उपहारकैः ।।

मण्डपे स्थण्डिलं कृत्वा यात्रोहोममथाचरेत्।
स्वशाखोदितमार्गेण वह्निनिक्षेपणादिकम् ।।

कृत्वा पक्वं च वक्त्रेण हुत्वा पूजाणुभिर्घृतम्।
कनिक्रदादिना स्वस्तिसूक्तेनाथ घृतं हुनेत् ।।

चतुर्द्रव्याणि मूलेन हुत्वाष्टशतमष्ट वा।
अष्टाविशंतिसंख्यं वा पृथक् पूर्णासमन्वितम् ।।

तीर्थार्थं ब्रह्मभिर्हुत्वा ततः स्विष्ट कृदादिकम्।
कृत्वा शेषं समाप्याथ रक्षेत् संपातसर्पिषि ।।

उलूखलं च मुसलं संक्षाल्यावेष्ट्य वाससा।
गन्धादिभिरलङ्कृत्य किञ्चित् पीठं समर्च्य च ।।

धारणाभिर्विशोध्यैतत् प्रणवावयवैरथ।
मूलमध्योर्ध्वभागेषु मुसलं प्रणवेन च ।।

अभ्यर्च्याथ मुक्तमाषयवतण्डुलसंयुताम्।
निशां सहेमरजतताम्रामस्मिन् विनिक्षिपेत् ।।

आहृत्य मुसलेनैतत् त्रियिं प्रैवेष्टयेदथ।
पेषयेद् देवदासीभिर्यद्वा सामान्यतस्सुधीः ।।

संस्कृत्य शोषदाहैस्तदर्चयेत् प्रणवेन च।
प्रविश्यान्तः पीठमिष्ट्वा समावाह्य महेश्वरम् ।।

संस्नाप्याचमनीयान्तं समर्प्य प्रोक्षयेदथ।
पुष्याहमन्त्रैः कर्मार्चां देवं तच्चूर्णसञ्चयम् ।।

कर्मार्चां च विशोध्याग्रे स्थितां भूतलयादिना।
तस्यां पीठं समभ्यर्च्य कल्पयेन्मूर्त्तिमाणवीम् ।।

चूर्णार्धेन मूलबिम्बमुद्वर्त्याघोरमन्त्रतः।
संस्नाप्याभ्यर्चितं यद्वा तथैव स्थितमर्चयेत् ।।

कर्मार्चां तीर्थयात्रार्थं तवेयं कल्पिता विभो।
तीर्थयात्रां कुरुष्वास्यां सङ्क्रम्यानुग्रहाय नः।
इति मन्त्रः -

मूलार्चायां कौतुके च यात्रासम्पातमर्प्य च।
मूलबिम्बात् पूर्वदिशा चितिमस्यां नियोजयेत् ।।

मूलाङ्गैस्सकलीकृत्य मूलार्चां परिरक्ष्य च।

गृहीत्वा कौतुकं गच्छेत् बहिर्मङ्गल्यवादकः ।।

जगन्निर्माणसंहारस्थित्यनुग्रहहेतवः।
देवानामीश्वरा देवा मङ्गलं प्रदिशन्तु नः ।। इति ।।

ततश्शिष्येण सन्धार्य कर्मार्चां समलङ्कृताम्।
अन्तर्न्नन्दयादि चण्डान्तमेकावृत्या परीत्य च ।।

प्रागर्चितेन हविषा यथा दृष्टं बलिं हरेत्।
एवमेव क्षेत्रपान्तमेकावृत्या बहिर्हरेत् ।।

ध्वजं सम्पूज्य तत्स्थां च चितिं देवे नियोज्य च।
भावयन्तन्देवधाम क्षेत्रपालाभिरक्षितम् ।।

अन्यैर्भूतगणैस्सार्धं याया तीर्थाशयं प्रति।
गन्धपुष्पनिशाचूर्णतीर्थसम्पातसंयुतम् ।।

अन्यैश्च साधनैर्दीपैः छत्रव्रातैश्च चामरैः।
वाद्यैः नानाविधैर्वाग्योजनात्तु शनैश्शनैः ।।

बहिः सालं परीत्याथ दिङ्मन्त्रं च समुच्चरन्।
तीर्थाशयं समासाद्य समाचम्य गुरुस्ततः ।।

पीठेऽर्चिते प्रविन्यस्य देवं तत्तीर्थसम्मुखम्।
सकलीकृत्य दत्त्वास्मै द्वितीयाचमनान्तिमम् ।।

विशोध्य तोयं शोषाद्यैः पीठमस्मिन् प्रपूज्य च।
आवाह्य वरुणं तत्र सम्पूज्यादित्यमण्डलात्।।

आवाह्य तीर्थमिष्ट्वाथ सम्पातस्पृक् प्रगोपयेत्।

देवबिम्बं समुद्धृत्य पञ्च ब्रह्म मनुं जपन् ।।

प्रमज्य तीर्थतोये त्रिः पीठे विन्यस्य पूर्ववत्।
पुण्याहचोदितैर्मन्त्रैः समभ्युक्ष्य समूर्त्तिपः ।।

चूर्णैरामृज्य तद्बिम्बमृतमित्यादि मन्त्रकैः।
कृत्वाघमर्षणविधिः तीर्थे संस्नापयेत् त्रिशः ।।

पीठे विन्यस्य वस्त्राद्यमुपहृत्य समर्च्य च।
निवेद्य हुत्वा दत्वा च बलिं पूजां समापयेत् ।।

यद्वा तीर्थार्चनां कृत्वा तत एवं समाचरेत्।
देवस्य पीठमाराध्य कौतुके तत्व संहृति ।।

शोषाद्यं तत्व सृष्टिं च कृत्वावाह्य हृदम्बुजात्।
लिपितत्व मनुन्यासैस्सकलीकृत्य साङ्गकैः ।।

दद्याद् पाद्यादिकं तस्मै पुनराचमनान्तिमं।
आदाय कौतुकं तीर्थं त्रिर्मज्जेदोमितिब्रुवन् ।।

निवेश्य कौतुकं पीठे निशाचूर्णं च सन्निधौ।
मूर्त्तिप्रैस्सह पुण्याहं कृत्वा कौतुकपूर्णयोः ।।

अवगाह्याथ भूयोऽपि मज्जयेत् कौतुकं त्रिशः।
सम्पातांशं द्वयोःस्पृष्ट्वा पिष्टचूर्णैरथाञ्जलिम् ।।

पूरयित्वा ब्रह्ममनुमुच्चरन्नभिषेचयेत्।
अङ्गानि न्यस्य किञ्चित् तं समर्च्योन्मृज्य चूर्णकैः ।।

भूयोऽवगाह्य तीर्थेऽस्मिन्नघमर्षण संयुतम्।

संस्नापयेद् देवबिम्बं गुरुर्भक्तजनैस्सह ॥

स्नान्ति ये या नरानार्यस्तीर्थेऽस्मिन् सर्वमङ्गले।
तिर्यञ्चो वापि ते सर्वे मुच्यन्ते सर्वकिल्बिषात् ॥

पीठे निवेश्य देवेशं सम्भूष्य वसनादिभिः।
गन्धाद्यैस्तु विवेद्यान्तैरिष्ट्वा हुत्वा च पावके ॥

बलिं दत्त्वा च तीर्थो दे पूजाशेषं समापयेत्।
संप्रार्थयेद् देवदेवममुना मनुना ततः ॥

तीर्थेऽस्मिन् पावने पुण्ये स्नातोऽसि परमेश्वर।
अतस्त्वमनुगृह्णीष्व स्वस्थानोपाश्रयेण नः ॥ इति ॥

देवे तीर्थं समुद्वास्य समारोप्याथ वाहनम्।
द्रुतं देवालयं गत्वा वाहनादवतार्य च ॥

प्रदक्षिणं परीत्यान्तः देवदेवं प्रवेश्य च।
अभिषिच्याथ मूलार्चां पूर्वोक्तेनैव वर्त्मना ॥

यात्रादिवस एवैनं मूलबिम्बे नियोजयेत्।
अभिषिच्याथ मूलार्चां समभ्यर्च्य यथाविधि ॥

परेऽहन्यथवा तस्मिन् कलशैर्द्रव्यपूरितैः।
अभिषिच्यार्चयित्वैनं प्रीणयित्वाम्बिकापतिम् ॥

रात्रौ भूतबलिं दत्त्वा देवदेवं क्षमापयेत्।
क्षेत्रग्रामाभिधेनैवं बालानां हितमिच्छता ॥



वीक्ष्यागमान्निबद्धोऽयं नाम्ना कलशचन्द्रिका।

सन्तस्संशोध्यैनां सङ्गृह्णीयुर्न्निरन्तराभ्युधियः ।।

परमशिवः परशक्त्या परमस्यैः सन्तनोतु जयलक्ष्मीम् ।।

।। इति कलशचन्द्रिकायां शिवभागे अष्टमपटलः समाप्तः।।

।। शिवभागः समाप्तः ।।

# ।। कलशचन्द्रिकायां विष्णुभागः ।।

## ।। प्रथमः पटलः ।।

हरिः श्री गणपतये नमः। अविघ्नमस्तु ।।

आनन्दैकस्वरूपाय परस्मै ज्योतिषे नमः।
अशेषजगतां हेतुहेतवे शेषशायिने ।। १ ।।

यत्कर्म शैवभागेऽत्र सामान्येनसमीरितः।
समाकृष्य तदन्येषु विशेषं प्रवदाम्यहम् ।। २ ।।

स्नपनात् प्रागष्टमेऽह्नि कुर्याद्बीजार्पणक्रियाम्।
यामे गते निशीथिन्यां बृंहणे शीतरोचिषः ।। ३ ।।

प्रासादोत्तरतो गुप्तमङ्कुरार्पणमन्दिरम्।
प्रत्यङ्मुखं कारयित्वा कृत्वात्र स्थलशोधनम् ।। ४ ।।

प्रागग्राण्युत्तराग्राणि सूत्राण्यास्फाल्य पञ्च च।
पदषोडशकं कृत्वा यथाशोभं प्रपूर्य च ।। ५ ।।

शालीन्निक्षिप्य तारेण दर्भकूर्चानि विन्यसेत्।
अस्त्रेण क्षालिता वर्ममनुना सूत्रवेष्टिताः ।। ६ ।।

दर्भदूर्वाङ्कुराश्वत्थ चूतपल्लवमण्डिताः।
मृद्वालुकाकरीषैस्तु पूर्णा षोडशपालिकाः ।। ७ ।।

ऊत्कूर्चसंयुता मध्ये न्यसेत् पीठेषु तारतः।
अग्न्यादीशावसानस्तु पालिका स्थापने क्रमः ।। ८ ।।

जलैरस्त्रेण संक्षाल्य पयसा द्विषडर्णतः।
बीजजातं निधायाग्रे गणेशार्चां विधाय च ।। ९ ।।

नान्दीमुखं च पुण्याहं कृत्वा तच्छिष्टपाथसा।
क्षालयित्वाथ बीजानि संस्कुर्यात् शोषणादिभिः ।। १० ।।

यवमुद्गतिलव्रीहिमाषशिम्बकुलस्थकाः।
प्रियङ्गुसर्षपश्यामराजमाषाढकीयुताः ।। ११ ।।

पीठपूजां ततः कृत्वा धारणाभिश्च पालिकाः।
संस्कृत्य ङे नमोन्तेन स्वधाम्ना प्रणवादिना ।। १२ ।।

आवाह्य विष्णुं प्रयजेत् साङ्गीकृत्य जलादिभिः।
अभ्यर्चयेच्च बीजेषु सोमं वा स्वस्वदेवताः ।। १३ ।।

ब्रह्माहरिर्यमार्केन्द्र वाय्वग्निस्कन्दरुद्रकाः।
शशी च वरुणो लक्ष्मीर्यवादि द्रव्यदेवताः ।। १४ ।।

दानं मौहुर्त्तिकं कृत्वा शङ्खवाद्यादिनिस्वनैः।
बीजान्यञ्जलिनादाय मूलमन्त्रं समुच्चरन् ।। १५ ।।

पात्रेषु निवपेदग्न्यादीशान्तन्यसन क्रमात्।
सिञ्चेज्जितन्तामनुना प्रणवत्रितयादिना ।। १६ ।।

अन्ते सनमसा गन्धयामिनीमिलिताम्भसा।
वापक्रमात् कूर्चपाणिः सिक्त्वैवमथ देशिकः ।। १७ ।।

मूलेन देवमावाह्य सकली करणे कृते।
उपहारविधौ शङ्खसलिलैः स्नानकर्मणि ।। १८ ।।

आपोहिष्टादिभिः प्रोक्ष्य पूर्ववच्च समुक्षतु।
समर्प्य भूयो वस्त्राद्यं समर्च्य च विधानतः ।। १९ ।।

निवेद्य च प्रसन्नार्चां कृत्वा रक्षां समाचरेत्।
मण्डलेषु सदर्भेषु परितोऽष्टासु दिक्ष्वपि ।। २० ।।

भूतग्रहेभ्यो दत्त्वाथ भूतकूरान्धसा बलिम्।
पललं रजनीचूर्णं सलाजं दधि सत्तुकम् ।। २१ ।।

हविषा संयुतं त्वेतत् भूतकूरं विदुर्बुधाः।
भूतपितृयक्षनागब्रह्मशिवा देवताश्च विष्ण्वन्ताः ।। २२ ।।

द्वितीयं पैतृकं दद्यादन्नैः सलिल तण्डूलैः।
धानोडुम्बिकलाजान्नैः यक्षाणां च तृतीयकम् ।। २३ ।।

नालिकेर पयस्सक्तुशालिपिष्टान्धसा पुनः।
चतुर्थेऽहनि नागानां ब्राह्मपद्माक्षतैर्युतम् ।। २४ ।।

चरुणापूपयुक्तेन षष्ठे शैवबलिं हरेत्।
गुलान्नेन बलिं दद्याद् सप्तमेऽहनि वैष्णवम् ।। २५ ।।

पायसेनाष्टमे दद्यात् कृसरान्नमतः परम्।
दशमैकादशान्तेषु द्रव्यं पायसमीरितम् ।। २६ ।।

अष्टमादि दिनेष्वेषु देवता विष्णुरेव तु।
पञ्चाहश्चेत् कर्मदिने प्रातर्दद्याद् बलित्रयम् ।। २७ ।।

द्रव्याणि देवतेषष्ट सप्तमाहः प्रकीर्त्तिताः।
समुक्ष्य पीठपूजान्ते दैवतं पात्रपीडयोः ।। २८ ।।

अभ्यर्च्य विष्णुमावाह्य सम्पूज्य सवनत्रये।
रात्रीशेभ्यो बलिं दद्यात् देवं नित्योक्षणे विधिः ।। २९ ।।

ततः प्रासादसंशुद्धिः परेऽहनि समाचरेत्।
आत्मानं सकलीकृत्य समभ्यर्च्य गणाधिपम् ।। ३० ।।

सूत्रादि विकिरान्तानि संस्कुर्यात् शोषणादिभिः।
सहा शलाका दर्भैस्तु मुष्टिरत्र प्रकीर्त्तिता ।। ३१ ।।

उशीरमुरलोहा सृक् पटीराम्बुजटामयैः।
हिमाम्भसाश्लक्षण पिष्टमष्टगन्धं हरेः प्रियम् ।। ३२ ।।

तारांशाः सूत्रजापे स्युः प्रणवो दर्भदामनि।
नृसिंह बीजमस्त्रं वा सिद्धार्थेऽणु जपेत् स्मृतम् ।। ३३ ।।

वायुवारुणबीजे तु मुष्टिगोमयपाथसोः।
परमेष्ट्यादयः पञ्च मनवः पञ्चगव्यके ।। ३४ ।।

आपः पुनन्तु पृथिवीमित्यादिर्गन्धवारिणि।
इषेत्वेति च मूलं वा प्रसूनाक्षतसञ्चये ।। ३५ ।।

स्वस्वैर्जपाणुभिः कृत्वा मुष्ट्याद्यैमार्जनादिकम्।
मूलेनान्तर्बहिर्गेहमथ गन्धादिभियजेत् ।। ३६ ।।

पूजयेच्चक्रमन्त्रेण कलशं गर्भमन्दिरे।
वर्मास्त्रान्तं सहस्रारपदं ब्रूयान्मनुः स्मृतः ।। ३७ ।।

अहिर्बुध्निऋषिः प्रोक्तं छन्दोऽनुष्टुप् च कीर्तितः।
सुदर्शनमहाविष्णुर्देवता च समीरिता ॥ ३८ ॥

ङेन्तैराविसुधीसंज्वालाद्यैः स्वाहासमन्वितैः।
क्रमाच्चक्रपदैः षड्भिः षडङ्गानि समाचरेत् ॥ ३९ ॥

अव्याद् भास्कर सप्रभाभिरखिलाभिर्दिशो भासयन्।
भीमाक्षः क्षरदट्टहासविकसद्दंष्ट्राप्रदीप्ताननः ॥ ४० ॥

दोर्भिश्चक्रदरौ गदाब्जमुसलेष्वासांश्च पाशाङ्कुशौ।
विभ्रत्पिङ्गशिरोरुहोऽथ भवतश्चक्राभिधानो हरिः ॥ ४१ ॥

अङ्गयुधैः शक्तिभिश्च लोकपालैस्तदस्त्रकैः।
पूजयेद् वैष्णवीपीठे विष्वक्सेन समन्वितम् ॥ ४२ ॥

चक्रशङ्खगदापद्ममुसला धनुरेव च।
पाशाङ्कुशौ च सम्प्रोक्तमायुधानामथाष्टकम्।
लक्ष्मी सरस्वती चैव रतिप्रीति समाह्वये ॥ ४३ ॥

कीर्तिः कान्तिस्तुष्टिपुष्टीशक्तयोऽष्टसमीरिताः।
कृणुष्व पाजाप्रमुखं सूक्तं रक्षोहणाद्यपि ॥ ४४ ॥

त्रिवारमस्त्रमन्त्रं च शतमष्टोत्तरं जपेत्।
संरक्ष्यगेहमाग्न्येय्यां राक्षोघ्नं होममाचरेत् ॥ ४५ ॥

उपलिप्याग्निमाधाय कृत्वा चाग्निमुखान्वितम्।
रक्षोहणादिमन्त्राभ्यां पक्वं हुत्वा घृतं पुनः ॥ ४६ ॥

कृणुष्वेत्यादिभिर्भूयो ये देवाद्यैश्च पञ्चभिः।

दुर्गादिर्व्याहृतीभिश्च हुत्वा द्रव्याणि होमयेत् ।। ४७ ।।

अष्टोत्तरशतं मार्गसमिदाज्य हविर्घृतम्।
चक्राणुना हुनेत् पूर्णामन्तरा द्वादशार्णतः ।। ४८ ।।

तारं नमो भगवते वासुदेवश्च ङे युतः।
मन्त्रस्य द्वादशार्णोऽयं पूर्णायां वौषडन्वितः ।। ४९ ।।

होमं समाप्य प्रासादं सम्पाताद्यैः समुक्ष्य च।
विकीर्थतिलसिद्धार्थैः कुर्यात् तालत्रयादिकम् ।। ५० ।।

तामेवैशेऽग्निमाधाय परिधिस्थापनात् पुरा।
कलशौ दक्षिणेऽभ्यर्च्य शन्नोदेव्यणुना ततः ।। ५१ ।।

वास्तोष्पते प्रमित्याभ्यां पक्वे द्वाभ्यां च होमयेत्।
वास्तोष्पते ध्रुवाद्यैश्च षड्भिः जातादिपञ्चभिः ।। ५२

शन्नवर्गैर्व्याहृतीभिः ससम्पातं हुनेत् घृतम्।
शमीसमित् घृतान्नाज्यं दूर्वागव्यपरिप्लुताः ।। ५३ ।।

शन्नो देव्या तु होतव्या शतमष्टोत्तरं पृथक्।
मूलेन दूर्वा होम्या वा पूर्णा च द्वादशार्णतः ।। ५४ ।।

होमं समाप्य वह्नेऽस्तु पूर्वभागे बलिं हरेत्।
नमो रुद्रेति मन्त्रेण त्वं विप्र यजुषा पुनः ।। ५५ ।।

प्रणीताम्भोगव्यभस्म सम्पाताज्यशमीरसैः।
प्रोक्ष्यालयं घटगतैस्तण्डुलैश्च जलैरपि ।। ५६ ।।

विकीर्याभ्युक्ष्य तच्छेषं गर्भगेह समर्पयेत्।

ध्यात्वा दर्भचये मूर्त्तिं प्रासादपुरुषस्य तु ।। ५७ ।।

अथ वास्तुबलिं कुर्यादैशान्यां जातवेदसः।
एकाशीति पदं कृत्वा सूत्रैः प्रागुदग्रगैः ।। ५८ ।।

पदानां नवकं मध्ये दिक्षु षट्षट् पदान्यपि।
प्रतिकोणं पदद्वन्द्वद्वितयञ्चैकतां नयेत् ।। ५९ ।।

द्वात्रिंशत्पदसंयुक्तं बाह्यावरणमिष्यते।
एकैकपदसंयुक्तं दिक्ष्वष्टासु च तद्बहिः ।। ६० ।।

दर्भाक्षतानि विन्यस्य पीठं सम्पूज्यवैष्णवम्।
वास्तुमावाह्य सम्पूज्य तस्मिन्नावाह्य वेधसम् ।। ६१ ।।

आर्यकाद्यैः परिवृतमुपहारैः प्रपूजयेत्।
प्रागार्यकस्तु सवितृसावित्रौ वह्निदिक्स्थितौ ।। ६२ ।।

विवस्वान् दक्षिणेत्विन्द्रजयेन्द्रौ च निशाचरे।
पश्चान्मित्रो रुद्रजयरौद्रौ वायव्यगोचरे ।। ६३ ।।

सौम्ये महीधरास्त्वापवत्सा पावीशगोचरे।
बहिरीशादि सम्पूज्या ईशानाद्याः क्रमेण च ।। ६४ ।।

ईशानश्चैव पर्जन्यो जयेन्तेन्द्रौ दिवाकरः।
सत्यो भृशान्तरिक्षौ च वह्निः पूषा च दक्षिणे ।। ६५ ।।

वितथोग्रहक्षतयमौ गन्धर्वो भृङ्गराजकः।
मृगपितृदौवारिकाः सुग्रीवः पुष्पदन्तकः ।। ६६ ।।

वरुणासुरशोषाश्च रोग वाय्वहिमुख्यकाः।

भल्लाटेन्द्वर्गलास्तद्वददितिश्चोदितिरेव च ।। ६७ ।।

शर्वस्कन्दोऽर्यमाह्वश्च जम्भकः पिलिपिञ्छकः।
दिक्षुकोणेषु चरति विदारी पूतना तथा ।। ६८ ।।

सपापराक्षसी बाह्ये पूज्या देवग्रहादयः।
वास्तुने ब्रह्मणे चैभ्यो बलिं दत्वा प्रसाद्य च ।। ६९ ।।

तद्देवता कदम्बं च तेजोरूपं विचिन्तयेत्।
कृत्वाथ वास्तुपुण्याहं रक्षेत् तद्देवमन्दिरम् ।। ७० ।।

तृतीयदिवसे प्रातः बिम्बशुद्धिं समाचरेत्।
क्षालनप्लावनस्नानमार्जनानि यथाक्रमम् ।। ७१ ।।

धारावगाहसेकाश्च सप्तैता बिम्बशुद्धयः।
आदौ कृत्वा चतुश्शुद्धिं धारां कुर्यादनन्तरम् ।। ७२ ।।

महत्पात्रे जलं हृत्वा पीठाराधनपूर्वकम्।
आवाह्य वरुणं तत्र विष्णुतीर्थसमन्वितम् ।। ७३ ।।

अभ्यर्च्य पात्रं संस्पृश्य प्रजपेद् वारुणी ऋचः।
पीठं सम्पूज्याभिवाह्य देवं साङ्गं विधाय च ।। ७४ ।।

सम्पूर्य धारापात्रं तु मूलेनाथ पुनः पुनः।
तन्मूर्ध्नि पातयेद् धारामविच्छिन्नां मनुंजपन् ।। ६५ ।।

सावित्रीं संहितां सर्वां पञ्चोपनिषदं तथा।
पावमानं विष्णुसूक्तं पौरुषं सूक्तमन्तिमम् ।। ६६ ।।



जपेयुः ब्राह्मणाः स्पृष्ट्वा धारापात्रं समाहिताः।

कृत्वैवं याममात्रं तु पात्रोद्धरणपूर्वकम् ।। ६७ ।।

पुष्पमाराध्य शिरसि दत्त्वा शेषोपहारकान्।
सम्यगभ्यर्च्य नैवेद्यं कृत्वा हुत्वा बलिं हरेत् ।। ६८ ।।

पुनराचम्य नैवेद्यं विसृज्याभ्यर्च्य तोषयेत्।
एवं दिनत्रयं धारां कृत्वाङ्कुरदिनात् पुनः ।। ६९ ।।

पञ्चमेऽह्न्यवगाहं च कुर्यात् पञ्चकसेचनम्।
गव्यजातं समायोज्य सम्पूज्यावाह्य च प्रभुम् ।। ७० ।।

वाससाच्छाद्याकलय्य पञ्जरं परिपूर्य च।
गव्यैर्धारोदितान् मन्त्रान् जप्त्वा तत्कालसम्मितम् ।। ७१ ।।

सर्वं तदवमुच्याथ गन्धाद्भिरवगाह्य च।
शोधयित्वा च तत्सर्वं पूर्ववत् पूजयेद् विभुम् ।। ७२ ।।

एकपीठस्थितान् कुम्भान् पञ्चतत्वैः प्रपूर्य च।
दध्याद्यैकैकतत्वेन विहिता वाहनार्चनान् ।। ७३ ।।

एकीकृत्य च तारेण मूलेनावाह्य पूजयेत्।
पृथक्स्थितिं भावयित्वा तत्त्वैराराध्य पूर्ववत् ।। ७४ ।।

पीठार्चनादि स्नानान्तं कृत्वा तत्त्वैर्न्निजैः क्रमात्।
मध्यादिकलशैस्सिक्त्वा देवदेवं समर्चयेत् ।। ७५ ।।

ततो देवस्य पुण्याहः कुर्यात् मूर्त्तिपसंयुतः ।।

।। इति कलशचन्द्रिकायां विष्णुभागे प्रथमपटलः समाप्तः ।।

# कलशचन्दिकायां विष्णुभागः
# द्वितीयः पटलः

ततः षष्ठदिने कुर्यात् प्रायश्चित्तं हुतात्मकम्।
देवस्य दक्षिणे भागे कर्त्तव्यं तद्विधानतः ।। १ ।।

एकं वा पञ्च वा कुर्यात् नव यद्वा त्रयोदश।
मार्कण्डेयेन तत् प्रोक्तं नव पञ्च त्रयोदश ।। २ ।।

होमात्रैकोत्र सोग्राह्यः सदाचारानु सारतः ।
अथाग्निजननं कुर्यात् मध्यकुण्डे गुरूत्तमः ।। ३ ।।

आचम्य सकलीकृत्य विष्णुसात्कृत विग्रहः ।
गुरुविघ्नार्चनं कृत्वा मुष्ट्याद्यैः परिशोध्य च ।। ४ ।।

शोषादिपञ्चकं कृत्वा शोषदाहौ विधाय च।
प्रोक्ष्यास्त्रतः समुल्लिख्य समुक्ष्य शकलं त्यजेत् ।। ५ ।।

तारेण विष्टरं न्यस्य पीठं सम्पूज्य वैष्णवम्।
लक्ष्मीमावाह्य देवं च तस्मिन्नृतुमतीं यजेत् ।। ६ ।।

प्रणवेनाग्निमादाय क्रव्यादांशं निरस्य च।
आत्मन्यारोप्याग्निचितिं शोषदाहौ विधाय च ।। ७ ।।

सम्भाव्य योगकमलं तत्रानीयाग्नि चेतनाम्।
अर्चयेत् तारगर्भस्थबीजेन च विभावसुम् ।। ८ ।।

उद्धृत्यकरयुग्मेन भूस्थजानुर्मरुद्यमी।
त्रिः परिभ्रामयन् कुण्डे क्षिपेत् तारेण तं वसुम् ।। ९ ।।

प्रज्वाल्य वह्निं तारेण स्वगृह्योक्त प्रकारतः।
कृत्वा परिसमूहादि वह्न्याराधन पश्चिमम् ।। १० ।।

समर्च्य प्रणवेनाग्निं गर्भाधानं धिया स्मरन्।
हुत्वैकां समिधं भूयो घृतं हुत्वाष्टसंख्यया ।। ११ ।।

आदिवर्णेन मूलस्य पूर्णां च द्वादशार्णतः।
हुत्वा समर्च्य तारेण गर्भाधानं कृतं वदेत् ।। १२ ।।

एवं पुंसवसीमन्तजातनामाशनक्रियाः।
चुडाकर्मोपनीत्यन्ता मन्त्रार्णैरितरैश्चरेत् ।। १३ ।।

पीठमाराध्य मूलेन देवमावाह्य विन्यसेत्।
लिपितत्त्वमनूनर्घ्याद्युपहारान् प्रदाय च ।। १४ ।।

साङ्गावरणमभ्यर्च्य तारव्याहृति पूर्वकैः।
पीठमन्त्रैश्च मूलेन परिवारैस्सकृत् सकृत् ।। १५ ।।

हुत्वाज्यमथ मूलेन जुहोत्वष्टशतं घृतम्।
ब्रह्मार्पणेनैकवारं व्याहृति प्रणवैरपि ।। १६ ।।

आज्यशेषं समर्प्याथ देवमिष्ट्वा प्रसाद्य च।
निष्कलीकृत्य हव्याशमाराध्यास्त्रेण गोपयेत् ।। १७ ।।

उपलिप्याथ तत्कुण्डं विहृत्याग्निं यथाक्रमम्।
स्वशाखोदितमार्गेण समारभ्य हुतक्रियाम् ।। १८ ।।

दक्षिणेऽभ्यर्च्य कलशं परिधिन्यसनात् पुरा।
अग्न्यलङ्करणादूर्ध्वं पीठपूजापुरस्सरम् ।। १९ ।।

देवमावाह्य सम्पूज्य विधायेध्महुतादिकम्।
पीठाणुभिर्घृतं पक्वं गायत्र्या जुहुयादथ ।। २० ।।

पूजाणुभिर्घृतं हुत्वा पूर्णां द्वादश वर्णतः।
वासुदेवाय सम्प्रोक्त्वा विद्महे च पदं वदेत् ।। २१ ।।

नारायणाय धीमहे तन्नो विष्णुः प्रचोदयात्।
एवं समुद्धरेदेषा गायत्री समुदीरिता ।। २२ ।।

ततस्सर्वेपि जुहुयुः परमेष्ट्यादिभिः क्रमात्।
पञ्चभिः त्रिसहस्राज्यं ततोऽष्टाक्षरविद्यया ।। २३ ।।

समित्सर्पिर्व्रीहितिललाजानां तु सहस्रकम्।
द्वादशोर्ध्वशतं साज्यं समिधश्च पलाशजाः ।। २४ ।।

व्याहृतीभिश्चतुर्भिस्तु सावित्र्याष्टोत्तरं शतम्।
क्षीरं दधिक्षौद्रघृते पूर्णां द्रव्यान्तरे हुनेत् ।। २५ ।।

हुत्वा स्विष्टकृदादीनि होमशेषं समाप्य च।
प्रसन्नार्चां विधायाथ समुद्वास्याग्निचेतनाम् ।। २६ ।।

सम्पातं कलशे सिक्त्वा पावकं च विसर्जयेत्।
अन्तः प्रविश्य पीठार्चां विधायावाह्य च प्रभुम् ।। २७ ।।

सकलीकृत्य नीराज्य कलशैरभिषिच्य च।
शेषोपहारैरभ्यर्च्य भगवन्तं क्षमापयेत् ।। २८ ।।

तुर्यश्रकुण्डे त्वैशान्यां जनयित्वा हुताशनम्।
होमकर्म समारभ्य कलशार्चन संयुतम् ।। २९

पूजामन्त्राज्यहोमान्ते कृत्वा पूर्णाहुतिं ततः।
पञ्चतत्त्वैर्द्वादशाष्टजिनार्णैश्च जितादिना ।। ३० ।।

षोडशद्भिः पौरुषीभिश्चतुर्विंशति संख्यया।
पृथक् पृथक् घृतं हुत्त्वा पुनर्द्रव्याणि होमयेत् ।। ३१ ।।

अपामार्गसमिच्छिन्ना सहैन्द्री भद्रिकाञ्जलिः।
दूर्वासिद्धार्थक ब्रीहियवांस्तिल हविर्घृतम् ।। ३२ ।।

हुत्वाज्यान्तरितैरेभिश्चतुर्विंशति संख्यया।
पूर्णां द्रव्यान्तरे हुत्त्वा होमशेषं समाप्य च ।। ३३ ।।

संस्नाप्य देवं कलशेनाभ्यर्च्याथ प्रसादयेत्।
गुरुलाघवमुद्वीक्ष्य शतशो वा सहस्रशः ।। ३४ ।।

आज्यं द्रव्याणि च हुनेत् निमित्तेषु गुरूत्तमः।
श्वस्पर्शनादौ विहितामथ शान्तिं वदाम्यहम् ।। ३५ ।।

वह्निं पूर्ववदुत्पाद्य दिश्यैशान्यां यथाविधि।
पूजामन्त्राज्यहोमान्तं कृत्वा कर्माथ पूर्ववत् ।। ३६ ।।

मन्त्रैरमीभिरेकैकवारं सर्पिः क्रमाद्धुनेत्।
नारायणेन सूक्तेन श्रीसूक्तेन तथा पुनः ।। ३७ ।।

अतो देवेति सूक्तेन नासदंहोमुचा तथा।
संसमित् भद्रपादेन तथारायीत्यनेन च ।। ३८ ।।

गायत्र्या पञ्चतत्त्वैश्च पूर्णां च द्वादशार्णतः।
अश्वत्थखदिर प्लक्ष ब्रह्मपाटल संभवाः ।। ३९ ।।

वटजास्समिधो हुत्त्वा मूलेनाष्टोत्तरं शतम्।
पूर्णां दत्त्वा प्रतिद्रव्य होमशेषं समाप्य च ।। ४० ।।

हुतमन्त्रान् जपन् देवकलशैरभिषेचयेत्।
अत्रपक्षद्वयं ग्राह्यं शाखाभेदेन सूरिभिः ।। ४१ ।।

ऋचः पुरुषसूक्तस्य षोडशैव भवन्ति च।
श्रीसूक्ते तिथि संख्याः स्युरतो देवादिके च षट् ।। ४२ ।।

नासदादौ सप्त चाष्टावपनश्शोशुचन्मुखे।
संवादसूक्ते चत्त्वारः पादमन्त्रस्त्वतः परम् ।। ४३ ।।

अरायिकाण इत्यादौ पञ्चमन्त्राः प्रकीर्त्तिताः।
गायत्र्या पञ्चभिस्सार्धं मनवो जातिसंख्यकाः ।। ४४ ।।

यद्वा नारायणे सूक्ते मनवः स्युश्चतुर्दश।
नासदादौ षोडशस्युरग्नेर्मन्वेति पूर्वकाः ।। ४५ ।।

अंहोमुचश्चतुस्त्रिंशत् अन्यत् सर्वं तु पूर्ववत् ।
पक्षेऽस्मिन् समुदायेन मन्त्रा एकाधिकं शतम् ।। ४६ ।।

अन्यां शान्तिं च कुर्वीत दोषे जाते गरीयसि।
तत्वहोमं ततः कुर्यात् सप्तमेऽहनि देशिखः ।। ४७ ।।

प्रासादाग्रे विधायाग्निसदनं चतुरश्रकम्।
जनयित्वा विधानेन तत्र वैश्वानरं गुरुः ।। ४८ ।।

स्वशाखोदितमार्गेण समारभ्य हुतक्रियाम् ।
परिधिस्थापनात् पूर्वं तस्य दक्षिणतोऽम्बुजे ।। ४९ ।।

पीठमास्तीर्य विधिवत् पीठपूजां विधाय च।
अस्त्रेण क्षालितं वर्ममनुना सूत्रवेष्टितम् ।। ५० ।।

गन्धेन चर्चितं मूलमनुना धूपितं घटम्।
संसाद्य पीठे मूलेन न्यग्बिलं शोषणादिभिः ।। ५१ ।।

संस्कृत्याभ्यर्च्य मूलेन कृत्वा चोत्तानतामपि।
कूर्चरत्न सुवर्णानि न्यस्यापूर्य धिया घटम् ।। ५२ ।।

गालिताम्बुभिरापूर्य मूलेनावाह्य पूजिते।
लिपिपङ्कज माराध्य मूर्त्तिमावाह्य तत्र तु ।। ५३ ।।

जीवादितत्वान्येकैकमावाह्य क्षिति पश्चिमम्।
अन्ते जितन्तयुक्तेन मूलेनावाह्य तं हरिम् ।। ५४ ।।

लिपितत्त्व मनून्यस्य साङ्गावरणमर्चयेत्।
निवेद्य च प्रसन्नार्चां कृत्वा रक्षां समाचरेत् ।। ५५ ।।

परिधिन्यसनाद्यग्निसपर्यान्तं विधाय च।
पीठमाराध्यदेवेशमावाह्येष्ट्वा जलादिभिः ।। ५६ ।।

पूजामन्त्राज्यहोमान्तं कृत्वा पूजां विधाय च।
तत्त्वैः प्रतीपगैर्हुत्वा पञ्चोपनिषदैस्तथा ।। ५७ ।।

पूर्णां दत्त्वान्तरेभ्यत्य पीठमिष्ट्वाभिवाह्य च।
सकलीकृत्य सम्पातं स्नानकाले समर्प्य च ।। ५८ ।।

प्रार्थ्यसृष्टिं लब्धानुज्ञः पुष्पाञ्जलिपुरस्सरम्।
प्रासादाग्नि घटादीनामैक्यं सम्भावयत् बुधः ॥ ५९ ॥

अष्टाज्यहोमतः कृत्वा सृष्ट्यौन्मुख्यस्तु मूलतः।
जीवादितत्त्वैर्जुहुयादष्टाविंशति संख्यया ॥ ६० ॥

अष्टशो वा पृथक् पूर्णां संख्यान्ते सर्वतश्चरेत्।
अष्टोत्तरशतं यद्वा अष्टाविंशतिशोऽथवा ॥ ६१ ॥

परमेष्ट्यादिभिर्हुत्वा पृथक् पूर्णां च दापयेत्।
अथ हुत्वा चतुर्द्रव्यं होमशेषं समाप्य च ॥ ६२ ॥

उद्वास्य वह्निगं देवं सम्पातं कलशेऽर्पयेत्।
नान्दीमुखादिकं कृत्वा नीराजेन पुरस्सरम् ॥ ६३ ॥

अन्तः प्रवेश्य कलशं देवेशमभिषिच्य च।
तत्त्वैर्विन्यस्य सम्पूज्य निवेद्याभ्यर्च्य तोषयेत् ॥ ६४ ॥

अथ मण्डपसंस्कारं कुर्यात् गुरूरतन्द्रितः।
कलशस्यानरूपेण कारयित्वा च मण्डपम् ॥ ६५ ॥

वितानाद्यैरलङ्कृत्य स्तम्भात् संवेष्ट्य वाससा।
तुर्यश्रमर्धचन्द्राभं वृत्तं पद्मोपमं दिशि ॥ ६६ ॥

तुर्यश्रमेकनागे च कुण्डान्येवं प्रकल्पयेत्।
सूत्रादीन्यथ संस्कृत्य वर्मणास्त्रेण च क्रमात् ॥ ६७ ॥

सूत्रेण दाम्ना संवेष्ट्य व्यस्ताव्यस्त ध्रुवेण वा।
मृदमस्त्रेणापनीय पीठमिष्ट्वा च तोरणम् ॥ ६८ ॥

संस्कृत्य स्वस्वमन्त्रान्ते स्योनापृथिविमन्त्रतः।
गर्त्ते संस्थाप्याभिवाह्य स्वस्वमन्त्रेण पूजयेत् ।। ६९

अश्वत्थौदुम्बरवटप्लक्षा वै तोरणद्रुमाः।
सुशोभनसुभद्रौ च सुकर्मा च सुहोत्रतः ।। ७० ।।

तोरणेशा ध्वजास्थाप्याः कुमुदाद्यैर्दिगष्टके।
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ।। ७१ ।।

शाङ्कुकर्णस्सर्वनेत्रस्सुमुखः सुप्रतिष्ठितः ।
बलिना तोषयित्वाथ तोरणध्वजदेवताः ।। ७२ ।।

देवासुरग्रहादींश्च विशेदाचम्य मण्डपम्।
पूर्वादि द्वारपार्श्वस्थ कलशेष्वर्चयेदिमान् ।। ७३ ।।

पूर्णं च पुष्करं चैव तथैवानन्दनन्दनौ।
वीरसेनसुषेणौ च संभवप्रभवौ तथा ।। ७४ ।।

पद्मरागं प्रवालं च वैडूर्यं पुष्यरागकम्।
नीलं मरतकं मुक्तां स्फटिकं च क्रमात् न्यसेत् ।। ७५ ।।

द्वारदक्षिण भागेषु कलशेषु चतुर्दिशम्।
इन्द्रं यमं च वरुणं सोमं तद्वत् क्रमात् यजेत् ।। ७६ ।।

वह्न्यादिकेषु स्तम्भेषु यजेत् वह्न्यादिकानपि।
अथ पूर्वादिशव्यान्तमुष्ट्याद्यैः परिशोध्य च ।। ७७ ।।

साग्न्यालयं वेदितलं कुसुमाक्षतपश्चिमैः।
मध्ये पीठं समभ्यर्च्य लक्ष्मीमावाह्य बीजतः ।। ७८ ।।

सकलीकृत्य सम्पूज्य स्मरेद् दिक्षु दिगीश्वरान्।
अथात्र द्वादशार्णेन विकीर्य विकिरोत्तरम् ।। ७९ ।।

विन्यस्याधारशक्त्यादीन् कुर्यात् तालत्रयादिकम्।
ऐशान्यां धान्यराशिस्थे महत्पात्रेऽम्बुपूरिते ।। ८० ।।

यजेदावाह्य वरुणं विष्णुतीर्थ समन्वितम्।
अथार्चयेत् कुम्भराजं दक्षिणे कर्करीमपि ।। ८१ ।।

पीठमभ्यर्च्य तारेण क्षालितं सूत्रवेष्टितम्।
धूपितं गन्धसंलिप्तं विन्यसेन्यग्विलं घटम् ।। ८२ ।।

संस्कृत्य शोषदाहाद्यैस्सम्प्रोक्ष्यापोहि पूर्वकैः।
गर्भन्यसनगन्धाम्भस्सेकाक्षत समर्पणम् ।। ८३ ।।

परमेष्ट्यादिभिस्त्रीभिः कृत्वा तारेण संयजेत्।
निवृत्योत्तानतां कृत्वा सर्वेणोद्धृत्य तारतः ।। ८४ ।।

संस्थाप्य कूर्चमूलेन गन्धपुष्पान्वितं न्यसेत्।
तारेणेष्ट्वाथ कुम्भस्य मूलमध्योर्ध्वभागके ।। ८५ ।।

तेजस्त्रयकला न्यस्त्वा कलास्ताः पूजयेत् क्रमात्।
आत्माष्टार्णेन विन्यस्य हेमरत्नानि पूजयेत् ।। ८६ ।।

विधाय मानसीं पूर्त्तिं मूलाहुतदराम्भसा।
प्रतिलोमलिपिं जप्त्वासम्पूर्याधाधिकं घटम् ।। ८७ ।।

लिपिपङ्कजमाराध्य मूर्त्तिमन्त्राभिपूज्य च।
कृत्वा कलावाहनं च विद्यादेहं समर्प्य च ।। ८८ ।।

आत्मविद्यापराख्यानि तत्वान्याधारमण्डलात्।
तारांशबीजयुक्तानि समावाह्याभिपूज्य च ।। ८९ ।।

मूलेनावाह्य विन्यस्य साङ्गावरणमर्चयेत्।
गालितादि्भः कर्करीं च चक्रेणापूर्य पूजयेत् ।। ९१ ।।

अथ नागपदस्थे तु कुण्डे वैश्वानरं गुरुः।
पूर्ववज्जनयित्वा च तस्य रक्षां समाचरेत् ।। ९२ ।।

परिभ्रम्याथ कुम्भेशं प्राग्वदाधारमण्डले।
तत्वत्रितयमभ्यर्च्य मूलेनावाह्य पूजयेत् ।। ९३ ।।

करकं च समापूर्य चक्रेणावाह्य पूजयेत्।
शिवायेति पदस्थाने परायेति पदं वदेत् ।। ९४ ।।

लिपिपङ्कजपूजायां विशेषोऽयं प्रदर्शितः ।।

।। इति कलशचन्द्रिकायां विष्णुभागे द्वितीयपटलः समाप्तः ।।

# कलशचन्दिकायां विष्णुभागः
# तृतीयः पटलः

अथ मूर्त्तिधरैस्सार्धं वेदिं संप्रोक्ष्य देशिकः।
कलशस्यानुरूपेण पदानि परिकल्पयेत् ।। १ ।।

पूर्वं सप्तदशद्रव्यैः स्नपने विधिरुच्यते।
शैलद्वाररुद्रविश्वसौम्योन्मित पुटेष्वथ ।। २ ।।

पदानिकल्पयेत् सप्तदशद्रव्येषु पञ्चधा।
दिक्षु त्रिकं विदिक्ष्वेकं नवान्तः पञ्चविंशतौ ।। ३ ।।

दिक्षु षट्कं चतुष्कं च कोणेषु नव मध्यतः ।
एवमेकोनपञ्चाशत् कलशे परिकल्पना।। ४ ।।

दिक्कोणान्तस्सु नवकान्येकाशीतौ प्रकल्पयेत्।
दिक्षु मध्ये च नवकं कोणे षोडशकस्तथा ।। ५ ।।

मध्येऽब्जं कल्पयेदेवं नवोत्तरशते विधिः।
कल्पयेदष्टदिक्ष्वष्टौ पदानां पञ्चविंशतिम् ।। ६ ।।

मध्यस्थ पञ्चविंशत्यां पद्ममष्टदलं लिखेत्।
पदक्ळप्तिरिति प्रोक्ता नवोत्तरशतद्वये ।। ७ ।।

घृतमुष्णोदकं रत्नं फलं लोहं च मार्ज्जनम्।
गन्धाक्षतयवोदांश्च क्रमान्मध्यादि पूरयेत् ।। ८ ।।

पाद्यार्घ्याचमगव्यानि दधि क्षीरमधूनि च।
कषायं पूरयेत् बाह्ये दिग्विदिक्क्रमतस्सुधीः ।। ९ ।।

देवता विष्णुरादित्यो ब्रह्मा च धनदस्तथा।
वसवो वा विश्वदेवाश्च गन्धर्वा निर्ऋतिस्तथा ।। १० ।।

दुर्गा च पितरो लक्ष्मीर्वाग्देवी दक्ष एव च।
शुक्रश्च सोमेन्द्रयमा द्रव्याणां परिकीर्त्तिताः ।। ११ ।।

चतुरश्चतुरावृत्या शान्तिश्रीश्च सरस्वती।
रतिश्चेति क्रमात् प्रोक्ता यद्वा तद्द्रव्यदेवताः ।। १२ ।।

तस्माद्विराडित्याद्योऽणुः तस्मादश्वा अजादिकाः।
ऋचस्सप्तक्रमात् प्रोक्ता इदं विष्णादिकं परम् ।। १३ ।।

सहस्रशीर्षेत्याद्याश्च चतुरस्तु ततः परम्।
यत्पुरुषेणेति पूर्वा ऋचश्च चतुरस्तथा ।। १४ ।।

एवं सप्तदशद्रव्यैः पूरयेत् प्रोक्तमार्गतः।
अभ्यर्च्य कलशान् सर्वान् अधिवास्य यथाविधि ।। १५ ।।

पूर्वोदिताभिः ऋग्भिश्च स्नपयेद्वक्ष्यमाणतः।
पाद्यार्घ्याचमगव्यैस्तं स्नापयित्वादितः क्रमात् ।। १६ ।।

मध्यस्थेन घृतेनाथ स्नपयेच्च यथाविधि।
दध्ना क्षीरेण पुष्पोदैः क्वाथेनोष्णांभसा ततः ।। १७ ।।

फलमार्जनाक्षतोद रत्नलोहाम्भसा तथा।
गन्धोदैर्यवतोयैश्च स्नपयेत् श्रीनिकेतनम् ।। १८ ।।

एवं सप्तदशद्रव्यैः स्नपनं समुदाहृतम्।
अथ स्नानं प्रवक्ष्यामि समासादगमोदितम् ।। १९ ।।

पञ्चविंशतिभिर्द्रव्यैः केवलैर्वर्धितैरपि।
कुर्यात् मुनिपुटे क्षेत्रे त्रिकं दिक्ष्वेकमन्यतः ।। २० ।।

मध्ये नवपदैः पद्मं केवले पञ्चविंशतौ।
यद्वानन्दपुटे मध्ये पञ्चविंशतिरम्बुजम् ।। २१ ।।

दिक्कोणेष्वन्तरालेषु पदमेकैकमर्पयेत्।
कोणे चतुष्कं नवकं मध्ये दिक्षु द्विकत्रयम् ।। २२ ।।

एकादशपुटे चैवमेकोनार्धशते विधिः।
पञ्चविंशतिभिः पद्मं मध्ये दिक्षु त्रिकत्रयम् ।। २३ ।।

कोणेषु नवकं प्रोक्तमेकाशीतौ पदार्पणम्।
मध्ये दलघटैर्युक्तं क्षेत्रेष्वेषु चतुर्ष्वपि ।। २४ ।।

क्षेत्रे मान्यपुटे मध्ये नवभिः पङ्कजं लिखेत्।
त्रिकं दिक्षु विदिक्ष्वैकं दैविकं मानुषे पुनः ।। २५ ।।

दिग्विदिक्ष्वन्तरालेषु नवकं चाष्टकं त्रिकम्।
मार्जयेत् कोणनवकेष्वन्तः कोणपदानितु ।। २६ ।।

अष्टोत्तरशतैः कुम्भैरेवं स्नपनमीरितम्।
षट्कं चतुष्कं दिक्कोणेष्वन्तस्थ नवकेऽम्बुजम् ।। २७ ।।

नवकं चाष्टकं षट्कं दिक्कोणेष्वन्तरा बहिः।
क्षेत्रे साकपुटे प्रोक्तः षट्पञ्चाशच्छते विधिः ।। २८ ।।

विंशत्सूत्रयुते क्षेत्रे नवकानि प्रकल्पयेत्।
पञ्चविंशति संख्यानि मध्यस्थ नवकेऽम्बुजम् ।। २९ ।।

एवं शतद्वये सप्तदशाढ्यं कलशं भवेत्।
एकविंशत्पुटे मध्ये पञ्चविंशद्भिरम्बुजम् ।। ३० ।।

बाह्येऽन्तः पञ्चदशकं दिक्षुकोणेषु चाष्टकम्।
पञ्चकं चान्तरालेषु कल्पयेद्विशते घटे ।। ३१ ।।

पञ्चविंशोत्तरेत्त्वेवं पदार्पणमुदीरितम्।
क्षेत्रे पात्रपुटे मध्ये नवभिः पङ्कजं लिखेत् ।। ३२ ।।

नवकं दिक्षिविदिक्ष्वन्तः कोणेषु च बहिस्तथा।
चतुर्दिक्ष्वन्तराले च कुर्यात् द्वादशकं क्रमात् ।। ३३ ।।

शतद्वये त्रिपञ्चाशदुत्तरे क्षेत्रमीरितम्।
क्षेत्रे गोत्रपुटे मध्ये पञ्चविंशद्भिरम्बुजम् ।। ३४ ।।

दशकं दिक्षुकोणेषु त्रिकमन्तर्बहिः पुनः।
कोणेषु सप्तदशकं दिक्षु पञ्चकृतिर्भवेत् ।। ३५ ।।

अन्तरा दशकं प्रोक्तं सैकमेवं शतत्रयम्।
क्षेत्रे धीरपुटे पञ्चविंशद्भिर्मध्यतोऽम्बुजम् ।। ३६ ।।

अन्तश्च सप्तदशकदिक्ष्वष्टासु प्रकल्पयेत्।
कोणे षोडशकं बाह्ये दिक्षु पञ्चकृतित्रयम् ।। ३७ ।।

कलशानां पञ्चशतं सैकमेवं समीरितम्।
क्षेत्रे धूलिपुटे वीथीसप्तसप्त पुटान्तरे ।। ३८ ।।

प्रागग्रा उत्तराग्राश्च चतस्रः कल्पयेत् पृथक्।
एवं कृते तु खण्डानि जायन्ते पञ्चविंशतिः ।। ३९ ।।

पदान्येकोनपञ्चाशत् प्रतिखण्डं भवन्ति च।
तेषां मध्ये नवपदैः पृथगम्बुजमालिखेत् ।। ४० ।।

पदानां पञ्चविंशत्यां मध्ये पङ्कजमालिखेत्।
तद्बाह्यपङ्क्तिं परितो वीथ्यां संयोजयेत् ततः ।। ४१ ।।

चतुर्विंशति पद्मानां बहिरावरणद्वये।
चत्वारिंशत् पदानि स्युः मानुषावरणे तदा ।। ४२ ।।

दिग्गतानां तु पद्मानां चतुरश्चतुरो घटान्।
संयोजयेत् दिग्दलेषु सहस्रं सैकमीरितम् ।। ४३ ।।

द्रव्यावृत्तिविधानेऽपि कथ्यते क्षेत्रकल्पना।
क्षेत्रे धूलिपुटे मध्ये कुर्यादष्टोत्तरं शतम् ।। ४४ ।।

एकोनार्धशतं बाह्ये दिक्ष्वष्टासु प्रकल्पयेत्।
पदान्यत्रतु शिष्टानि वीथ्यां संयोज्य मार्जयेत् ।। ४५ ।।

द्रव्यावर्त्तौ पञ्चशतमेवं सम्यक् प्रदर्शितम्।
क्षेत्रे गर्भपुटे मध्ये कुर्यादष्टोत्तरं शतम् ।। ४६ ।।

एकाशीत्यष्टकं कुर्याद् दिक्ष्वष्टासु ततो बहिः।
एकोनार्धशतोपेतेत्वेवं सप्तशते पदम् ।। ४७ ।।

क्षेत्रे सुम्भपुटे मध्ये दिक्षु सद्वादशं शतम्।
कोणेष्वष्टशतं कुर्यात् सहस्रकलशं स्मृतम् ।। ४८ ।।

बाह्ये कोणस्थनवकेष्वन्तः कोणगतानि च।
मार्जयेन्य पदान्येवं भवेत् सद्वादशं शतम् ।। ४९ ।।

प्रकाशिता बुधैरेवं द्रव्यावृत्तिरिति त्रिधा।
उक्तेषु कलशक्षेत्रेष्वष्टं सम्पाद्य यत्नतः ।। ५० ।।

शाल्यादिकृतपीठेषु दर्भकूर्चास्तृतेष्वथ।
अस्त्रेण क्षालितान् वर्ममनुना सूत्रवेष्टितान् ।। ५१ ।।

धूपितान् प्रणवेनापि न्यग्विलान् सादयेत् घटान्।
स्नात्वाचार्यस्समाचम्य मन्त्रसात् कृतविग्रहः ।। ५२ ।।

इष्ट्वा गुरून् गणेशं च पीठपूजापुरस्सरम्।
श्रियमावाह्य सम्पूज्य कृत्वा शोषादि पञ्चकम् ।। ५३ ।।

दर्भन्यासं सुगन्धांभ प्रोक्षणं चाक्षतार्पणम्।
परमेष्ट्यादिभिः स्त्रीभिः कृत्वा मूलेन संयजेत् ।। ५४ ।।

उत्तानीकरणोद्धारौ पीठे विन्यसनं तथा।
कुर्यान्निवृत्य सर्वेण मूलमन्त्रेण च क्रमात् ।। ५५ ।।

सम्प्रोक्ष्य तत्घटपुटे तारेणाभ्यर्च्य किञ्चन।
तद्गताब्जदले न्यस्य पूजयेत् तैजसीः कलाः ।। ५६ ।।

आवाह्यार्क्काणुना तस्मिन् कला विन्यस्य वैन्दवीः।
अर्काणुनाभिपूज्यास्मिन् कूर्चन्यस्यादिना यजेत् ।। ५७ ।।

द्रव्याण्यात्माष्टाक्षरेण विन्यस्यानेन पूजयेत्।
क्षाद्यान्तार्णैश्शिरोनिष्ठैः धिया सम्पूर्य तत्घटम् ।। ५८ ।।

दशाहृताम्भसाप्येवं मूलाहूतेन सेचयेत्।
आपूर्यार्धाधिकं तस्मिन् अभ्यर्च्य लिपिपङ्कजम् ।। ५९ ।।

मूलान्ते विष्णुमूर्त्तये नम इत्युच्चरन् मनुम्।
कृत्वा मूर्त्यावाहनां च कलावाहनमाचरेत् ।। ६० ।।

प्रणवांशकलाह्वाने समष्टिमनुषु क्रमात्।
महासदादिकौ विष्णुरुद्रौ परिगतौ स्मृतौ ।। ६१ ।।

मूलान्ते प्रवदन् विद्यादेहायेति नमोन्वितम्।
विद्यादेहं समावाह्य तेनैव व्याप्य पूजयेत् ।। ६२ ।।

ततो जीवादितत्वैश्च समावाह्य पृथक् पृथक्।
पुनर्व्यष्टिसमष्टी च समावाह्यात्र योजयेत् ।। ६३ ।।

आद्यं तत्त्वं समुच्चार्य नमसारहितं च तत्।
जीवतत्वस्य चेत्युक्त्वा प्राणापानादिकान् पुनः ।। ६४ ।।

वह्निजायान्तमुच्चार्य पुनस्तत्वमनुं वदेत्।
जीवतत्त्वस्य चेत्युक्त्वा जीवमावाहयामि च ।। ६५ ।।

इत्युक्त्वावाहयेत् तत्त्वैरन्यैरप्येवमाह्वयेत्।
इषु तत्त्वाद्यमुच्चार्य परमेष्ट्यात्मनेऽवधि ।। ६६ ।।

भूयोऽप्युक्त्वा वासुदेवपदं षष्ठ्या समुच्चरन्।
प्राणापानादिकान् वह्निजायान्तं च समुच्चरन् ।। ६७ ।।

मूर्त्तिमन्त्रं तत्त्वमनुं वासुदेवं ङसान्वितम्।
जीवमावाहयाम्यन्तं उक्त्वाथावाहयेत् सुधीः ।। ६८ ।।

प्राणप्रतिष्ठां कृत्वाथ परमेष्ट्यात्मनेऽवधि।
उक्त्वा तत्त्वं वासुदेवमात्मने नतिसंयुतम् ।। ६९ ।।

उच्चार्यव्याप्य कलशं पूजयेदमुना तथा।
एवमन्यैश्चतुर्भिश्च समुद्धार्याह्वयेत् सुधीः ।। ७० ।।

व्यष्टीरेवं समावाह्य समष्टिं च समाह्वयेत्।
पञ्चतत्त्वं समुच्चार्य परमेष्ट्यादि पश्चिमम् ।। ७१ ।।

पुनश्चोक्त्वा वासुदेव पूर्वानुक्त्वा समस्य च।
षष्ट्या प्राणादिकानुक्त्वा मूर्त्तिमन्त्रान् समस्य च ।। ७२ ।।

उक्तेषु तत्त्व नामा च वासुदेवादिकान् वदन्।
जीवमावाहयाम्यन्तं उच्चार्यावाहनं चरेत् ।। ७३ ।।

इषुतत्त्वं समुच्चार्य परमेष्ट्यादि पश्चिमम्।
समस्य वासुदेवाद्यमात्मने नति संयुतम् ।। ७४ ।।

उद्धरेद् व्यापने मन्त्रः समष्टिरिति कीर्त्तिता।
तारं हृद्भगवच्छब्दं वासुदेवं च ङेयुतम् ।। ७५ ।।

अकारपुटितं सम्यगुद्धरेन्मनु नादिमः।
वासुदेवस्सङ्कर्षणः प्रद्युम्नाश्चानुरुद्धतः ।। ७६ ।।

नारायणं च सम्प्रोक्ताः पञ्चैता मूर्त्तयः क्रमात्।
आदिस्वराभ्यां मन्त्राभ्यां तारेण पूटिताः क्रमात् ।। ७७ ।।

सर्वे तार नमोन्तास्युः मूर्त्तिमन्त्राः प्रकीर्त्तिताः।
अथावाह्य परं तेजो भावयेच्च चिदात्मकम् ।। ७८ ।।

अस्त्रेण पल्लवा न्यस्य वर्मणा वेष्ट्य वाससा।
आवाह्य तारोपचार मूलैर्न्यस्य षडध्वनः ।। ७९ ।।

न्यस्त्वाक्षराङ्गैस्सन्दर्श्य मुद्रां दत्वोपचारकान्।
तारोपचारमूलाङ्गैरायुधावरणैस्सह ।। ८० ।।

पूजयित्वा निवेद्यैनं प्रसाद्यास्त्रेण गोपयेत्।
प्रतिखण्डं पीठपूजां कृत्वा संस्कृत्य च क्रमात् ।। ८१ ।।

सम्पूज्योत्तानितेष्वेषु द्रव्यविन्यासमाचरेत्।
पूर्वादिदिशमारभ्य बहिर्दिग्विदिगन्तरा ।। ८२ ।।

दिग्विदिक्रमतोऽन्तस्तु द्रव्यकुम्भान् प्रयत्नतः।
पूरयेदुद्धरेच्चैवं तत्तत्परिघटैस्सह ।। ८३ ।।

पूरणं दिग्विदिक्स्थानं बहिर्द्वादशवर्णतः।
अन्तरालस्थितानां तु गायत्रीपूरणे मनुः ।। ८४ ।।

अन्तरष्टदिशस्थानामष्टार्णेनैव पूरणम्।
शालिपिष्टं निशाचूर्ण हेमरत्नाक्षतान्वितम् ।। ८५ ।।

मध्यस्थ ब्रह्मकलशे पूरणद्रव्यमीरितम्।
पाद्यार्घ्याचमनं गव्यं घृतं दधि पयोमधु ।। ८६ ।।

उष्णोदकं कषायं च मार्जनं च फलं यवम्।
रत्नलोहकुशाम्भांसि गन्धं पुष्पौपमानिके ।। ८७ ।।

धात्र्यक्षताम्भः केरोदमिक्षूदन्तण्डुलोदकम्।
दूर्वाश्यामाकपद्मानि विष्णुपर्णीतिपाद्यकम् ।। ८८ ।।

सिद्धार्थमक्षतं चैव कुशाग्रंतिलमेव च।
यवं गन्धं जलं पुष्पं अर्घ्यमष्टाङ्गमुच्यते ॥ ८९ ॥

जातिलवंगतक्कोलमाचामञ्चेन्दुसंयुतम्।
अश्वत्थौदुम्बरब्रह्मवटविल्वविकंकतैः ॥ ९० ॥

सशमीखदिरैः कुर्यात् त्वग्भिरेभिः कषायकम्।
सहानिशा सदा भद्रा शिरीषसूर्यवर्त्तिनी ॥ ९१ ॥

कुशाग्रमार्जनं द्रव्यं षडङ्गं समुदीरितम्।
कदलीनालिकेराम्रपनसामलकानि च ॥ ९२ ॥

डाडिमं भव्यविल्वौ च फलाष्टकमुदाहृतम्।
वज्रमौक्तिक वैडूर्यपद्मरागप्रवालकैः ॥ ९३ ॥

रत्नानां पञ्चकं प्रोक्तं लोहानां पञ्चकं पुनः।
सुवर्णं रजतन्ताम्रमायसं त्रपुकं क्रमात् ॥ ९४ ॥

सेव्यार्त्यम्बुजटाम्रायो मुरशीतैस्तु गन्धकम्।
जातिस्त्री मल्लिका कुन्द नन्दयावर्त्ताब्ज चम्पकैः ॥ ९५ ॥

यूथिकाबकुलाभ्यां च कर्त्तव्यं कुसुमोदकम्।
शङ्खारिताक्ष्र्य कूर्चैस्तु लोहजैरौपमानिकम् ॥ ९६ ॥

पितरौ श्री सरस्वत्यौ दक्षविष्णूशनेन्दवः।
इन्द्रार्कयमविश्वाख्याः कुबेरोवायुरप्यजः ॥ ९७ ॥

वसवश्चैव सावित्री गन्धर्वा वरुणस्तथा।
ताक्ष्यो भूमिश्च निऋतिः श्रीधरश्च तथा पुनः ॥ ९८ ॥

नृसिंहोऽश्वमुखश्चैव पाद्यादिद्रव्यदेवताः।
ताराद्या ङे नमोनिष्ठा मध्ये तु पुरुषः परः ।। ९९ ।।

द्रव्यपूरणमन्त्रान्ते संयोज्यैतांश्च पूरयेत्।
एवं सम्पूज्य सम्पूज्य कलशान् सकलानपि ।। १०० ।।

आधिवासनिकान् होमान् विदध्युर्गुरुमूर्त्तिपाः।
अथाग्निं समुपस्थाय प्रागग्निं दूतमित्यृचा ।। १०१ ।।

तस्मात् प्रागादिकुण्डेषु विहरेत् पावकः गुरुः।
अग्निना रयिमित्यैन्द्रे त्वमग्ने द्युभिरर्कजे ।। १०२ ।।

अग्न आयाहि वारुण्यामग्निं दूतं तथोत्तरे।
उपस्थायैभिरेवं तु स्वस्वशाखोदित क्रमात् ।। १०३ ।।

आरभ्याग्निमुखं पीठमन्त्रैराज्याहुतेः परम्।
पक्वं हुत्वार्चनामन्त्रैर्हुत्वाज्यं गुरुमूर्त्तिपाः ।। १०४ ।।

मूलेन मूर्त्तिमन्त्रैश्च द्रव्याणि जुहुयुः क्रमात्।
समिदाज्य चरूल्लाजान् सर्षपांश्च यवांस्तिलान् ।। १०५ ।।

व्रीहीन् सक्तून् चाष्टशतं संख्याष्टाविंशतिस्तु वा।
पूर्णां द्रव्यान्तरे दद्युः द्वादशाक्षर मन्त्रतः ।। १०६ ।।

होमं समाप्य सम्पात भस्मशान्त्युदकान्वितम्।
संस्पृश्य ब्रह्मकुम्भे तु द्रव्यकुम्भेष्वपि क्रमात् ।। १०७ ।।

यद्वैकमेव कुर्वीत कलशस्यानुरूपतः।
मङ्गलाङ्कुरपात्राणि मङ्गलानि च विन्यसेत् ।। १०८ ।।

शङ्खं चक्रं पताकां च श्रीवत्सं दर्पणं वृषम्।
मध्ययुग्मं च कुम्भं च मङ्गलानि प्रचक्षते ।। १०९ ।।

एकीकृत्याथ तारेण तत्त्वानां लयसज्जने।
विधाय न्यस्याध्वनश्च पीठपूजां विधाय च ।। ११० ।।

आवाह्य सकलीकृत्य सम्यागिष्ट्वा निवेद्य च।
बलिं च परितो दद्यात् मण्डपस्य बहिः क्रमात् ।। १११ ।।

आद्याश्च कर्मजाश्चैव ये भूताः प्राग्दिशि स्थिताः।
प्रसन्ना परितुष्टास्ते प्रतिगृह्णन्त्विमं बलिम् ।। ११२ ।।

प्राक्स्थाने योजयेन्मन्त्री दक्षिणादिपदं क्रमात्।
वृक्षेषु पर्वताग्रेषु ये विदिक्षु च संस्थिताः ।। ११३ ।।

भूमौ व्योम्निस्थिता ये च तेऽपि गृह्णन्त्विमं बलिम्।
विनायकाः क्षेत्रपाला ये चान्ये बलिकाङ्क्षिणः ।। ११४ ।।

प्रपूर्वाद्याः पार्षदाश्चैव तेऽपि गृह्णन्त्विमं बलिम्।
आद्येन दिक्षु मन्त्रेण द्वितीयेन विदिक्षु च ।। ११५ ।।

तृतीयेनाष्टदिक्ष्वेवं बलिं दत्त्वान्तरेत्य च।
समाप्य पूजां सम्प्रोक्ष्य घटान् सम्पातसर्पिषा ।। ११६ ।।

शुद्धेत्यादिमनुद्वन्द्वं जपन् विष्णुपदान्वितम्।
शास्त्रोदितादि मनुना प्रार्थयेच्च कृताञ्जलिः ।। ११७ ।।

संरक्ष्य कलशानन्तः गत्वा देवाग्रतस्थितः।
विज्ञापयेद् देवदेवमधिवासः कृतादिना ।। ११८ ।।

शास्त्रोदिते हरिपदमधिवासः कृतादिके।
पुरुषोत्तमेतिपदं योजयेद् देशिकोत्तमः ।। ११९ ।।

अथ मण्डपमासाद्य विनिद्रस्तु निशां नयेत्।
अथ प्रभातकृत्यान्ते विष्णुसात्कृतविग्रहः ।। १२० ।।

पीठमाराध्य देवेशमावाह्य सकलीक्रियात्।
विधाय स्नानवेलायामभिषिच्याभिपूज्य च ।। १२१ ।।

आसाद्य मण्डपं क्षेत्रबाह्ये समुपविश्य च।
कृतैकात्म्यघटानां तु तारपुष्पार्पणेन तु ।। १२२ ।।

पृथग्भावं भावयित्वा प्रतिखण्डं समर्प्य च।
तत्तत्तत्त्वात्मकान् कुम्भान् नीराज्यान्तः प्रवेश्य च ।। १२३ ।।

नीराज्य देवं संस्नाप्य निवेद्यासिच्य चान्तरा।
ब्रह्मजं ज्ञानमन्त्रेण स्नापयेदितरैः क्रमात् ।। १२४ ।।

इदं विष्ण्वादिकैर्मन्त्रैस्तत्तत्परिघटैस्सह।
इदं विष्णुर्हिरण्यवर्णात्मापोहिष्ठ प्रजापते ।। १२५ ।।

तेजोऽसि च दधिक्राविण आप्यास्व तथामधु।
अथाकृष्णेन चाश्वत्थे भद्रं कर्णेभिरेव च ।। १२६ ।।

गणानां वायवायाहि ब्रह्मजज्ञानमित्यपि।
उपत्वाग्नेति देवस्य बहिर्मन्त्राः प्रकीर्त्तिताः ।। १२७ ।।

विष्णोरराटं तत्त्वाया सुवर्णं स्योनपूर्वकम्।
शन्नोया दिव्या यासां च परो मात्रेति दैविके ।। १२८ ।।

इदं विष्ण्वादिमन्त्राणां अष्टकं त्रितये पुनः।
संयोजयेद् द्वाद्वशार्ण गायत्र्यष्टाक्षराणि च ।। १२९ ।।

दिग्विदिक्क्रमतास्सिञ्चेत् तत्तत्परिघटैस्तदा।
किञ्चिदिष्ट्वा ब्रह्मकुम्भं ध्वजतोरणवह्निगाम् ।। १३० ।।

चितिं तस्मिन् समुद्वास्य पुष्पाञ्जलिपुरस्सरम्।
साङ्गं संरक्ष्य नीराज्य कुम्भराजं च कर्करीम् ।। १३१ ।।

नान्दीमुखादिकं कृत्वा दीपनीराजनं क्रमात्।
अन्तः प्रवेश्य गालिन्या संसिक्त्वा बिम्बपीठिके ।। १३२ ।।

कुम्भेशेनाभिषिच्याथ तत्त्वत्रितयमुच्चरन्।
सकलीकृत्य नीराज्य देवं ब्रह्मघटेन तु ।। १३३ ।।

अतो देवादि सूक्तान्ते द्वादशार्णमनुं तथा।
गायत्रीमष्टवर्णं च सम्प्रोक्त्वा शितमानसः ।। १३४ ।।

गुरूक्तरीत्या संस्नाप्य कुर्यात् पुष्पाञ्जलिं ततः।
लिपितत्त्वमनुव्रात जीवपुर्यष्टकाणुभिः ।। १३५ ।।

विन्यस्तदेहमाराध्य पायसान्नं निवेद्य च।
किञ्चिदिष्ट्वा च नीराज्य रक्षामन्त्रेण कल्पयेत् ।। १३६ ।।

प्राणादिपञ्चके तद्वन्नागदीनां च पञ्चके।
द्विरावृत्त्या च बीजानि बिन्द्वन्ताः षोयरावलाः ।। १३७ ।।

बीजं नमः परायान्ते प्राणात्मा ङे नमोन्वितः।
अथ हृत्पुण्डरीकस्य दिग्दलेषु च मध्यमः ।। १३८ ।।

मूर्त्तिन्यासं प्रकुर्वीत पञ्चतत्त्वान्यपिन्यसेत्।
तारं नमो भगवते वासुदेवाय कीर्त्तयेत् ।। १३९ ।।

एवमन्ये समुद्धार्यास्तत्तन्मूर्त्त्याभिधान्विताः।
आद्येन च द्वितीयेन बिन्दुना सश्शिणादिना ।। १४० ।।

पुटीकृताः क्रमादेते नमोनिष्ठाः समीरिताः।
पञ्चतत्त्वैश्च मूर्धादि पञ्चस्थानेषु विन्यसेत् ।। १४१ ।।

पञ्चविंशति तत्त्वैश्च न्यसेत् सृष्टिस्थितिक्रमात्।
अवस्रुतेन सम्प्रोक्ष्य परिवारांस्तथेतरान् ।। १४२ ।।

सम्पूज्य विधिना देवं निवेद्य च महद्धविः।
अग्नौ हुत्वा बलिं दत्त्वा विसृज्यान्नं समर्च्य च ।। १४३ ।।

तीर्थं दत्त्वा च भक्तेभ्यस्तुत्वा नत्वा क्षमापयेत्।
अथ कृत्वादिशाहोमान् रात्रौ भूतबलिं हरेत् ।। १४४ ।।

।। इति कलशचन्द्रिकायां विष्णुभागे तृतीयपटलः समाप्तः।।

# कलशचन्दिकायां विष्णुभागः
# चतुर्थः पटलः

अभिधास्याम्यात्मशुद्धिं शङ्खपूरणमर्चनम्।
गुरून् विघ्नं च संवन्द्य चक्रेण करशोधनम् ।। १ ।।

तालत्रयं दिशाबन्धमग्निप्राकारमाचरेत्।
नाडीसंशोधनं कृत्वा जीवमायोज्य चात्मनि ।। २ ।।

पृथिव्यादीनि भूतानि संहरेत् स्वस्वकारणे।
पादाग्रनाभिहृत्कण्ठ भ्रूमध्येषु यथाक्रमम् ।। ३ ।।

पृखिव्यादीनि भूतानि कल्पयेत् स्वस्वमण्डले।
समनोबुद्ध्यहङ्कारप्रकृतीरात्मनः पदम् ।। ४ ।।

चतुरङ्गुलमूर्ध्वोर्ध्वं कल्पयेच्च ततः परम्।
पृथ्वीं संशोष्य सन्दह्य संप्लाव्य स्वस्वबीजतः ।। ५ ।।

पञ्चकृत्वः स्वसंहारमनुनासून् नियम्य च।
संहरेत् गन्धतन्मात्रे तद्गन्धं व्यापकाणुना ।। ६ ।।

व्याप्योर्ध्वं संहरेदप्सु तदादीन्यपि संहरेत्।
आपस्संशोष्य सन्दह्य रसे तं च हुताशने ।। ७ ।।

वह्निं संशोष्य तं रूपे तं वायौ संहरेत् सुधीः।
सुषिरीकृत्य तद्वायुं स्पर्शे तं च विहायसि ।। ८ ।।

अथो विहायसादींस्तु तारजापासुरोधनात्।
संशोध्य स्वस्वमनुभिः संहृत्यासुनिरोधनात् ।। ९ ।।

हृदन्तेनादिना व्याप्य संहरेदूर्ध्वमूर्ध्वतः।
विलाप्य मनसि व्योम तद्बुद्धौ तामहंकृती ।। १० ।।

तत्प्रकृत्यांतांक्रियायां ज्ञानशक्तौ नियोज्यताम्।
इच्छायां तानि योज्याथ तामात्मनि च संहरेत् ।। ११ ।।

तारेणाथ समायम्य विशुद्धं भावयेच्च तम्।
बीजं नतिं परायार्णान् भूतानामात्मने युतम् ।। १२ ।।

उद्धरेद्धुंफडन्तं तु संहृतौ मनवः स्मृताः।
बीजं नमः परायान्ते सर्वात्मा ङे नमोन्विताः ।। १३ ।।

उद्धृतौ व्यापने मन्त्रः त्वन्यानप्यवमुद्धरेत्।
पृथिव्यप्तेजांसि वायुराकाशोभूतपञ्चकम् ।। १४ ।।

सर्वो निवृत्ति विश्वौ च तथा पुं परमेष्टिनौ।
शक्तयः पञ्च बीजानि प्रतीपा षोयरावलाः ।। १५ ।।

पृखक् समस्य बीजानि भां भी भूं मन आदिषु।
व्यापने मन आदीनां नमोऽन्तः प्रणवः स्मृतः ।। १६ ।।

क्रियादि शक्तिसंहारे हुं फटन्तो ध्रुवः स्मृतः।
पृथ्यादौ स्वगुणावृत्तिः प्राणायामे प्रकीर्त्तिता ।। १७ ।।

सर्वत्र प्राणयमने संख्या स्यात् पञ्चविंशतिः।
तारेणाथ समायम्य सृष्ट्यौन्मुख्यमनुस्मरन् ।। १८ ।।

इच्छाज्ञानक्रियाशक्तीः सृष्ट्वा त्रिस्तारसंयमान्।
पञ्चतत्त्वैरथैकद्वित्रि चतुष्पञ्च संख्यया ॥ १९ ॥

प्राणायामैस्सृजेत् पञ्चवासुदेवादिकान् क्रमात्।
नारायणादपूर्वाम्भिः सृष्ट्वा तारासुरोधनात् ॥ २० ॥

लं बीजासुयमादस्मिन् अण्डोत्पत्तिमनुस्मरन्।
सुषिरीकरणं कृत्वा व्योमबीजासुरोधनात् ॥ २१ ॥

अस्मिन्नायोजयेज्जीवं पूर्वमात्मनि संहृतम्।
जीवादितत्त्वैरायम्य तत्त्वोत्पत्तिमनुस्मरन् ॥ २२ ॥

षष्ट्युत्तरैस्तु त्रिशतैः प्रणवैः प्राणसंयमात्।
जीवमब्दोषितं ध्यात्त्वा फडन्तप्रणवेन च ॥ २३ ॥

भित्त्वाण्डमसुमायम्य लिप्या तन्यासमाचरेत्।
मूलेनासुं समायम्य पीठन्यासं विधाय च ॥ २४ ॥

हृत्पद्मकर्णिकामध्ये स्मृत्त्वा मन्त्रमयं विभुम्।
उपहारान् समर्प्यास्मै यो ब्रह्मेत्यणुना पुनः ॥ २५ ॥

अर्पयित्त्वात्मनात्मानं जप्त्वाणुं प्रतिलोमतः।
तेजोमयं तं सञ्चिन्त्यपिङ्गलाद्वारमार्गतः ॥ २६ ॥

करञ्जलौ निपात्यांशं करन्यासमथाचरेत्।
करयोरुभयोस्तलपृष्ठपार्श्वेष्वनुक्रमात् ॥ २७ ॥

व्यापयेत् तारपुटितमूलेनाथ न्यसेत् पुनः।
ताराभिरुद्धमूलार्णैः तर्जन्यादि तदन्तिमम् ॥ २८ ॥

सृष्टिक्रमोऽयमन्तर्ज्जादि कनिष्ठान्तस्थितिर्भवेत्।
अष्टाङ्गैर्स्सृष्टिवन्यस्येत् ज्येष्ठाद्यं युगपत् पुनः ।। २९ ।।

पञ्चाङ्गानि च विन्यस्य मूलेन व्यापयेत्रिशः।
षडध्वनो न्यसेद्यद्वा लिपितत्त्वाक्षरान्यसेत् ।। ३० ।।

कलातत्त्वलोकवर्ण पदमन्त्राः षडध्वनः।
तारं बीजं हृत्पराय शान्त्यतीत कलात्मने ।। ३१ ।।

नादात्मने तथा वासुदेवाय नमसा वदेत्।
एवमन्ये समुद्धार्याश्शान्त्यतीता च शान्त्यपि ।। ३२ ।।

विद्या प्रतिष्ठा च तथा निवृत्तिश्चेति शक्तयः।
नादो बिन्दुर्मकाराद्या स्यादुकाराकारकौ तथा ।। ३३ ।।

वासुदेवः सङ्कर्षणः प्रद्युम्नाश्चानिरुद्धतः।
नारायणो मूर्त्तयः स्युः कलाः कास्यादिषु न्यसेत् ।। ३४ ।।

हौं ह्यौं ह्रूं ह्वीं ह्लामिति च बीजानां पञ्चकं स्मृतम्।
जीवप्राणाह्वयौ बुद्धिरहंकारो मनस्तथा ।। ३५ ।।

शब्दस्पर्शरूपरसगन्धास्तन्मात्रकाणि च।
श्रोत्र त्वक् चक्षुषी जिह्वा घ्राण ज्ञानोन्द्रियाण्यपि ।। ३६ ।।

वाक्पाणिपादवायूपस्थानि कर्मेन्द्रियाण्यपि।
आकाशवायुतेजोऽम्बु पृथिव्यो भूतपञ्चकम् ।। ३७ ।।

बीजान्येषामादिकान्तैर्वर्णै र्बिन्दुसमन्वितैः।
हृत्पुण्डरीकसूर्येन्दु वह्निमण्डल बीजकाः ।। ३८ ।।

शकारश्च हकारश्च सकारो रेफ एव च।
तारं बीजं हृत्पराय जीवात्मा ङे नमोन्वितः ।। ३९ ।।

उद्धृतन्त्वादिमंतत्वं एवमन्यानि चोद्धरेत्।
परमेष्ट्यादयः पञ्च वासुदेवादयस्तथा ।। ४० ।।

बीजानि पञ्चतत्त्वानां बिन्द्वन्ताः षोयरावलाः।
तारं बीजं हृत्पराय परमेष्ट्यात्मने तथा ।। ४१ ।।

वासुदेवाय हृदयमुद्धृतन्त्वादिमो मनुः।
एवमन्यानि तत्त्वानि योजयित्वा समुद्धरेत् ।। ४२ ।।

क्ष्रौं बीजयुक्तमुद्धार्य कोपतत्त्वं तु पूर्ववत्।
द्वाभ्यां तु व्यापकं कृत्वा हृदये त्रीणि विन्यसेत् ।। ४३ ।।

शब्दादीन् कादिषु न्यस्य श्रोत्रादि दशकं पुनः।
स्वस्वस्थानेषु विन्यस्य व्योमाद्यं कादिपञ्चके ।। ४४ ।।

हृत्पुण्डरीकादि हृदि पञ्चतत्त्वानि कादिषु।
व्यापयेत् कोपतत्त्वेन तत्त्वन्यासोऽयमीरितः ।। ४५ ।।

अतलं वितलं चैव सुतलं च महातलम्।
रसातलं नवतलं सत्यपूर्वतलं तथा ।। ४६ ।।

भू र्भुव स्वर्महोजनस्तपस्सत्यं चतुर्दश।
भुवनान्यतलादीनामकारो बीजमुच्यते ।। ४७ ।।

उकारो बिन्दुसंयुक्तो बीजं भूरादि पञ्चके।
बीजं तपसि सत्ये च मकारः परिकीर्त्तितः ।। ४८ ।।

तलादीनिस्पिजोरूर्वोर्ज्जान्वोर्ज्जंघाद्वये तथा।
न्यसेदङ्गुष्ठयोरन्यास्वङ्गुलीषु तलद्वये ।। ४९ ।।

सनाभिकुक्षिहृदयकन्धरा भ्रूयुगान्तरे।
शिरस्यपिन्यसेदूर्ध्वमूर्ध्वं भूरादिसप्तकम् ।। ५० ।।

भुवनाध्वायमुद्दिष्टो वर्णाध्वाथ निगद्यते।
मूलाभिरुद्धलिप्यर्णैः स्वस्थानेषु प्रविन्यसेत् ।। ५१ ।।

बीजं जाग्रत्पदात्मानमनिरुद्धं च ङेयुतम्।
नमोन्तमुद्धरेदेवमन्यानपि समुद्धरेत् ।। ५२ ।।

हंसस्सोऽहं शक्तितारौ बीजानि कथितानि च।
जाग्रत्स्वप्नसुषुप्ती च तुरीयं च पदान्यमी ।। ५३ ।।

अनिरुद्धश्च प्रद्युम्नस्तथा सङ्कर्षणः परम्।
वासुदेवश्च सम्प्रोक्ता मूर्त्तयस्तु पदाध्वगाः ।। ५४ ।।

पादादारभ्य कट्यन्तं तदादि हृदयावधि।
ततो गलान्तमूर्ध्वान्तमूर्ध्वोर्ध्वं व्यापयेत् क्रमात् ।। ५५ ।।

एवं पदाध्वविन्यासो मन्त्राध्वाथ प्रदर्श्यते।
ऋचः पुरुषसूक्तस्य श्रीसूक्तस्यापि विन्यसेत् ।। ५६ ।।

पाण्योरङ्घ्र्योस्तथा जान्वोः कट्योर्न्नाभौ तथा हृदि।
कण्ठदेशे तथा बाह्वोः वक्त्रे नेत्रे च मूर्धनि ।। ५७ ।।

वामपूर्व क्रमेणैव मृचः षोडश विन्यसेत्।
मूर्धाक्षिकर्ण नासामुख गलदोर्हृदयनाभिगुह्येषु ।। ५८ ।।

पायूरुजानुजङ्घाचरणेषु न्यसतु च श्रियसूक्तैः।
मूर्धेक्षणास्य हृन्नाभि गुह्य जानुपेदष्वपि ।। ५९ ।।

नत्यन्तांस्तारसंरुद्धान् मन्त्रवर्णान् न्यसेत् क्रमात्।
नाभ्यादिहृदयान्तास्तु स्थितिन्यास उदाहृतः ।। ६० ।।

पादादिशीर्षनिष्ठं तु संहारः परिकीर्त्तितः।
सृष्टिस्थिती च संहारस्तथा सृष्टिस्थितीन्यसेत् ।। ६१ ।।

मध्यमा मूर्ध्नि नयने तर्ज्जनी मध्यमे तथा।
स्वाङ्गुष्ठानामिके वक्त्रे हृदि साङ्गुष्ठतर्ज्जनी ।। ६२ ।।

ज्येष्ठा नाभौ कनिष्ठाग्रे शिवे जान्वोः कनिष्ठिका।
अखिलाङ्गुलयः पादे योज्या विन्यास कर्मणि ।। ६३ ।।

आधारहृद्वदनदोः पदमूलनाभौ कण्ठे सनाभिहृदयस्तनपार्श्वपृष्ठे।
कास्येक्षणश्रवणगन्धवहे च दोः पत् सन्ध्यङ्गुलीषु हृदि धातुषु
सानिलेषु ।। ६४ ।।

मूर्धेक्षणास्यहृदयोदरसोरुजङ्घा पादद्वयेषु लिपिशो न्यसतु क्रमेण।
गण्डांसकोरुचरणेषु रथाङ्गशङ्खश्रीमत्गदाम्बुजपदेषु
तथाष्टवर्णान् ।। ६५ ।।

पुनर्द्वादशमूर्त्तिस्तु न्यसेत् धात्रादिसंयुताम्।
द्वादशार्णार्णबीजाढ्याः सचतुर्थीनमोन्विताः ।। ६६ ।।

केशवो नारायणो माधवो गोविन्द विष्णवः।
मधुसूदनसंज्ञश्च सप्तमः स्यात् त्रिविक्रमः ।। ६७ ।।

वामनः श्रीधराह्वश्च हृषीकेशस्तथा पुनः।
पद्मनाभस्तथादामोदराह्वो मूर्त्तयः स्मृताः ।। ६८ ।।

धातार्यमाचमित्रश्च वरुणांशभगास्तथा।
इन्द्रो विवस्वान् पूषा च पर्जन्यत्वष्टृविष्णवः ।। ६९ ।।

फाले कुक्षौ हृदि गले दक्षपार्श्वांसयोर्गले।
वामे गलांसपार्श्वेषु पृष्ठे ककुदि च न्यसेत् ।। ७० ।।

मूर्ध्निचक्राणुमष्टाङ्ग पञ्चाङ्गाध्यार्दिकानपि।
भूषायुधादिमुद्राश्च स्वस्वस्थानेषु दर्शयेत् ।। ७१ ।।

पुनस्तत्प्रतिपत्यर्थं किरीटादि मनुं जपेत्।
संसक्तमणिबन्धाग्र शाखौ हस्तौ विधाय च ।। ७२ ।।

शिष्टोभयतलद्वन्द्वौ तिर्यक् संभ्रामयेत् मिथः।
परीताङ्गुल्युद्यदरसा चक्रमुद्रा प्रकीर्त्तिता ।। ७३ ।।

गृहीत्वा दक्षिणाङ्गुष्ठं वामहस्तस्य मुष्टिना।
वामाङ्गुष्ठं दक्षतर्जां कृत्वा श्लिष्टोच्छ्रिताग्रके ।। ७४ ।।

बध्नीयान्मुष्टिमन्याभिः शङ्खमुद्रेयमीरिता।
संश्लिष्टमुष्ठिहस्तौ तु कृत्वाङ्गुष्ठौ च सन्नतौ ।। ७५ ।।

संभ्राम्य दर्शयेदेनां गदा मुद्रेयमीरिता।
संसक्तमणिबन्धौ तु हस्तौ कृत्वाष्टपत्रवत् ।। ७६ ।।

कल्पिताष्टाङ्गुली ज्योष्ठाद्वय कल्पितकर्णिका।
एवं बध्वा दर्शितैषा पद्ममुद्रा प्रकीर्त्तिता ।। ७७ ।।

साध्यनारायण ऋषिच्छन्दो दैव्यादिका तथा।
गायत्री देवता तद्वत् परमात्मा प्रकीर्त्तितः ।। ७८ ।।

तारं नतिं चतुर्थ्यन्तं नारायणपदं वदेत्।
अष्टार्णोऽयं समाख्यातो मन्त्रः सर्वार्थसाधकः ।। ७९ ।।

ध्यात्वा देवं हृदम्भोजे धीयाभ्यर्च्योपहारकैः।
जप्त्वा यथाशक्ति मनुं लयाङ्गाद्यं समाचरेत् ।। ८० ।।

वामभागोपलिप्तेऽत्र मण्डले न्यस्य वर्धनीम्।
गन्धपुष्पादिकं क्षिप्त्वा जपेत् स्पृष्ट्वा इमा इति ।। ८१ ।।

अथोपलिप्य पुरतो मण्डलं गोमयाम्भसा।
गन्धपुष्पाक्षतान् तत्र निक्षिप्य प्रणवेन च ।। ८२ ।।

शङ्खं सपादमम्भोभिः क्षालयित्वास्त्रमन्त्रतः।
मण्डले न्यस्य शङ्खाघ्रिं वह्निबिम्बमनुं जपन् ।। ८३ ।।

सूर्यबिम्बाणुना शङ्खमस्मिन् विन्यस्य दर्शयेत्।
शङ्खमुद्रां हृदा तस्मिन् क्षिप्त्वा गन्धाक्षतार्त्तवम् ।। ८४ ।।

क्षाद्यक्षरैश्शिरोनिष्ठैरापूर्य सलिलैश्शुभैः।
अस्मिन् गन्धादिकं क्षिप्त्वा पादशङ्खजलेष्वथ ।। ८५ ।।

वह्निसूर्यसोमबिम्बमनुभिः पूजयेत् क्रमात्।
संबध्य ग्वालिनीमुद्रां शिखयोत्पूय तज्जलम् ।। ८६ ।।

समन्त्रंनिर्विषीकृत्य मुद्रया गरुडाख्यया।
सुरभर्मनुमुद्राभ्यां अमृतीकुरुतादथ ।। ८७ ।।

वीक्ष्य नेत्राणुनाम्भस्तद्वर्मणाच्छाद्यदोर्युजा।
बध्वादिशोऽस्त्रमन्त्रेण गङ्गे चेत्यणुना ततः ।। ८८ ।।

आदित्यमण्डलात् तीर्थमावाह्यास्मिन्नियोजयेत्।
ततः पीठं समभ्यर्च्य मन्त्री स्वहृदयाम्बुजात् ।। ८९ ।।

ज्योतिरावाह्य मूलेन साङ्गीकृत्याभिपूज्य च।
हस्ते निषिच्य किञ्चित्तत् स्थूलसूक्ष्म परात्मना ।। ९० ।।

निषिच्य शङ्खवार्येव त्रिः कृत्वः तत्प्रजप्य च।
वर्धन्यां तज्जलं किञ्चित् प्रतिषिच्यामुना त्रिशः ।। ९१ ।।

यागभूम्यादिकं प्रोक्ष्य देहपूजां समारभेत्।
एवं शङ्खं समापूर्य देहे पीठं समर्च्य च ।। ९२ ।।

त्रयाधारभाञ्जि तेजांसि परिभाव्य जलादिभिः।
तानि सम्पूज्य तारांशैरेकीकृत्य प्लुतादिना ।। ९३ ।।

आयम्य मूलेनावाह्य कृत्वाथ सकली क्रियाम्।
दत्वोपहारांस्तारोपचारमूलैस्समर्च्य च ।। ९४ ।।

मूलेन गन्धमालिप्य देहे द्वादशमूर्त्तिभिः।
स्वस्वस्थानेनुलिप्याथ पञ्चकृत्वस्स्वमूर्धनि ।। ९५ ।।

किरीटमनुना कुर्यात् कुसुमाञ्जलिमच्छधीः।
तुलसीद्वयपूर्वैस्तु चन्दनद्वयलोलितैः ।। ९६ ।।

पुष्पमाराध्य देहेऽथ धूपदीपौ समर्च्य च।
निवेद्य बुध्या दत्वार्घ्यं प्रसाद्यात्मानमर्चयेत् ।। ९७ ।।

तारं नमः किरीटादि केयूरपदमुच्चरन्।
हारभूषितशब्दान्ते शङ्खचक्रगदाक्षरान् ॥ ९८ ॥

अब्जहस्तेति सम्भाष्य पीताम्बरधरेति च।
श्रीवत्साङ्कितशब्दान्ते वदेद्वक्षस्थलेति च ॥ ९९ ॥

श्रीभूमिसहितात्मान्ते ज्योतिर्ज्योतीति कीर्त्तयेत्।
रूपायेति समाभाष्य सहस्रादित्यशब्दतः ॥ १०० ॥

तेजसे नम इत्यन्तो मन्त्रस्त्वेवं प्रकीर्त्तितः।
एवं पूर्णस्वरूपोऽसौ ततः कर्म समारभेत् ॥ १०१ ॥

॥ इति कलशचन्द्रिकायां विष्णुभागे चतुर्थपटलः समाप्तः ॥

# कलशचन्दिकायां विष्णुभागः
# पञ्चमः पटलः

अथ पूजां समासेन वक्ष्याम्यागमचोदिताम्।
पूर्ववच्छङ्खमापूर्य पुष्पमाराध्यमूलतः ॥ १ ॥

गुरुवन्दनमारभ्य कृत्वा प्राकारपश्चिमम्।
गुरून् विघ्नेश्वरं पीठस्योदग्दक्षिणयोरधः ॥ २ ॥

आधारशक्तिं प्रकृतिं कूर्मानन्तौ वसुन्धराम्।
अभ्यर्च्य मध्ये वह्न्यादिकोणगान् धर्मपूर्वकान् ॥ ३ ॥

प्रागादि दिक्षु धर्मादीन् पीठांघ्रीषामयान्यजेत्।
धर्मं ज्ञानं च वैराग्यं ऐश्वर्यं च नञन्वितान् ॥ ४ ॥

स्वाद्यक्षरैः सत्वरजस्तमस्संज्ञान् गुणात्मकान्।
गुणान् मायां च विद्यां च यजेच्छादनवाससि ॥ ५ ॥

पद्मं च सूर्यसोमाग्निबिम्बानि प्रणवांशकैः।
दलकेसरमध्येषु विष्वक् संचिन्त्य संयजेत् ॥ ६ ॥

मण्डलानामभेदेन व्यस्ततारांशसंयुतम्।
आत्मानमन्तरात्मानं परमात्मानमेव च ॥ ७ ॥

ज्ञानात्मानं यजेन्मध्ये तारं शक्तिसमन्वितम्।
नवशक्तिरथाभ्यर्च्य केसरेषु च मध्यतः ॥ ८ ॥

यजेत् समष्टिमनुना पीठार्चनमुदीरितम्।
विमलोत्कर्षिणी ज्ञानक्रियायोगेति शक्तयः ।। ९ ।।

प्रह्वी सत्या तथेशा चानुग्रहा नवमी स्मृता।
तारं नमो भगवते विष्णवे वदतः परम् ।। १० ।।

सर्वभूतात्मने वासुदेवायेति समीर्य च।
सर्वात्म संयोगयोग पद्मपीठात्मने नमः ।। ११ ।।

इत्थुच्चरेदयं पीठसमष्ट्याख्यो मनुस्मृतः।
जलगन्धप्रसूनैश्च धूपदीपसमन्वितैः ।। १२ ।।

एवमाराधितं पीठं प्रकृतित्वेन कल्पयेत्।
तत्र मन्त्रमयीं मूर्त्तिं मूलेन परिकल्प्य च ।। १३ ।।

तस्यामावाहयेद् विद्वान् वैष्णवं परमं महः।
तारत्रयं जितं ताणु त्रितारान्तेऽष्टवर्णकम् ।। १४ ।।

सम्बुद्धिरूपं भगवच्छब्दमागच्छयुग्मकम्।
ओं विष्णुमावाहयामीति मन्त्रेणा वाहनं चरेत् ।। १५ ।।

आवाहनादिका मुद्रा पञ्चभिर्मनुभिः क्रमात्।
दर्शयित्वा गन्धदिग्धकराभ्यां व्यापकं चरेत् ।। १६ ।।

लिपितत्वाक्षरन्यासैः साङ्गैर्यद्वा षडध्वभिः।
सकलीकृत्य विन्यस्तभूषायुधमनुस्मरेत् ।। १७ ।।

अर्कौकाभं किरीटान्वितमकरलसत् कुण्डलं दीप्तिराजत्।
केयूरं कौस्तुभाभाशबलरुचिरहारं स पीताम्बरं च ।। १८ ।।

नानारत्नाभरण शतयुतं श्रीधराश्लिष्टपार्श्वम्।
वन्दे दोस्सक्त चक्राम्बुरुहदरगदं विश्ववन्द्यं मुकुन्दम् ।। १९ ।।

प्रदाय विष्टरत्वेन तस्मै पीठं समर्चितम्।
स्वागतं प्रवदेदङ्घ्र्योः पुष्पमाराध्य मूलतः ।। २० ।।

अर्घ्यादि दत्वा स्नानात् प्राग्विहृत्य परिषत्गणम्।
स्नानवासोपवीतानि दत्वाङ्गेभ्यः समर्पयेत् ।। २१ ।।

स्नानवासो भूषणानि चान्येभ्यः स्नानमेव तु।
तारोपचारमूलैश्च भगवद्विग्रहे यजेत् ।। २२ ।।

त्रिपञ्चतत्तमूलार्णैर्भूषायुधलयाङ्गकैः।
अष्टाङ्गैः केसरस्थाने दिक्ष्वष्टासु क्रमात् यजेत् ।। २३ ।।

पञ्चाङ्गैर्दिक्षु वर्मान्तैर्विदिक्ष्वस्त्रं च पूजयेत्।
ग्राह्यमेकतरं पूर्वं द्विविधाङ्गपरिग्रहे ।। २४ ।।

एकाङ्गीकरणेप्येवं यथेष्टं परिगृह्यताम्।
वैनतेयं पुरः पृष्ठे दक्षिणे चक्रमुत्तरे ।। २५ ।।

गादां दक्षादिकोणेषु पाञ्चजन्यमथार्चयेत्।
पृष्ठे शाङ्र्गेषुधीपूज्ये गरुमत्सव्यदक्षयोः ।। २६ ।।

खड्गखेटौ यजेत् चक्रगदा सव्यापसव्ययोः।
श्रीपुष्टिपूजयेच्चक्रगदा दक्षिणसव्ययोः ।। २७ ।।

पुरतो वनमालां च यजेत् तद्दक्षसव्ययोः।
श्रीवत्सं कौस्तुभं पश्चात् इन्द्रवज्रादिकान्यसेत् ।। २८ ।।

विष्वक्सेनं यजेदीशे द्वितीयावरणात् बहिः।
जलाद्यैरेवमभ्यर्च्य जलं दत्वा सकृत् सकृत् ।। २९ ।।

तुलसीद्वयपूर्वैस्तु पुष्पमाराध्य पूर्ववत्।
सर्वावृती विलाप्यास्मिन् प्लुतताराऱ्त्तवार्पणात् ।। ३० ।।

अर्घ्यपाद्याचमान् दत्त्वा किञ्चिदभ्यर्च्यमूलतः।
देवस्य पुरतो भूमिं विशोध्यात्र निधाय च ।। ३१ ।।

पात्रमस्मिन्नुपस्तीर्य पायसादीनि सादयेत्।
जलैरस्त्रेण सम्प्रोक्ष्य रक्षेत् तच्चक्रमुद्रया ।। ३२ ।।

वायुजप्ताम्भसा प्रोक्ष्य सरमादक्षपाणिना।
प्रदह्य वामपाणिस्थवं बीजामृतसंप्लुतम् ।। ३३ ।।

सृष्ट्वामृतीकृतं जप्त्वा वसुसंख्यं मनुं ततः।
प्रदर्श्य सौरभीमुद्रां गन्धाद्यैः किञ्चिदर्च्य च ।। ३४ ।।

अभ्यर्थयेदाभिमुख्यं विहित प्रसवाञ्जलिः।
विसार्यतस्य वदनादर्चिर्भगवतो हरेः ।। ३५ ।।

परिषिच्याभिमृश्याथ दत्वोपस्तारणामृतम्।
प्रसूनकरयुग्मेन नैवेद्यवदनार्चिषोः ।। ३६ ।।

कृत्वा सम्बन्धमन्योन्यमर्पयेन्मनुना मुखे।
निवेदयामि भवते जुषाणेदं हविर्हरे ।। ३७ ।।

प्राणादिमुद्रामन्त्रैरप्यर्पयित्वा रसं पुनः।
ग्रासमुद्रां वामदोष्णा दर्शयन्नुत्पलाकृतिम् ।। ३८ ।।

अनेन मनुना पश्चाद् रस सर्वस्वमर्पयेत्।
तारेन्द्वमृतपिण्डं हृत्परायात्मने तथा ।। ३९ ।।

अनुरुद्धेन नैवेद्यं कल्पयामीत्यणुः स्मृतः।
अङ्गुष्ठाभ्यामनामे द्वे स्पृशेत् मुद्रापि कीर्त्तिता ।। ४० ।।

धैनुमुद्रां प्रदर्श्याथ मूलमष्टावरं जपन्।
रक्षां कृत्वा बहिर्गत्वा पूजाहोममथारभेत् ।। ४१ ।।

अग्न्यर्चनान्ते पीठेज्यापूर्वमावाह्य शार्ङ्गिणम्।
अभ्यर्च्य साङ्गावरणं तारव्याहृति पीठकैः ।। ४२ ।।

हविस्सकृत्सकृद्धुत्वा मूलेनाष्टशतं हुनेत्।
अङ्गैर्दशांशमेकैकशोऽन्यैस्तु परिवारकैः ।। ४३ ।।

तथा व्याहृतितारैश्च हुत्वा शेषं समाप्य च।
हुतशिष्टान्धसा पश्चान्मन्त्रेण बलिमाहरेत् ।। ४४ ।।

सर्वेभ्यो भूतेभ्यो विष्णुपार्षदेभ्य इतीरितः।
आद्यादि नमसायुक्तं आग्नेय्यां बलिमाहरेत् ।। ४५ ।।

प्रणम्य पादौ प्रक्षाल्य विसर्ज्यान्नं यथाविधि।
समर्प्य विष्वक्सेनाय निर्माल्यं परिशोध्य च ।। ४६ ।।

गण्डूषाद्यं प्रदत्वास्मै यष्ट्वा गन्धार्त्तवादिभिः।
किरीटमनुना तद्वत् गुरुभ्य इदमादिकैः ।। ४७ ।।

पुष्पाञ्जलिं विधायाथ कृत्वा कर्मसमर्पणम्।
यन्मयेत्यादिना पादौ स्पृशन्मूलं जपंस्ततः ।। ४८ ।।

गुह्यातिगुह्य मनुना कृत्वा जपसमर्पणम्।
ब्रह्मार्पणं ततः कुर्यादितः पूर्वादिमन्त्रतः ।। ४९ ।।

मां मदीयादिना तद्वदों तत्सन्मनुना तथा।
वेदमन्त्रैस्तुतिं कृत्वा प्रसन्नार्घ्यं विधाय च।
तीर्थाद्भिरुक्ष्य गुर्वादीन् मान इत्यादि मन्त्रतः ।। ५० ।।

नमस्कृत्याथ तारेण कृत्वा पुष्पाञ्जलिं ततः।
दत्त्वार्घ्यमवसानीयं निष्कलीकृत्यगोपयेत् ।। ५१ ।।

तारोपचारमूलार्णैरङ्गैः भूषायुधैरपि।
अर्चयेत् प्रतिमासंस्थं तदन्यत्राखिलैर्वृतम् ।। ५२ ।।

केचिदेवं वदन्त्येवं सपर्याविधिरीरिता ।।

।। इति कलशचन्द्रिकायां विष्णुभागे पञ्चमपटलः समाप्तः ।।

# कलशचन्दिकायां विष्णुभागः
# षष्ठः पटलः

## ।। उत्सवविधिः ।।

अथोत्सवविधिं वक्ष्ये समासादिन्दिरापतेः।
पताकां वाहनं दण्डं पल्लवैस्समलङ्कृतम् ।। १ ।।

संशोध्य तेषां पुण्याहं कृत्वा भूतलयक्रमात्।
संस्कृत्य वाहमायम्य लिप्या तं वर्णविग्रहम् ।। २ ।।

कृत्वा पीठं समभ्यर्च्य तस्मिन् मूर्त्तिं प्रकल्प्य च।
देवाग्रसंस्थादावाह्य वाहनं वाहनाणुना ।। ३ ।।

सकलीकृत्य सम्पूज्य केतुदण्डेऽर्चितासने।
वाहं सम्यक् प्रतिष्ठाप्य पताकादिसमन्वितम् ।। ४ ।।

गर्त्ते पीठं समभ्यर्च्य ध्वजं संस्थाप्य तत्र च।
तस्मिन्नावाह्य गरुडं सम्पूज्य च यथाविधि ।। ५ ।।

बलिं दत्त्वा च तन्मूले रक्षेत् तालत्रयादिना।
तद्रात्रौ बीजवपनं कुर्याद् भूतबलिं तथा ।। ६ ।।

देवं परेद्युरारभ्य सम्पूज्य सवनत्रये।
प्रातस्सायं बलिं दद्यादौत्सवं भौतिकं तु वा ।। ७ ।।

हविस्संशोध्य सम्पूज्य मूलेनैतद् विभज्य च।
भूतानां च समाह्वानं कारयेद् वाद्यघोषणैः ।। ८ ।।

सम्प्रार्थ्य देवं संयोज्य कौतुकेमूर्त्तिपेन च।
सन्धार्य तत्साक्षिकं तु वाद्यघोषसमन्वितम् ।। ९ ।।

प्रोक्ष्याराध्याष्टपत्राब्जसंस्थिता देवता स्मरन्।
आराध्य तत्तन्मनुना पर्षद्युक्तं बलिं हरेत् ।। १० ।।

सृष्टिस्थितिविनाशानामित्याद्यः प्रार्थने मनुः।
चण्डप्रचण्डौ गरुडमनन्तं विघ्नशङ्करौ ।। ११ ।।

चक्रपाणिं शङ्खपाणिं द्वारे दक्षिणसव्ययोः।
दिक्पान् मातॄंश्च शास्तारं दुर्गां स्कन्दं धनेश्वरम् ।। १२ ।।

विष्क्सेनं यजेदन्तः स्वस्वपार्षदैस्सह।
अन्तरा द्वारपार्श्वे श्रीपुष्ट्योर्बलिमाहरेत् ।। १३ ।।

बहिर्निर्गत्य विज्ञाप्य ये समस्तादिना ततः।
कुमुदादींश्च पञ्चाशत् गणान् देवग्रहादिकान् ।। १४ ।।

यष्ट्वा देवग्ग्रहादीनां बलिदानेऽन्तरान्तरा।
गृह्णन्त्वित्यादिना यद्वा कुर्यान्मूलेन दिग्बलिम् ।। १५ ।।

महापीठस्य परितः कुमुदादीन् प्रपूज्य च।
अधः पिङ्गलमूर्ध्वे च हरिसेनं समर्चयेत् ।। १६ ।।

क्षेत्रपस्य बलिं दत्वा परीत्यान्तः क्षमापयेत्।
भौतिको बलिराख्यातः औत्सवस्तु निगद्यते ।। १७ ।।

अन्तर्द्वारगतौ द्वास्थौ यजेदानन्दनन्दनौ।
चण्डादीन् समुपस्थाय दिक्पालान्तमथो यजेत् ।। १८ ।।

ओम् आनन्दाय विष्णुपार्षदे नमः
ओम् आनन्दपार्षदेभ्यो नमः ।

नन्दनाय विष्णुपार्षदे नन्दनपार्षदेभ्यः
नमस्ते द्वारपालाय चण्डायामिततेजसे
नरसिंह तनूजाय चक्रेणाङ्किंतमौलये
चण्डाय विष्णुपार्षदे तत्पा।

नमस्ते द्वारपालाय प्रचण्डायामि तेजसे।
नरासिंह तनूजाय शङ्खेनाङ्कितमौलये ।। १९ ।।

प्रचण्डाय विष्णुपार्षदे तत्पा।

वाहनाय महाविष्णो ताक्ष्र्यायामित तेजसे।
गरुडाय नमस्तेऽस्तु सर्व सर्पेन्द्र मृत्यवे ।। २० ।।

गरुडाय विष्णुपार्षदे + पक्षिराजाय स्वाहा।
गरुडाय नमः - वैनतेयाय नमः
वैनतेयाय विद्महे पक्षिराजाय धीमहि
तन्नो गरुडः प्रचोदयात्। तत्पा।। २१।।

शयनं यो जगद्धातुर्विष्णो विविधमायिनः।
अनन्ताय नमस्तुभ्यमहीन्द्र नमिताङ्घ्रये ।। २२ ।।

अनन्ताय विष्णुपार्षदे। तत्पा।

नमस्ते सर्वभूतेश सर्वसम्पत्प्रदायिने।
सर्वविघ्न विनाशाय विघ्नेशाय शिवात्मने ।। २३ ।।

दंदक्षिणामूर्त्तये। तत्पा।

नमस्ते द्वारपालाय चक्रव्यग्रमहाभुजः।
दृष्ट्या निहतदैत्याय वैष्णवाय नमोनमः ।। २४ ।।

चक्रपाणये - तत्पा।

नमस्ते द्वारपालाय शङ्खव्याग्रमहाभुजः।
दृष्ट्या निहतदैत्याय वैष्णवाय नमो नमः।
शङ्खपाणये - तत्पा।
दैत्यदर्पविनाशाय सहस्राक्षाय वृत्रहन्।
कुलिशव्यग्रहस्ताय नमस्तेऽस्तु शतक्रतो ।। २५ ।।

इन्द्राय वज्रहस्ताय सुराधिपतये विष्णुपार्षदे नमः।
इन्द्रपार्षदेभ्यो नमः
ओम् नमो भूतेभ्यो भूतिकृद्भ्य सर्वेभ्योऽरिष्टकृद्भ्य-
स्सद्भ्योऽसद्भ्यस्सदसदभ्यस्सर्वगणेभ्यो नमोनम स्वाहा।

मुखं यः सर्वदेवानां येन हव्यं च नीयते।
येन प्रवर्त्तते सर्वं नमस्तत्मैह्लविर्भुजे ।। २६ ।।

अग्नये शक्तिहस्ताय तोजोऽधिपतये तत्पा।
ओम् नमो भूतेभ्यो
येन संह्लियते सर्वं येन धर्मश्च रक्ष्यते।
यस्माद् बिभेति लोकोऽयं प्रेतनाथ नमोऽस्तु ते ।। २७ ।।

यमाय दण्डहस्ताय प्रेताधिपतये। तत्पा।
ओम् नमो भूतेभ्यः।

राक्षसा यातुधानाश्च पिशाचाश्चाश्रयन्ति यम्।
तस्मै निऋृतिरूपाय रक्षसां पतये नमः ।। २८ ।।

निऋृतये खड्गहस्ताय रक्षोऽधिपतये - तत्पा।
ओम नमो भूतेभ्यः।

येन प्रसूयते सर्वं यस्मिन् सर्वं प्रलीयते।
अमोघ पाशहस्ताय तस्मै पां पतये नमः ।। २९ ।।

वरुणाय पाशहस्ताय जलाधिपतये - तत्पा।
ओम नमो भूतेभ्यः।
पूर्यन्ते च ह्रियन्ते च येन प्राणादयः क्रमात्।
भूतानां पतये नित्यं नमस्तस्मै मरुत्पते ।। ३० ।।

वायवे ध्वजहस्ताय प्राणाधिपतये तत्पा।
ओम नमो भूतेभ्यः।
यं प्राश्यामरतां यान्ति देवा यज्ञशरीरिणः।
सोमाय गदिने तस्मै ज्योतिषां पतये नमः ।। ३१ ।।

सोमाय गदाहस्ताय नक्षत्राधिपतये। तत्पा।
ओम नमो भूतेभ्यः।
यत्प्रसादाज्जगत्सर्वं धनेन परिपूर्यते।
यक्षगुह्यकनाथाय धननाथ नमोऽस्तुते ।। ३२ ।।



वैश्रवणाय धननाथायाधिपतये विष्णु-

कुबेराय यक्षाधिपतये महाबलाय गुह्यकाधिपतये नमः। तत्पा।

ओम् नमो भूतेभ्यः।

येन कालाग्निना लोको युगान्तेष्ववदह्यते।

तस्मै ते ब्रह्मणः पुत्र विरूपाक्ष नमोऽस्तु ते ॥ २८ ॥

ईशानाय शूलहस्ताय विद्याधिपतये - तत्पा

ओम् नमो भूतेभ्यः।

येन सृष्टं जगत्सर्वं सर्गादौ विष्णुशासनात्।

पितामह नमस्तुभ्यं सर्वभूतेश पद्मज ॥ २९ ॥

ब्रह्मणे पद्महस्ताय लोकाधिपतये - तत्पा।

ओम् नमो भूतेभ्यः।

पन्नगाधिपतिर्देव अनन्तो नाम नामतः।

पातालवासिने नित्य नागराजाय वै नमः ॥ ३० ॥

अनन्ताय चक्रहस्ताय नागाधिपतये - तत्पा।

ओम् नमो भूतेभ्यः।

एवमेषां बलिं दत्वा तद्बहिश्च क्रमाद् यजेत्।

प्राचि स्कन्दं भूतनाथमग्नौ धर्मं यमान्तिके ॥ ३१ ॥

मातृंश्च भृङ्गे शास्तारं भानुं निरृति सन्निधौ।

ब्रह्माणं वरुणे वायौ सूकरश्चण्डिकामपि ॥ ३२ ॥

स्कन्दं मुख्येऽन्यमातृरप्यम्बिकां सौमसन्निधौ।

ईशे शिवमुदीत्यां तु विष्वक्सेनं समर्चयेत् ॥ ३३ ॥



ओम् नमः षण्मुखाय। तत्पा।

भां भूताधिपतये नमः। तत्पा।
ओम् धर्माय नमः। तत्पा।

वीरभद्र नमस्तेऽस्तु नमो विघ्नेश्वराय च।
ब्राह्म्यादिभ्यश्च मातृभ्यस्सर्वाभ्यो वै नमो नमः ।। ३४ ।।

वीरभद्राय नमः। वीरभद्राय विद्महे।
महाननाय धीमहे तन्नश्शान्तः प्रचोदयात् ।। तत्पा।

गं गणपतये नमः।
एकदंष्ट्राय विद्महे गजाननाय धीमहे तन्नो विघ्नः प्रचोदयात्।
तत्पा।

व्योम् ब्रह्माण्यै नमः।
ब्रह्मभूतायै विद्महे कुशहस्तायै धीमहे तन्नो ब्राह्मी प्रचोदयात्।
तत्पा।

मं महेश्वर्यै नमः।
महेश्वरभूतायै विद्महे शूलहस्तायै धीमहे तन्नो माहेश्वरी
प्रचोदयात्। तत्पा।

मां कौमार्यै नमः।
स्कन्दभूतायै विद्महे शक्तिहस्तायै धीमहे तन्नः कौमारी
प्रचोदयात्। तत्पा।

हेम् वैष्णव्यै नमः।
विष्णुभूतायै विद्महे चक्रहस्तायै धीमहे तन्नो वैष्णवी प्रचोदयात्।
तत्पा।

हैं वाराह्यै नमः।

प्रजापति भूतायै विद्महे गदाहस्तायै धीमहि तन्नो वाराही प्रचोदयात्। तत्पा।

होमिन्द्राण्यै नमः।

इन्द्रभूतायै विद्महे वज्रहस्तायै धीमहि तन्न इन्द्राणी प्रचोदयात्। तत्पा।

हुं चामुण्ड्यै नमः।

रुद्रभूतायै विद्महे खड्गहस्तायै धीमहि तन्नश्चामुण्डि प्रचोदयात्। तत्पा।

मातृभ्यो नमः। लोकमातृभ्यो नमः।
सर्वमातृभ्यो नमः। सर्वमातृगणेभ्यो नमः।
नानारूपा मातरः प्रतिदिशं व्यवस्थिता दिव्यान्तरिक्षभौमाः पातालनिवासिन्यश्चेहायान्तु विष्ण्वाज्ञया मामनुगृह्णन्तु प्रतिगृह्णन्तु पूजां सौम्यरूप धारिण्यस्ताभ्यो देवीभ्यो नमो नम स्वाहा ।।

ओम् ह्लं नमः पराय गोप्त्रे। शास्त्रे नमः।
शम्बरकुमाराय नमः। हस्त्यश्वाय नमः। नीलय, कालाय, कपर्दिने, उग्राय, रुद्रसुताय भूतनाथाय, भूताधिपतये, भूतनाथाय विद्महे भवपुत्राय धीमहि तन्न शास्ता प्रचोदयात्। तत्पा

तत्पश्चिमे

चाम्बादीनां गणास्सर्वे कोटिकोटि गणाधिपाः।

भवन्तु सहितास्सर्वे तेभ्यस्ताभ्यो नमो नमः।।

ओम् घषोत्काय स्वाहा। तत्पा।

ओम् तत् सत् नमो ब्रह्मणे तत्सन्नमः - तत्पा।

ह्रं वाराहया नमः - तत्पा। ह्रीं दुर्गायै नमः।
दुर्गापार्षदीभ्यो नमः। ओम् वचद्भुवेनमः।
कार्त्तिकेयाय, सनत्कुमाराय, स्कन्दाय, इन्द्रायविशाखाय षष्ठये
षणमुखाय - सनत्कुमाराय विद्महे षडाननाय धीमहि -
तन्नस्कन्दः प्रचोदयात्। तत्पा।

श्रीधराय नमस्तेऽस्तु नमस्तेऽश्वमुखाय च।
वागीश्वर्यादि मातृभ्यस्सर्वाभ्यो वै नमो नमः ।।

श्रीधराय तत्पा, अश्वमुखाय तत्पा, वागीश्वर्यै नमः। तत्पा।
क्रियायै तत्पा, कीर्त्यैतत्पा, लक्ष्म्यै तत्पा, सृष्ट्यै तत्पा।
विद्यायै तत्पा, शान्त्यै तत्पा, मातृभ्यो नमः + लोकमातृ सर्वमातृ
सर्वमातृगणेभ्यः - नानारूपा इत्यादि।

मूलेन अम्बिकायै - तत्पा। ओम् नमः शिवाय - तत्पा।

विष्वक्सेन नमस्तेऽस्तु देव निर्माल्य धारिणे।
शङ्खचक्रगदापाणे महापारिषदेश्वर।।

ओम् विष्वक्सेनाय विष्णुपार्षदे नमः। तत्पा।
श्रीं श्रीयै नमः, ग्लौं पुष्ट्यै नमः।
ये समस्तंजगद्व्याप्य तिष्ठन्ति बलिकाङ्क्षिणः।

विष्णुपारिषदास्सर्वे गृह्णन्तु बलिमुत्तमम्।।

कुमुदाय नमः, कुमुदाक्षाय नमः।
पुण्डरीकाय, वामनाय, शङ्कुकर्णाय सर्वनेत्राय सुमुखाय सुप्रतिष्ठिताय पञ्चाशद्गणेभ्य, कुमुदपारिषदेभ्य प्राक्स्थितेभ्यो नमः।

पूर्वस्यां दिशि हरे र्भगवतो ये गणाः वज्रपाणयः
श्वेता श्वेताक्षा श्वेतलोहिता दिव्यान्तरिक्षभौमाः
पातालनिवासिनश्च तेभ्यो वै नमो नम स्वाहा।

ये भूता पुरस्सदो निशाचरा वैष्णवाः सन्तोऽसन्तस्सदसन्तो विरूपा विश्वरूपा महारूपा घोररूपा मृगास्या विहगाननाः पुष्टिकृतोऽपुष्टिकृतः कामदाश्च बलिमिच्छन्ति तेषां सर्वेषां बलिं हरामि, महद्भ्यः क्षुद्रकेभ्यश्च सर्वेभ्यस्तेभ्यस्ताभ्यो नमो नम स्वाहा।

पञ्चाशद्गणेभ्यः कुमुदाक्षपारिषदेभ्यः अग्निदिक्स्थितेभ्य इत्यादि।
आग्नेय्यां दिशि शक्तिपाणयो रक्ता इत्यादि।

ये भूता अग्निष इत्यादि।
याम्यायां दिशि दण्डपाणयः कृष्णा।
नैरृत्यां दिशि खड्गपाणयः श्यामा।
वारुण्यां दिशि पाशापाणयश्शबलाः।
वायव्यां दिशि अङ्कुशपाणयः पीताः।
सौम्यायां दिशि गदापाणयः सिताः।

ऐशान्यां दिशि शूलपाणयः कपिलाः।
ऊर्ध्वायां दिशि पद्मपाणयः सूक्ष्माः।
अधस्ताद् दिशि विषपाणयो धूम्राः।
ये भूताः दक्षिणसदः निऋतिसदः
पश्चिमसदः वायुसदः उत्तरसदः ईशसदः
ये भूता उपरिषदः।

एवं द्वितीयावरणे दिक्ष्वष्टासु बलिं हरेत्।
अथासाद्य महापीठं क्रमात्तत्र बलिं हरेत् ।।

कुमुदादीनष्टदिक्षु पिङ्गलं पूजयेदधः।
हरिसेनं यजेदूर्ध्वे वक्ष्यमाणमनूत्तमैः ।।

हरिसेनाय नमः हरिसेनाय विद्महे महाबलाय धीमहि।
तन्नश्शक्तिः प्रचोदयात्। हरिसेन पा-

अष्टमूर्त्तये नमः।
अष्टमूर्त्तिपार्षदेभ्यस्सद्भ्योऽसद्भ्यस्सदसद्भ्यसर्वगणेभ्यो
नमो नम स्वाहा।

असंख्याता गणास्सर्वे कोटिकोटि गणाधिपाः।
भवन्तु सहितास्सर्वे तेभ्यस्ताभ्यो नमो नम स्वाहा।
पुनर्ध्वजमूले।

पक्षविक्षेपविध्वस्त समस्ताहीन्द्रमण्डलः।
हरिकेतो नमस्तुभ्यं गरुत्मन् वायुमूर्त्तये ।।

ओम् वैनतेयाय नमः।
पुनस्तृतीयावरणे ये समस्तादिना।
ओम् नमो भूतेभ्य इत्यादिना। गृह्णन्वित्यादिना च बलिंहरेत्।
गृह्णन्तु बलिमेतं तु बाह्यस्था विहगाननाः ।।

ये क्रूरा ये ल्पसत्वाश्च भूतप्रेतनिशाचराः।
वेतालाश्चैवमातङ्गा हीना हीनाश्च ये गणाः ।।

तेषां सर्वेषां बलिं हरामि।
महद्भ्यः क्षुद्रकेभ्यश्च सर्वेभ्यस्तेभ्यस्ताभ्यो नमो नम स्वाहा।
चतुर्थावरणे देवग्रहादयः।
देवाश्चाप्यसुराश्चापि गन्धर्वा यज्ञसंज्ञकाः।
पितरश्चैव नागाश्च राक्षसाश्च पिशाचकाः ।।

मूलेन दिग्बलिः।

ओम् विष्णुपार्षदेभ्यो भूतेभ्यो नमः।
अनेन पातालबलिः। क्षं क्षेत्रपालाय नमः। तत्पा।
एवमुत्सवबलिविधिः ।।

तीर्थयात्रादिनाद् दत्वा सायं पूर्वदिने बलिम्।
मन्त्राभ्यां वक्ष्यमाणाभ्यां ग्रामसीमादिषु क्रमात् ।।

विष्णुपार्षदेभ्यश्च प्रमथेभ्यो नमोनमः।
मातृभ्यस्तद्गणेभ्यश्च सर्वाभ्यो वै नमोनमः ।।

कृत्वाथ मृगयां देवमूलबिम्बे नियोजयेत्।
स्नात्वाथ मण्डपे शय्यां कृत्वा पीठं प्रपूज्य च ।।

मङ्गलाङ्कुरपात्राणि मङ्गलानि च विन्यसेत्।
अन्तः प्रविश्य पीठार्चापूर्वं देवं प्रपूज्य च ।।

प्रसाद्य तीर्थयात्रादि मनुना प्रार्थ्य साञ्जलिः।
कृत्वा घृतारोपणं च कर्मार्चामभिषिच्य च ।।

पुण्याहं च विधायास्य बध्नीयात् कौतुकं करे।
मूलमन्त्रो जितन्तादिमनुः कौतुकबन्धने ।।

कृत्वा भूतलयाद्यं तु लिपिन्यसनपश्चिमम्।
कर्मार्चायां पीठमिष्ट्वा तत्र मूर्त्तिं प्रकल्प्य च ।।

तत्त्वानि पञ्चमूलाणुरुद्धान्युक्त्वा विलोमतः।
मूलदेवहृदंभोजादधिशङ्खजले महः ।।

आनीयसृष्टिमार्गोक्तैस्तत्त्वैर्मूलनिरोधितैः।
जितन्तमूलतारान्तैः कर्मार्चामभिषिच्य च ।।

नियोज्य तन्महस्तस्यां लिपितत्त्वाक्षरान्यसेत्।
मूलस्थं सकलीकृत्य रक्षेत्तालत्रयादिना ।।

कर्मार्चां मण्डपं नीत्वा न्यस्य पीठे समर्चिते।
आवाह्य सकलीकृत्य सम्पूज्यान्नं निवेद्य च ।।

ताम्बूलादीनि दत्त्वार्चां विधायान्त्यार्घ्यतः पुरा।
शय्यायां शाययेत् पञ्चतत्त्वैर्देवं रमापतिम् ।।

पुनरुत्क्रमतस्तत्त्वैर्व्याप्य मूलेन तारतः।
जाग्रदादिदशां नीत्त्वा तुरीयां प्रणयेद् दशाम् ।।

स्वरूपानुभवासक्तं देवं तां प्राप्य चिन्तयन्।
ततस्संरक्ष्य संवृत्य रात्रिशेषं समापयेत् ।।

प्रातः सन्ध्यां समाप्याथ विष्णुसात्कृतविग्रहः।
व्याप्यादिमूलेषु तत्त्वैर्जागरूकममुं नयेत् ।।

उत्थ्याप्य धेन्वादिकं तु प्रदर्श्यान्त्यार्घ्य पूर्वकम्।
पूजाशेषं समाप्यामुं न्यस्य पीठेऽथ पूजिते ।।

सकलीकृत्योपचर्य पुनराचमनावधि।
दन्तजिह्वा पवनानि दत्वा गण्डूषकं बहु ।।

समर्प्य पाद्यादिकं च संस्नाप्यास्मै समर्च्य च।
पाद्यमाचमनीयं च प्रोक्ष्यापोहि पुरस्सरैः ।।

अंक्त्वा मधुघृताभ्यां तु हरिद्राभिश्च घर्षयेत्।
आसिच्य तोयैर्मन्त्रोदैरभिषिच्य समर्च्य च ।।

वस्त्राद्युपहृतीर्दत्त्वा दूर्वाग्रं पुष्पचन्दने।
अञ्जनश्चागरुं मालां प्रदर्श्यादर्शकं तथा ।।

गोभ्योऽथयवसंदत्त्वा श्रावयित्वेतिहासकम्।
विप्राय तण्डुलघटं स्वर्णं दत्वा प्रपूज्य च ।।

शयनादिकमुद्वास्य देवमन्तः प्रवेश्य च।
अभिषिच्याथ मूलार्चां पीठपूजां विधाय च ।।

आयोज्य कौतुकगतां चितिं पूर्वोक्तमार्गतः।
आवाह्य सकलीकृत्य पूजाशेषं समापयेत् ।।

यात्राहोमं ततः कुर्यात् निधायाग्निं यथाविधि।
परिवाराहुतेरूर्ध्वं हुनेदेकैकशो घृतम् ।।

कनिक्रदादि षण्मन्त्रैस्स्वस्त्याद्यैः पञ्चभिस्तथा।
चतुर्द्रव्यं तु मूलेन हुत्वा शेषं समाप्य च।।

अन्तर्गत्वापीठमिष्ट्वा समावाह्य समापतिम्।
सकलीकृत्य संस्नाप्य सम्प्रोक्ष्यापोहि पूर्वकैः ।।

मुद्गमाषयवस्वर्णनिशातण्डुलशीतजैः।
चूर्णैर्द्रुपदयोन्मृज्य संस्नाप्यार्च्य तथैव वा ।।

न्यस्याग्रे कर्मबिम्बं तु शोधितं पूर्ववर्त्मना।
कर्मार्चेत्यादिनाभ्यर्च्य(र्थ्यं) यात्रासम्पातमर्प्य तम् ।।

मूलबिम्बात् कर्मबिम्बे योजयेत् पूर्ववर्त्मना।
आवाह्य सकलीकृत्य मूलार्चां परिरक्ष्य च ।।

गृहीत्वा कौतुकं गच्छेत् मङ्गलानि वदन् बहिः।
एकः प्रदक्षिणेनान्तः यथादृष्टं बलिं हरेत् ।।

बहिश्च तद्ध्वजचितिं कर्मबिम्बे नियोज्य च।
क्षेत्रेश गुप्तसदनो यायादन्यगणैस्सह ।।

आरोप्य वाहने देवं द्वास्थावभ्यर्च्य गोपुरे।
बहिस्सालं परीत्याथ दिङ्मन्त्रेण शनैर्व्रजेत् ।।

आसाद्य तीर्थमिष्टेऽथ पीठे तत्सम्मुखं न्यसेत्।
साङ्गीकृत्य प्रदत्वास्मै द्वितीयाचाम पश्चिमम् ।।

विशोधिते तीर्थजले मज्जयित्वेष्टतत्त्वकैः।
पीठे निधायाचमान्तं उपचर्य प्रमार्ज्य च ॥

आपोहिष्ठादिभिश्चूर्णैरुद्धृत्य द्रुपदादिना।
जानुदघ्ने जले स्थित्वा कुर्वन्ननिलसंयमम् ॥

कृताघमर्षणविधि ऋतादिमनुभिस्ततः।
संस्नाप्य पीठे विन्यस्य वसनाद्यं समर्प्य च ॥

सम्पूज्यास्मै निवेद्याग्नौ हुत्वा दत्वा बलिंजले।
पूजाशेषं समाप्याथ मन्त्रेणामुं निवेदयेत् ॥

तीर्थेऽस्मिन् विमले पुण्येस्नातोऽसि पुरुषोत्तम।
अतस्त्वमनुगृह्णीष्व स्वस्थानोपाश्रयेणनः ॥

तीर्थं देवे समुद्वास्य वाहमारोप्य सत्वरम्।
प्रापय्य देवं स्वन्धाम तस्मिन्नेव दिने गुरुः ॥

मूलबिम्बे नियोज्यामुं अभिषिच्य प्रपूजयेत्।
उत्सवान्ते विधेयस्य स्नपनस्य विधिं ब्रुवे ॥

क्षेत्रे शैलपुटे बाह्ये त्रिकं दिक्ष्वेकमन्यतः।
मध्ये च नवकं कुर्यादष्टाभिर्दलतो घटैः ॥

हेमरत्नाष्टगन्धाद्भिः ब्राह्मं कुम्भं प्रपूरयेत्।
हिरण्यरूप्यरत्नाष्टगन्धतोयैर्दिशि क्रमात् ॥

पौष्पं कुशोदं कोणेषु फलोदयश्च यवोदकम्।
सम्पूज्याथ चतुर्द्रव्यैराधिवासनिकं हुनेत् ॥

दिग्विदिक्क्रमतो द्वाभ्यां द्वाद्यामृग्भ्यामथ क्रमात्।
पुं सूक्तस्य समस्तेन ब्राह्मेनान्तेभिषेचयेत् ।।

तदह्नि वा परस्मिन् वा कलशैर्द्रव्यपूरितैः।
अभिषिच्यामुमभ्यर्च्य रात्रौ भूतबलिं हरेत् ।।

।। इति कलशचन्द्रिकायां विष्णुभागे षष्ठपटलः समाप्तः ।।

।। विष्णुभागः समाप्तः ।।

# ।। कलशचन्द्रिकायां शङ्करनारायणभागः।।

## ।। प्रथमः पटलः।।

### ।। हरिः ।।

गणपतये नमः। अविघ्नमस्तु ।

मङ्गलायास्तु सम्भिन्नमुमामाधवयोर्वपुः।
सितासितं पयः पूरं गङ्गायमुनयोरिव ।। १ ।।

शिवनारायणस्याहं वक्ष्यामि कलशक्रमम्।
कथ्यतेऽत्र विशेषस्तु बीजवापादिकर्मणि ।। २ ।।

बीजानि वैष्णवोक्तानि जलैरस्त्रेण सेचनम्।
मूलेन पयसा वापस्तेनैवोक्षार्जिताणुना ।। ३ ।।

भूतग्रहादयः प्रोक्ता बलिभाजोऽत्र देवताः।
विष्णूक्तानि बलिद्रव्याण्यहःक्लप्तिश्च तावती ।। ४ ।।

बीजवापं विधायैव प्रासादं शोधयेत् ततः।
सूत्रादि विकिरान्तेषु व्यस्ताव्यस्तध्रुवोऽस्त्रकम् ।। ५ ।।

वाय्वग्न्यमृतबीजानि पञ्चतत्त्वानि गव्यके।
आपः पुनन्तु गन्धोदमूलस्तु विकिरे मनुः ।। ६ ।।

सहाशलाकादर्भोद्यद् ब्रह्मद्रुमशिखाकृता।
मुष्टिस्सहाशलाकाभ्यां रचिता वा प्रकीर्त्तिता ।। ७ ।।

प्रासादस्यार्चने मन्त्रो मूल एव प्रचोदितः।
अस्त्रं सुदर्शनं यद्वा युक्तं पाशुपतेन तु ।। ८ ।।

राक्षोघ्ने व्याहृतीनां प्राक् हुनेद् गुह्याणुभिः क्रमात्।
वास्तुहोमे गुह्यमन्त्रैः पञ्चदुर्गा पदे हुनेत् ।। ९ ।।

प्रासादस्य विशुद्धौतु विशेषोऽयं प्रदर्शितः।
चतुश्शुद्धिस्ततः कृत्वा धारां कुर्याद् यथाविधि ।। १० ।।

निजपञ्चमनून् सूक्तान् रौद्रान् वैष्णवचोदितान्।
जप्त्वावगाह्य गव्यैश्च सिञ्चेत् पञ्चघटैरपि ।। ११ ।।

पुण्याहं च ततः कृत्वा होमकर्म समारभेत्।
याम्यदिश्यर्धचन्द्राभे कुण्डेऽग्निं प्रजनय्य च ।। १२ ।।

शङ्करप्रोक्तवत् सर्वं होमं कृत्वा यथाविधि।
वैष्णवोक्तेन मार्गेण जनयित्वाग्निमग्रतः ।। १३ ।।

प्रायश्चित्तात्मकं होमं तद्वदेव समाचरेत्।
शङ्करप्रोक्तसंज्ञं च नन्दिप्रोक्तसमाह्वयम् ।। १४ ।।

मार्कण्डेयोदितं यद्वा कुर्याद्दोषानुसारतः।
शान्तिहोमं ततः कुर्यादीशे तुर्यश्रकुण्डयोः ।। १५ ।।

पृथक् सञ्जनिते वह्नौ शिवविष्णूदितं द्वयम्।
श्वस्पर्शनादिविहितां यद्वा शान्तिं समाचरेत् ।। १६ ।।

अथाग्निजननं कुर्यादीशे तुर्यश्रकुण्डके।
ह्लींकारश्शक्तिबीजः स्यात् सप्तव्याहृतिभिः क्रमात् ॥ १७ ॥

कृत्वा सप्तक्रियास्सत्यमनुनैवोपनायकम्।
एवमष्टक्रियाः पूर्णाः वौषडन्तस्वमूलतः ॥ १८ ॥

स्वोदितोऽर्चाक्रमः पक्वं गायत्र्या निजया हुनेत्।
स्वान्येव पञ्चतत्वानि शेषं सामान्यवर्त्मना ॥ १९ ॥

अथाग्रे प्रोक्तमार्गेण जनयित्वा विभावसुम्।
निजोदितक्रमादेव तत्त्वहोमं समाचरेत् ॥ २० ॥

मण्डपं कारयित्वाथ तस्य संस्कारमाचरेत्।
अश्वत्थौदुम्बरवटप्लक्षा वै तोरणद्रुमाः ॥ २१ ॥

सुमङ्गलस्सुहोत्रश्च कल्याणो भद्रकस्तथा।
तोरणेशा ध्वजा स्थाप्या द्वौ द्वौ द्वारस्य पार्श्वयोः ॥ २२ ॥

नन्द्याद्याः कुमुदात्मान्ता ध्वजानां देवताः स्मृताः।
ध्वजान् संस्थाप्य तारेण तेषु तद्देवता यजेत् ॥ २३ ॥

नन्दी चैव महाकालो भूतानाथो महीधरः।
पर्वतेशो गुहेशश्च कालपाशकपालिनौ ॥ २४ ॥

कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः।
शङ्कुकर्णस्सर्वनेत्रः सुमुखः सुप्रतिष्ठितः ॥ २५ ॥

अथैतेषां बलिं दत्त्वा द्वारकुम्भेषु पूजयेत्।
द्वाः पार्श्वयोः दिशो यद्वा दिग्वष्टासु दिगीश्वरान् ॥ २६ ॥

महोदरादीन् यद्वाष्टौ पूर्णात्मादिसमन्वितान्।
पद्मरागं प्रवालं च वैडूर्यं पुष्यरागकम् ।। २७ ।।

नीलं मरकतं मुक्तास्फटिकं चैषु विन्यसेत्।
अथ पात्राष्टकुम्भेषु न्यसेदेव हिरण्यकम् ।। २८ ।।

कुम्भभद्रादिकौ कर्णौ श्वेतगोपूर्वकावपि।
अर्चयेद् द्वारदेशेषु क्रमात् तद्द्वारदेवताः ।। २९ ।।

विशोध्य मार्जनाद्यैस्तं विकिरौघं विकीर्य च।
समिष्टपीठशक्तिस्थं देवदिक्पैस्सहार्चयेत् ।। ३० ।।

चतुरश्रं धनुर्वक्रं वृत्तं चैव त्रिकोणकम्।
तुर्यश्रमेकं नागेऽस्मिन् वह्निं सञ्जनयेत् ततः ।। ३१ ।।

महत्पात्रे गालितो देवरदं पूजयेत्ततः।
अथ कुम्भेशमभ्यर्च्य कर्करीं च विधानतः।
संप्रोक्ष्य वेदिमल्लिङ्गैः पदानि परिकल्पयेत् ।। ३२ ।।

।। इति कलशचन्द्रिकायां शङ्करनारायणभागे
प्रथमपटलः समाप्तः ।।

# कलशचन्द्रिकायां शङ्करनारायणभागः
# द्वितीयः पटलः

अधमादिक्रमादत्र नवधा स्नपनक्रमः।
तत्क्षेत्रद्रव्यमन्त्रांश्च विविच्य प्रवदाम्यहम् ।। १ ।।

त्रिकं दिक्षु विदिक्ष्वेकं नवान्तः पञ्चविंशतौ।
अधमाधममुद्दिष्टं पञ्चविंशतिभिर्घटैः ।। २ ।।

षट्दिक्षुमध्ये नवकं कोणेषु च चतुष्टयम्।
एकोनार्धशतघटैः स्नानं चाधममध्यमम् ।। ३ ।।

एकादशपुटे क्षेत्रे नवानां नवकं नयेत्।
एकाशीतिघटैरेवं स्नपनन्त्वधमोत्तमम् ।। ४ ।।

घृतमुष्णोदकं रत्नं फलोदं लोहवारि च।
मार्जनाम्भोगन्धतोयमक्षतोदं यवोदकम् ।। ५ ।।

पूरयेत् मध्यनवके मध्यादीशावसानकम्।
पाद्यार्घ्याचमगव्यानि दधि क्षीर मधूनि च ।। ६ ।।

कषायं बाह्यखण्डेषु दिग्विदिक्षु प्रपूरयेत्।
तत्तत्परिघटांश्चापि तदा तद्वत्प्रपूरयेत् ।। ७ ।।

पद्मरागं च वैडूर्यं इन्द्रनीलं च गारुडम्।
पुष्यकं ब्रह्मरागं च वज्रमुक्ताफलं तथा ।। ८ ।।

सूर्यकान्तेन्दुकान्तौ च प्रवालं स्फाटिकं तथा।
अयस्कान्तं च रत्नानां त्रयोदशकमीरितम् ।। ९ ।।

पनसाम्रकपित्थाश्वकदल्यामलकं तथा।
विल्वं भव्यं मातुलङ्गं नालिकेरं च डाडिमम् ।। १० ।।

बदरी कुटचं चैव फलद्वादशकं स्मृतम्।
सुपर्णं रजतं ताम्रमायसं त्रपुसीसकम् ।। २१ ।।

आरं कांस्यं त्तिलं च लोहानां नवकं स्मृतम्।
शिरीषं च कुशागन्धं रजनी सूर्यवर्त्तिनी ।। २२ ।।

भूस्तृणं च सदा भद्रा पनसं तुलसीद्वयम्।
सहदेवीत्येकादशमार्जनद्रव्यमीरितम् ।। २३ ।।

उशीरं कुङ्कुमं कुष्ठं मांसी मलयजं मुरम्।
देवदारु च ह्रीवेरं कर्पूरं नागमुस्तकम् ।। २४ ।।

अगरुं द्वादशैवं तु गन्धद्रव्यमुदीरितम्।
नीवारं वैणवं चैव यवसर्षपमाषकान् ।। २५ ।।

कङ्कुतण्डुलशालीनीत्यक्षताष्टकमीरितम्।
तुलसीपद्मदूर्वाश्च श्यामाकं विष्णुपर्णिका ।। २६ ।।

विल्वं गन्धाक्षतं पुष्पं कुशाग्रं पाद्यमुच्यते।
गन्धं पुष्पं दधि क्षीरं नीलं सिद्धार्थमक्षतम् ।। २७ ।।

वचा यव कुशाग्राणि फलं चार्घ्यङ्गमीरितम्।
कर्पूरजातितक्कोल लवङ्गकुसुमानि च ।। २८ ।।

गन्धमाचमनीयेतु द्रव्यषट्कमुदीरितम्।
शमीपलाश खदिर विल्वाश्वत्थ विकङ्कतैः ।। २९ ।।

उदुम्बराम्रन्यग्रोधपनसप्लक्षजंबुकैः।
मधूकनीपशम्याकैः तिथिद्रव्यैः कषायकम् ।। ३० ।।

विष्णुर्दिवाकरो ब्रह्मा कुबेरो वसवस्तथा।
विश्वेदेवाश्च गन्धर्वा निरृत्यार्ये पितृश्रियौ ।। ३१ ।।

वाग्दक्षशुक्रसोमेन्द्रयमाश्च द्रव्यदेवताः।
अस्त्रेण क्षालनं वर्ममनुना सूत्रवेष्टकम् ।। ३२ ।।

मूलेन लेपनं गन्धैर्धूपनं प्रणवेन तु।
यद्वा घटानां तत्सर्वं प्रणवेनैव कारयेत् ।। ३३ ।।

गायत्र्या द्रव्यकुम्भांस्तु विन्यसेदुद्धरेत्तु यः।
तद्द्वयं परिकुम्भानां मूलेनैव समाचरेत् ।। ३४ ।।

द्रव्याणां देवतामन्त्रैः द्रव्यविन्यास ईरितः।
एवं सम्पूर्य सम्पूज्य वक्ष्यमाणक्रमादथ ।। ३५ ।।

अधिवास्य यथान्यायमभिषिञ्चेत् सनातनम्।
पाद्यार्घ्याचमगव्यैस्तं सिक्त्वा परिघटैस्सह ।। ३६ ।।

मध्यस्थ ब्रह्मकुम्भात् तद्घृतेन स्नपयेद् विभुम्।
ततो दध्ना च पयसा मधुना च कषायकैः ।। ३७ ।।

उष्णोदैः फलतोयैश्च मार्जनाक्षतवारिभिः।
रत्नलोहगन्धयववारिभिः दिग्विदिक्रमात् ।। ३८ ।।

गायत्र्या द्रव्यकुम्भानामुद्धारः परिकीर्त्तितः।
मूलेन परिकुम्भानामुद्धारश्च प्रकीर्त्तितः ।। ३९ ।।

कुम्भाच्छादनवस्त्राणि मूलेन परिमोचयेत्।
उक्तसप्तदशद्रव्यस्नापने मनवः क्रमात् ।। ४० ।।

विविच्यात्र तु वक्ष्यन्ते तत्तद्रव्येण संयुतम्।
सद्यवामास्यघोरैस्तु पाद्यार्घ्याचमगव्यकान् ।। ४१ ।।

मध्यस्थं घृतमीशेन दधिपञ्चाक्षरेण च।
आप्ययस्वेति च पयः पञ्चार्णेनैव संयुतम् ।। ४२ ।।

मधुवातब्रह्महृद्भ्यां मधुस्नानमुदीरितम्।
अश्वत्थे वेति शिरसा कषायस्नानमाचरेत् ।। ४३ ।।

स्वगायत्र्या च शिखया स्नानमुष्णोदकेन तु।
पुष्पावतीतृचानेत्रमनुना च फलोदकम् ।। ४४ ।।

आपोहिष्ठादिभिश्चात्र मनुना मार्जनं स्मृतम्।
रुद्रगायत्रियुग्व्योमदशार्णेनाक्षतोदकम् ।। ४५ ।।

रत्नाम्भस्तन्महेशादि गायत्र्या व्योमविद्यया।
लोहाम्भोव्योमगायत्र्या व्योमव्यापि दशार्णतः ।। ४६ ।।

त्र्यम्बकानुष्टुभा वर्ममनुना गन्धवारि च।
क्रमात् पुरुषसूक्तस्य चैकैकामृचमत्र तु ।। ४७ ।।

एषां षोडशमन्त्राणां आदौ संयोजयेद् बुधः।
मानस्तोकेत्यृचा तद्वदिदं विष्ण्वाद्यया सह ।। ४८ ।।

विष्णुगायत्र्यान्ते तं यवोदेनाभिषेचयेत्।
अत्रोक्तानि हृदादीनि पञ्चब्रह्मोदितानि च ।। ४९ ।।

तन्महेशाय विद्महे वाग्विशुद्धाय धीमहि।
तन्न शिवः प्रचोदयात् ।। ५० ।।

एषा तु शिवगायात्री वक्ष्यते व्योमसंज्ञिता।
व्योम व्योमाय विद्महे व्योमेश्वराय धीमहि।
तन्नो व्योम प्रचोदयात्।
आदिति दीर्घा बिन्द्वन्ता व्योमव्यापी च ङेयुतः।
ताररुद्धस्समाख्यातो व्योमव्यापी दशाक्षरः ।। ५१ ।।

स्नानं सप्तदशद्रव्यैरधमत्रयमीरितम्।
तिथिसंख्यपुटे क्षेत्रे रचयेत् पञ्चविंशति ।। ५२ ।।

मध्ये सप्तदशद्रव्ययुक्त्या बाह्येऽथ वीथिका।
तद्बहिर्दिक्षुकोणेषु नवकानि प्रकल्पयेत् ।। ५३ ।।

पञ्चविंशतिकुम्भांस्तु द्रव्यैः पूर्वोदितैः क्रमात्।
पूर्ववत्पूरयित्वाथ तद्बाह्ये नवकेष्वपि ।। ५४ ।।

गुलेक्षुतोयकेराम्भस्तैलशान्त्युदकानि च।
मङ्गलोदं मृज्जलं च भस्मोदा दिग्विदिक्क्रमात् ।। ५५ ।।

पूरयेत् प्रणवेनैव शिष्टाश्शुद्धोदकेन च।
वैणवं यवनीवारौ पलाशस्तिलसर्षपौ ।। ५६ ।।

तुलसीपत्रकमलैः शान्तिद्रव्याष्टकं स्मृतम्।

बोधिशक्रार्जुनाशोककुशाब्रह्मद्रमाङ्कुरैः ।। ५७ ।।

एकपद्मारविन्दाभ्यां मङ्गलोदकमीरितम्।
तटाकात् पर्वतात् क्षेत्रात् नदीकूलद्वयात् तथा ।। ५८ ।।

वराहगजदन्ताभ्यां वल्मीकवृषश्रृङ्गतः।
नद्यां वेद्यां गृहीताभिर्मृद्भिर्मृज्जलमीरितम् ।। ५९ ।।

कषायकल्कं सन्दग्धं भस्मोदं सकरीषकम्।
पूर्वोक्तद्रव्यमन्त्रैश्च स्नापयित्वा च मध्यतः ।। ६० ।।

त्वं विष्णो इत्यृचा तद्वत् पञ्चब्रह्मसमन्वितम्।
गुलेक्षुनालिकेरोदैः देवेशमभिषिच्य च ।। ६१ ।।

त्वं विष्णवीशानमूलैश्च तैलकुम्भेन सेचयेत्।
विष्ण्वोर्न्नृकमृचा तत्पुरुषेण शान्तिवारि च ।। ६२ ।।

शन्न इन्द्राग्न्यृचाघोरयुक्तं मङ्गलवारि च।
अश्वक्रान्तेत्यादिना च वामदेवेन मृज्जलम् ।। ६३ ।।

भस्मोदमुद्धृतेत्यादि मनुना सद्यसंयुतम्।
शुद्धोदैर्मूलमनुना तदा दिग्विदिगन्वयात् ।। ६४ ।।

अश्वक्रान्तेरथक्रान्ते विष्णुक्रान्ते वसुन्धरा।
भूमिर्धेनुर्धरणी लोकधारिणी। इति ।। ६५ ।।

उद्धृतासि वराहेण कृष्णेन शतबाहुना।
मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् । इति।। ६६ ।।



स्नानमेव सुधाकुम्भैस्संप्रोक्तं मध्यमाधमम्।

क्षेत्रे धान्यपुटेमध्ये साकद्रव्यविधानतः ।। ६७ ।।

एकोनार्धशतं कृत्वा द्विपङ्क्त्या वीथिकां बहिः।
तद्बाह्ये नवकैः कुर्यात् पञ्चकानि च षोडश ।। ६८ ।।

पूर्ववत् पूरयित्वान्तर्गलाद्यैर्दिग्विदिक्क्रमात्।
बहिर्मूलेन गन्धोदैरन्तराले च पूरयेत् ।। ६९ ।।

धरापकुम्भैः स्नपनं प्रोक्तं मध्यममध्यमम्।
क्षेत्रेऽस्मिन्नेव मध्येऽन्तरेकाशीति प्रकल्पयेत् ।। ७० ।।

तद्बहिर्वीथिकाबाह्ये नवकानि च षोडश।
घृताम्भस्सप्तदशभिः गुलाद्यैरष्टभिस्तथा ।। ७१ ।।

गन्धौदैश्च समापूर्य पूर्ववच्चाभिपूज्य च।
पाद्यादियवनिष्ठैश्च गुलाद्यैर्दिग्विदिक्क्रमात् ।। ७२ ।।

इन्द्राग्न्योरन्तरारभ्य गन्धोदैस्नपयेद्विभुम्।
मुरारिकुम्भैः स्नपनं संप्रोक्तं मध्यमोत्तमम् ।। ७३ ।।

क्षेत्रे गिरिपुटे मध्ये तत्त्वद्रविणयुक्तितः।
शतमष्टोत्तरं कृत्वा बहिर्दिग्विदिगन्तरा ।। ७४ ।।

पञ्चकानि समापाद्य नवकैः कोणलोपतः।
दिक् पञ्चकोभयपार्श्वे त्रिकाणि परिकल्पयेत् ।। ७५ ।।

ब्राह्मदेव नृभागेषु मध्येऽत्राष्टोत्तरेशते।
पूरयित्वार्घ्यपाद्याद्यैस्तु पूर्ववत् तत्रिकेष्वथ ।। ७६ ।।



इन्द्राग्न्योर्मध्यमारभ्य शर्वशक्रान्तरावधि।

बलां वाचामतिबलां शङ्खपुष्पिं च सत्कृतम् ।। ७७ ।।

सिंहीं व्याघ्रीं कुशां पञ्च ब्रह्माङ्गैः पूरयेत् क्रमात्।
प्रणवेन च तद्बाह्ये गुलाद्यैः दिग्विदिक्रमात् ।। ७८ ।।

तत्रत्येषु त्रिकेष्वाद्भिः सत्याद्यष्टाक्षरेण च।
नद्याब्धिवापीकूपोत्थं वर्षजं हिमसम्भवम् ।। ७९ ।।

तीर्थनिर्झरसंभूतं जलानामष्टकं स्मृतम्।
बीजाद्यैरन्तरालस्थपञ्चकान्मूलमन्त्रतः ।। ८० ।।

बीजैर्हेम्ना तिलोदैश्च दूर्वाद्भिश्शालिवारिभिः।
तण्डुलोदैर्न्निशातोयैः पुष्पतोयैश्च पूरयेत् ।। ८१ ।।

व्रीहीप्रियङ्गुनीवारश्यामाकयववेणुजम्।
समुद्गतिलगोधूमच्छुणं स्याद् दशबीजकम् ।। ८३ ।।

पद्मं सौगन्धिकं जातिर्बकुलं कुन्दमल्लिके।
प्रियुङ्गुचम्बको तद्वन्नद्यावर्त्तद्वयं तथा ।। ८४ ।।

सिञ्चेच्च सप्तदशभिः पूर्ववत्तु तदन्यकैः।
पूरणक्रमतस्सिञ्चेन्मनुभिः पूरणोदितैः ।। ८५ ।।

एवं लोकेन्द्रकुम्भैस्तु स्नपनं तूत्तमाधमम्।
क्षेत्रेऽस्मिन् पञ्चकान्येव नवकानि प्रकल्पयेत् ।। ८६ ।।

अयमेव विशेषोऽत्र सर्वमन्यत्तु पूर्ववत्।
संसारकुम्भैः स्नपयेदेवमुत्तममध्यमम् ।। ८७ ।।

क्षेत्रे तत्वपुटे मध्ये कृत्वाथाष्टोत्तरं शतम्।

दिक्षु द्वादशकं बाह्ये कोणे षोडशकं तथा ।। ८८ ।।

अन्तराले द्वादशकं चतुष्कं च प्रकल्पयेत्।
कोणपार्श्वद्वादशकं दिक्पार्श्वे च चतुष्टयम् ।। ८९ ।।

घृताद्यैर्न्नवभिर्द्रव्यैः पाद्याद्यैरष्टभिस्तथा।
त्रिकाष्टके बलाद्यैश्च ततो बाह्यावृतो क्रमात् ।। ९० ।।

गुलाद्यैर्दिग्विदिक्ष्वष्टचतुष्केषु जलाष्टकम्।
शिष्टद्वादशाकान्यष्टौ बीजाद्यैः पूरयेत् क्रमात् ।। ९१ ।।

एवं सम्पूर्य सम्पूज्य स्नपयेत् तं शिवाच्युतम्।
पाद्याद्यैर्न्नवभिः पूर्वं पश्चादुष्णोदकादिभिः ।। ९२ ।।

ततो बलाद्यैः पश्चात्तु गुलाद्यैरष्टभिस्ततः।
नद्याद्भिः बीजपूर्वैस्तत्तत्परिघटैस्सह ।। ९३ ।।

धवाङ्गकुम्भैः स्नपनमुत्तमोत्तममीरितम् ।।

।। इति कलशचन्द्रिकायां शङ्करनारायणभागे
द्वितीयपटलः समाप्तः ।।

# कलशचन्दिकायां शङ्करनारायणभागः
# तृतीयः पटलः

उक्तेषु कलशक्षेत्रेष्विष्टं सम्पाद्य यत्नतः।
स्नात्वा विधिवदाचम्य ततः पूजां समारभेत् ।। १ ।।

गुरुविघ्नार्चनं कृत्वा पीठं तदधिदेवताः।
सम्पूज्य पद्ममुद्रां च सम्बध्य घटमस्त्रतः ।। २ ।।

तोयैरासिच्य सूत्रेण कवचेनाकलय्य च।
गन्धेनालिप्य मूलेन धूपयित्वार्चितासने ।। ३ ।।

मूलेनाधोमुखं न्यस्त्वा संस्कुर्यात् शोषणादिभिः।
दर्भन्यासं सुगन्धाम्भः प्रोक्षणां चाक्षतार्पणम् ।। ४ ।।

पञ्चतत्वैस्त्रिभिः कृत्वा मूलेनाभ्यर्च्य तं घटम्।
उत्तानीकृत्य तुर्येण मूलनिष्ठान्त्यतत्त्वतः ।। ५ ।।

पीठे विन्यस्य तारेण प्रोक्षयेत्तत्घटोदरम्।
अथाम्बुजध्यानपूर्वं लिपिपद्मार्चनावधि ।। ६ ।।

कर्म कृत्वा यथान्यायं मूर्त्तिमावाहयेत्ततः।
मूलमुक्त्वा शङ्करेति नारायणपदान्वितम् ।। ७ ।।

मूर्त्तये नम इति च ब्रूयादेवं मनुः स्मृतः।
तत्रावाह्य कलाः सम्यक् शिवचोदितवर्त्मना ।। ८ ।।

पञ्चविंशतितत्वानि सम्यगावहयेत्ततः।
ततो व्यष्टिसमष्टिश्च सम्यगावाहयेत् सुधीः ।। ९ ।।

नीत्वा परस्वरूपं तच्चिद्रूपं भावयेत्ततः।
पुनरावाह्य मूलेन विन्यस्याथ षडध्वनः ।। १० ।।

साङ्गावरणमभ्यर्च्य निवेद्याभ्यर्च्य तोषयेत्।
कुम्भेशस्य समीपेऽथ दक्षिणेऽष्टदलाङ्कुरे ।। ११ ।।

शाल्याद्यास्तृतपीठेऽत्र पीठपूजापुरस्सरम्।
कुम्भद्रोणवहन्यस्य क्षालनादिविशोधितम् ।। १२ ।।

प्रोक्तेषु कलशेष्वत्र यद्यद्द्रव्यगणं स्मृतम्।
तत्सर्वं द्रव्यविन्यासं मन्त्रमूलं च सञ्जपन् ।। १३ ।।

द्रोणकुम्भे प्रविन्यस्य गन्धतोयैः प्रपूर्य च।
प्रधानकलशेज्यावत् सर्वमस्मिन् समाचरेत् ।। १४ ।।

सहस्रसंख्यं पूजान्ते मूलमन्त्रं च सञ्जपेत्।
ततः कलशसेकान्ते कुम्भेशेन समन्वितम् ।। १५ ।।

कर्करीसहितं द्रोणकुम्भमन्तः प्रवेश्य च।
कुम्भेशेनाभिषिच्याथ त्रितत्वमनुना विभुम् ।। १६ ।।

यज्ञाय यज्ञेत्यृचा तद्वद्दृग्भिः पौरुषचोदितैः।
श्रीरुद्रं चाखिलं तद्वद् व्योमव्यापि मनुं जपन् ।। १७ ।।

संस्नाप्य न्यासजातैस्तं सकलीकृत्य पूजयेत्।
प्रतिखण्डमथापूर्य सम्पूज्य च यथाविधि ।। १८ ।।

अधिवासनिकान् होमानारभेत समूर्त्तिपः।
मूलेनाग्निमुपस्थाय मध्यकुण्डे स्वयं गुरुः ।। १९ ।।

प्रागादिकुण्डेष्वनलं स्वस्वहोमाणुभिर्न्नयेत्।
यद्वोपस्थाय तारेण तेनैव विहरेद्वसुम् ।। २० ।।

गायत्र्या पक्वहोम स्यात् समिदादि चतुष्टयम्।
वेदाद्यैर्जुहुयुर्दिक्षु व्याहृतीभिस्तिलादिकम् ।। २१ ।।

घृतमूलेन मध्ये तु सर्वं मूलेन होमयेत्।
पलाशसमिदाज्यान्नघृतानि तिलसर्षपान् ।। २२ ।।

यवलाजौ घृतमिति द्रव्याणां नवकं स्मृतम्।
ततः स्विष्टकृदादीनि हुत्वा शेषं समाप्य च ।। २३ ।।

प्रतिखण्डं च सम्पातं द्रोणकुम्भे च योजयेत्।
उपविश्य बहिः क्षेत्रान् पीठपूजापुरस्सरम् ।। २४ ।।

आवाह्य सकलीकृत्य समभ्यर्च्य निवेद्य च।
बलिं मण्डपबाह्येऽष्टदिक्षु मन्त्रेण दापयेत् ।। २५ ।।

देवं शङ्करनारायणं पुरस्कृत्य इमं बलिम्।
प्रतिगृह्णन्तु सर्वभूतानि पैशाचान्तं यजामहे । इति बलिमन्त्रः ।।

पूजाशेषं समाप्याथ शिष्टसम्पातवारिभिः।
शुद्धेत्यादिमनुभ्यां तु प्रोक्ष्य सर्वघटांस्ततः ।। २७ ।।

शास्त्रोदितेन संप्रार्थ्य रक्षां कृत्वान्तरेत्य च।
देवाग्रस्थोधिवासादिमनुना प्रार्थ्य तं प्रभुम् ।। २८ ।।

ततो मण्डपमासाद्य रात्रिशेषन्नयेद्गुरुः।
एकोत्तरसहस्रैस्तु कुंभैस्नानमिहोच्यते ।। २९ ।।

नवत्रिंशत्पुटे क्षेत्रे बहिसर्वपुटैः क्रमात्।
संश्लिष्ट्यैकोनपञ्चाशत् पदानि परिकल्पयेत् ।। ३० ।।

दिग्विदिक्ष्वन्तरालेषु तदन्तर्वीथिमर्पयेत्।
अन्तः पञ्चपुटैस्सप्तदशकान्दिग्विदिक्ष्वपि ।। ३१ ।।

अन्तरालपदान्यष्टौ मार्जयित्वा प्रकल्पयेत्।
तन्मध्ये पूर्ववत् कुर्यादेकाशीति पदं बुधः ।। ३२ ।।

तत्र मध्ये कृताद्यैश्च पाद्याद्यैर्यवपश्चिमैः।
संपूर्य सप्तदशकान् पूरयेद्वक्ष्यमाणतः ।। ३३ ।।

तैलं च चन्दनं क्षौद्रं कुङ्कुमोशीरकर्दमम्।
दिक्षु तत्पुरुषाघोरसद्यवामैस्तु पूरयेत् ।। ३४ ।।

कर्पूरं रोगपिष्टश्च वासुदेवादिभिः क्रमात्।
सिद्धार्थतैलं कर्पूरतैलं कोणेषु पूरयेत् ।। ३५ ।।

बाह्ये षोडशखण्डेषु दिग्विदिक्ष्वन्तराक्रमात्।
गुलाद्यैर्ज्जितताराभ्यां मध्य कुंभान् प्रपूरयेत् ।। ३६ ।।

गुलेक्षु नालिकेरांभः शान्तिमंगलवारिणी।
तीर्थतोयं नदीतोयं यवोदं हिमवारि च ।। ३७ ।।

तिलोदतण्डुलोदं च कुशोदं निर्झरोदकम्।
सामुद्रं पुष्पतोयं च सुगन्धामलकोदकम् ।। ३८ ।।

शिष्टाश्शुद्धोदकैस्सर्वान् पूरयेन्मूलमन्त्रतः ।
एकोनार्धशतोपेतखण्डेषु बहिरावृतौ ।। ३९ ।।

दिक् पार्श्वगान् पूरयित्वा कोणपार्श्वगतानपि।
पूर्वन्यायादेकाशीतिघटानामुद्धृतिर्भवेत् ।। ४० ।।

तदन्यांस्तु घटान् सर्वानुद्धरेत् पूरणक्रमात्।
गायत्र्यातूद्धरेत् सर्वान् स्नपयेद् द्रव्यकुम्भकैः ।। ४१ ।।

इदं विष्णवाद्यृचाथान्यान्मूलमन्त्रेण सेचयेत्।
आधिवासनिकान् होमान् कुर्यादत्र नव क्रमात् ।। ४२ ।।

पलाशखदिराश्वत्थन्यग्रोधा दिक्षु कीर्त्तिताः।
विदिक्षु विल्वौदुम्बरप्लक्षा वैकङ्कता अपि ।। ४३ ।।

पुरुषाद्यैर्दिक्षुकोणेषु वासुदेवादिभिर्हुनेत्।
समिदादिनवद्रव्यं हुत्वा शान्तिं च होमयेत् ।। ४४ ।।

मधुना पयसा दध्ना घृतेन च यथाक्रमम्।
तिलासुरीलाजगालितण्डुलैस्तेषु वह्निषु ।। ४५ ।।

एवं सहस्रकलशमेकोत्तरमुदीरितम्।
अथ प्रभातकृत्यान्ते कलशानभिपूज्य च ।। ४६ ।।

देवेशं प्रोक्तमार्गेण समुद्धृत्याभिषिच्य च।
सम्पूज्य विधिवद्देवं रात्रौ भूतबलिं हरेत् ।। ४७ ।।

अन्तरा स्नपयेद् देवं मूलमन्त्रेण देशिकः।
शुद्धेत्यादिषु मन्त्रेषु नामद्वयमुदीरयेत् ।। ४८ ।।

दिशा होमविधिः शैवभागे सम्यक् प्रदर्शितः।
शिवनारायणस्यैवं स्नपनक्रम ईरितः ।। ४९ ।।

।।। इति कलशचन्द्रिकायां शङ्करनारायणभागे
तृतीयपटलः समाप्तः ।।

# कलशचन्दिकायां शङ्करनारायणभागः
# चतुर्थः पटलः

अथ पूजां प्रवक्ष्यामि देहशुद्ध्यादिपूर्वकम्।
गुरून् विघ्नं च सम्बध्याथास्त्रेण करशोधनम् ।। १ ।।

तालत्रयादिकं कृत्वा शैवभागोदितक्रमात्।
नाडीशोधनमारभ्य क्रियाशक्त्युदयावधि ।। २ ।।

कर्म कृत्वा पञ्चतत्त्वैः प्राणायामं विधाय च।
उत्पाद्य पञ्चभूतानि जीवमब्दोषितं स्मरेत् ।। ३ ।।

अण्डं भित्वासुमायम्य लिप्या तन्यासमाचरेत्।
मूलेनासुं त्रिरायम्य पीठन्यासं विधाय च ।। ४ ।।

मन्त्रोदयं ततः कृत्वाथोपहारैस्समर्च्य च।
मूलेन व्याप्य करयोः तले पृष्ठे च पार्श्वतः ।। ५ ।।

अङ्गुष्ठादि तलान्तं च षडङ्गानि प्रविन्यसेत्।
त्रिशो व्याप्याथ मूलेन लिपितत्वानि विन्यसेत् ।। ६ ।।

षडध्वनो न्यसेद् यद्वा गुरुलाघवयोग्यतः।
शैवोक्तवत् कलान्यासः तत्वानां पञ्चविंशतिः ।। ७ ।।

वैष्णवोदितवन्न्यस्येत् कथयामीति तत्त्वकान्।
तारं बीजद्वयं चोक्त्वाथेशानं ङे समन्वितम् ।। ८ ।।

परमेष्ट्यात्मने नम इति प्राथमिको मनुः।
एवमन्ये समुद्धार्याश्चत्वारो मनवः क्रमात् ।। ९ ।।

त्रयोदशैकादशाभ्यां पञ्चमेन स्वरेण च।
तृतीयेनाद्येन युक्तं बीजानां पञ्चकं वियत् ।। १० ।।

शान्तं तारान्वितं तद्वन्मरुद् बिन्दुसमन्वितम्।
पाशान्वितोऽग्निदम्भस्तु विसर्गेण समन्वितम् ।। ११ ।।

पाशान्विता वह्निबीजपञ्चकद्वितयं स्मृतम्।
ईशानपुरुषाघोरवामसद्याश्च पञ्च ते ।। १२ ।।

परमेष्ठी पुरुषविश्वो निवृत्तिस्सर्व इत्यपि।
आत्मनेन्तास्समुद्दिष्टास्तत्त्वानां पञ्चकं स्मृतम् ।। १३ ।।

गोपनीया इमे मन्त्रा इति गुह्याणवः स्मृताः।
चतुर्दशातलादीनि भुवनाध्वानि विन्यसेत् ।। १४ ।।

तारांश बीजसंयुक्त भूरादि त्रितयन्तु वा।
वर्णाध्वा मूलसंरुद्ध लिप्यर्णैर्न्यास ईरितः ।। १५ ।।

मूर्धेक्षणास्यहृन्नाभिगुह्यजानुपदद्वये।
जिनार्णस्य पदान्यष्टविन्यसेच्च पदाध्वनि ।। १६ ।।

विन्यसेत् पौरुषं सूक्तं पञ्चब्रह्माणि तत्कलाः।
मन्त्राध्वायं समुद्दिष्टष्षडध्वान इतीरिताः ।। १७ ।।

तदृग्वदन हृन्नाभि गुह्यजानुपदेषु च।
तारादिनतिनिष्ठांश्चमन्त्रार्णानष्टविन्यसेत् ।। १८ ।।

द्वितीयेन चतुर्थेन षष्ठेन च दशेन च।
चतुर्द्दशेन स्वरेण षोडशेन युतेन च ।। १९ ।।

नादेनाङ्गानि षट्कुर्यादस्त्रं नेत्रत्रयोपरि।
ऋष्याद्या ब्रह्मजगती शिवनारायणा स्मृताः ।। २० ।।

तारं बीजं शिवार्णान्ते नारायणपदं वदेत्।
ङे नत्यन्तो मनुवरः प्रोक्तस्त्वेकादशाक्षरः ।। २१ ।।

अष्टमस्वरसंयुक्तं वियद्बीजमुदीरितम्।
ध्यात्वा देवं हृदम्भोजे यथाशक्ति मनुं जपेत् ।। २२ ।।

शङ्करायेति सङ्कीर्त्य विद्महे पदमुच्चरेत्।
नारायणाय धीमहि तन्नः पुरुष इत्यपि।
प्रचोदयादित्यन्तैषा गायत्री समुदीरिता ।। २३

तत्पुरुषाय विद्महे जनार्दनाय धीमहि।
तन्नो विष्णुः प्रचोदयात् गायत्र्यैवं च कीर्त्तिता ।। २४

आपुर्यशङ्खं विधिवदात्मपूजां विधाय च।
तादात्म्यभवनायुक्तस्ततः पूजां समारभेत् ।। २५

गुर्वादिपद्मपर्यन्तं सामान्यविधिना यजेत्।
मण्डलात्मत्रयस्तद्वन्नवशक्तीस्ततो यजेत् ।। २६ ।।

विमलाद्या वैष्णवोक्ता स्समष्टिरपि वैष्णवी।
मूलेन मूर्त्तिं संकल्प्य त्रितारजितमूलकैः ।। २७ ।।

देवमावाह्य विन्यस्य लिपितत्त्वाक्षराङ्गकान्।

ततो विचिन्तयेद् देवं सूर्यकोटिसमप्रभम् ।। २८ ।।

जटामकुटशोभितं भुजगहारसम्भूषितम्।
सितासितरुचिं तरक्ष्वजिनपीतवासोवसम् ।। २९ ।।

कराहितकपालशूलदरचक्रकं त्रीक्षणम्।
गिरिन्द्रभृगुकन्यकाललितपार्श्वमाद्यं भजे ।। ३० ।।

पाद्याद्युपहृतीर्दत्वा शम्भुपक्षं समर्चयेत्।
तारोपचारमूलार्णैरिषुतत्वाङ्गहेतिभिः ।। ३१ ।।

तारोपचारमूलैस्तु देवबिम्बे समर्च्य च।
हृदादिवर्मपर्यन्तानग्नीशासृक्पवायुषु ।। ३२ ।।

नेत्रत्रयं च पुरतः चतुर्दिक्ष्वस्त्रमर्चयेत्।
दिक्षु तत्पुरुषाघोर सव्यवामान् विदिक्ष्वथ ।। ३३ ।।

वासुदेवं सङ्कर्षणं प्रद्युम्नं चानिरुद्धकम्।
आदिस्वरौ बिन्दुयुतौ तथा बिन्दुविसर्गकौ ।। ३४ ।।

मूर्त्तीनां चतुष्केऽत्र बीजानि कथितानि तु।
इन्द्रवज्रादिकानिष्ट्वा पुरतो वाहनं यजेत् ।। ३५ ।।

वृषाय गरुडात्मने नम इत्यणुरीरितः।
चण्डसेनं यजेदीशे ततः पुष्पावृतिं चरेत् ।। ३६ ।।

धूपदीपौ समर्प्याथ पायसान्नं निवेद्य च।
हुत्वाग्नौ बलिमाहृत्य पूजाशेषं समापयेत् ।। ३७ ।।



अत्र सामान्यमन्त्रेषु उक्तं पदमुदीरयेत्।

उत्सवं च ततः कुर्याद् ध्वजस्थापनपूर्वकम् ।। ३८ ।।

वाहनं कारयित्वादौ वृषतार्क्ष्यविमिश्रितम्।
नान्दीमुखादिकं कृत्वा ततस्संस्कृत्य वाहनम् ।। ३९ ।।

देवाग्रतस्समावाह्य तस्मिन् तन्मन्त्रतस्सुधीः।
ध्वजस्थानं समासाद्य पीठपूजा पुरस्सरम् ।। ४० ।।

वाहं दण्डेऽथ संस्थाप्य स्थापयित्वा ध्वजं ततः।
आवाह्येष्ट्वा निवेद्यास्मै तन्मन्त्रेण बलिं ददेत् ।। ४१ ।।

वृषाय गरुडात्मने नमस्तारादिको मनुः।
ततोदेवं समभ्यर्च्य रात्रौ भूतबलिं हरेत् ।। ४२ ।।

गर्भद्वारे नन्दिचण्डौ मण्डपे वाहनं यजेत्।
पृष्ठेऽनन्तं च गणपं दक्षिणेशं च दक्षिणे ।। ४३ ।।

जयत्सेनं विष्वक्सेनं प्रासादद्वार पार्श्वयोः।
दिक्पान्मातॄंश्च शास्तारमार्यां स्कन्दं धनेश्वरम् ।। ४४ ।।

चण्डसेनं च सम्पूज्य सभान्तर्द्वारपार्श्वयोः।
उमां श्रियं च सम्पूज्य बहिर्द्वारस्य पार्श्वयोः ।। ४५ ।।

शूलं चक्रं च सम्पूज्य ये समस्तादिना ततः।
उपस्थाय बहिस्सर्वान् नन्द्यादीनां बलिं हरेत् ।। ४६ ।।

नन्दी चैव महाकालो भूतनाथो महीधरः।
कुमुदः कुमुदाक्षश्च पुण्डरीकोऽथ वामनः ।। ४७ ।।



विंशाद्गणाश्च पञ्चाशद्गणाश्चाष्टासु दिक्ष्वथ।

देवग्रहादयः पूज्यास्तृतीयावरणे पुनः ।। ४८ ।।

मूलेन दिग्बलिः कार्यः पार्षदेभ्यस्तदा तदा।
बलिपीठं समासाद्य दिक्ष्वष्टासु यजेत् पुनः ।। ४९ ।।

भूतिदादींश्च चतुरः चतुरः कुमुदादिकान्।
भूतिदादीनष्ट यद्वा कुमुदादीन् द्विशो द्विशः ।। ५० ।।

अधः पिङ्गलमूर्ध्वे च हरिं हरिसेनं समर्चयेत्।
आयान्तु पार्षदा सर्वे शाङ्करा वैष्णवाश्च ये ।। ५१ ।।

बलिपीठेऽत्र सन्तुष्टा निवसन्तु यथासुखम्।
नमः सर्वपार्षदेभ्यो नमः।
बलिमेवं महापीठे दत्वा क्षेत्रपमर्चयेत्।
ततोऽन्तरेत्य देवेशं मूलबिम्बे नियोजयेत् ।। ५२ ।।

द्वितीयदिनमारभ्य सायं प्रातर्बलिं हरेत्।
औत्सवं वा प्रकुर्वीत यथाविभवविस्तरम् ।। ५३ ।।

अथ स्नानदिनात्पूर्वं शयनं परिकल्प्य च।
तस्मिन् देवं शाययित्वा कृत्वा प्राभातिकीं क्रियाम् ।। ५४ ।।

मूलबिंम्बे नियोज्याथ यात्राहोमं विधाय च।
चूर्णैरुन्मृज्य देवेशं कौतुके तन्नियोज्य च ।। ५५ ।।

यथादृष्टं बलिं दत्वा नयेद् देवं जलाशयम्।
जलसंस्कारपूर्वं तं स्नापयित्वाथ तज्जले ।। ५६ ।।

अब्लिङ्गैः प्रोक्ष्यचोन्मृज्य चूर्णैस्संस्नाप्य तं पुनः।

इष्ट्वा निवेद्य सम्प्रार्थ्य तीर्थेऽस्मिन्नादिना विभुम् ।। ५७ ।।

वाहमारोप्य यत्नेन गृहं द्रुततरं नयेत्।
ततः प्रदक्षिणीकृत्य देवमन्तः प्रवेश्य च ।। ५८ ।।

मूलबिम्बे नियोज्यैनं अभिषिच्य प्रपूजयेत्।
अभिषिच्याथ कलशैः श्वोभूते तद्दिनेऽपि वा ।। ५९ ।।

सम्पूज्य विधिवद्देवं भूतेभ्यो बलिमाहरेत्।
शिवनारायणस्यैवं कलशप्रक्रियाक्रमः ।। ६० ।।

तन्त्रागमान् समुद्विक्ष्य समासादेवमीरितः ।।

।। इति कलशचन्द्रिकायां शङ्करनारायणभागे
चतुर्थपटलः समाप्तः ।।

।। शङ्करनारायणभागः समाप्तः ।।

# ।। कलशचन्द्रिकायां दुर्गाभागः ।।

## ।। प्रथमः पटलः ।।

।। श्रीगणपतये नमः ।।

दुर्गां देवीं नमस्कुर्मो दुर्गतेः परिमोचनीम्।
भर्गस्य प्राणदयितां सर्गस्थित्यन्तकारणीम् ।। १ ।।

अत वक्ष्यामि दुर्गाया स्नपनप्रक्रियाक्रमम्।
बीजवापादिसंयुक्तं तीर्थस्नानावसानिकम् ।। २ ।।

यो विधिर्वैष्णवे प्रोक्तो बीजवापादिकर्मणि।
ग्राह्यस्सामान्यतस्सोऽत्र विशेषस्त्वभिधीयते ।। ३ ।।

अस्त्रेण क्षालनं तोयैः पयसा मूलमन्त्रतः।
वापस्तेनैवबीजानां सेचनं तूपचारतः ।। ४ ।।

ताररुद्धश्शक्तिबीज उपचारमनुः स्मृतः।
वैष्णवोक्तानि बीजानि बलिद्रव्यं च देवताः ।। ५ ।।

मुष्ट्यादीनां जपेन्मन्त्रा वह्निवाय्वम्बुबीजकाः।
पञ्चतत्त्वानि गव्येस्युरस्त्रं चक्रमनुः स्मृतः ।। ६ ।।

प्रासादस्यार्चनं कुर्यात् मूलमन्त्रेण देशिकः।
चोरवानरकर्पूरकुङ्कमागरु चन्दनैः ।। ७ ।।

जटागोरोचनाभ्यां तु युक्तं गन्धाष्टकं स्मृतम्।
वास्तुहोमे चतुर्द्रव्यं जातवेदादिना हुनेत् ।। ८ ।।

शन्नोदेव्या हुनेद्दूर्वाः पूर्णां मूलेन दापयेत्।
चतुश्शुद्धिं ततः कृत्वा धारां कुर्याज्जपन् मनून् ।। ९ ।।

तत्वानि पञ्चदुर्गाश्च सूक्तान् वैष्णवचोदितान्।
गाहयेत् पञ्चगव्यैश्च सिञ्चेत् गव्यघटेन वा ।। १० ।।

पञ्चकुम्भैश्च संस्नाप्य स्वतत्त्वावाहितार्चितैः।
ततो होमं प्रकुर्वीत प्रायश्चित्तात्मकं सुधीः ।। ११ ।।

द्वावत्र चतुरो यद्वा कुर्याद्धोमांश्च शक्तितः।
त्रिकोणमुत्तरे द्वौ चेदर्धचन्द्रं च दक्षिणे ।। १२ ।।

तुर्यश्चवृत्ते प्राक् प्रत्यक् कुण्डे कुर्याच्चतुष्टये।
उत्तरे दक्षिणे चाग्निं जनयेद्वितये पृथक् ।। १३ ।।

सौम्येन्द्रादिक्रमेणैव चतुर्ष्वपि चतुर्हुते।
गर्भाधानादिकर्माणि चौलान्तान्यत्र सप्तभिः ।। १४ ।।

मूलाक्षरैस्तेन पूर्णां वौषडन्तेन दापयेत्।
जननानन्तरं वह्नेस्समारभ्य हुतक्रियाम् ।। १५ ।।

दक्षिणेऽभ्यर्च्य कलशं मन्त्रैः स्वज्याप्रचोदितैः।
अग्नौ च देवीं सम्पूज्य पक्वं च त्रिष्टुभाहुनेत् ।। १६ ।।

दुर्गाभिराज्यं जुहुयात् अष्टोत्तरशतं पृथक्।
ततश्च पञ्चदुर्गाभिर्मूलेन पृतनादिभिः ।। १७ ।।

विलोमात्तिसृभिर्द्रव्याण्येतानि नवहोमयेत्।
खादिरं ब्राह्ममाश्वत्थं प्लक्षन्यग्रोधसम्भवम् ।। १८ ।।

अपामार्गं च वैल्वं च औदुम्बरकृताञ्जलिः।
तिलसर्षपनीवारन्मूलेनाष्टशतं हुनेत् ।। १९ ।।

दधिक्षौरघृतैरष्टशतं मृत्युजिता तथा।
ततः स्विष्टकृदादीनि हुत्वा शेषं समाप्य च ।। २० ।।

क्रमेण कलशैर्देवीं संस्नाप्याथ प्रपूजयेत्।
प्रायश्चित्तहुतं यच्च वैष्णवे समुदीरितम् ।। २१ ।।

दोषे महति तत्कुर्यात् विशेषस्वभिधीयते।
अत्रोक्तवह्निजननं स्वेष्टतत्वैर्घृताहुतिः ।। २२ ।।

मूलेन द्रव्यहोमश्च हुनेत् पूर्णां च मूलतः।
ईशे तुर्यश्रकुण्डेऽग्निं जनयित्वाथ पूर्ववत् ।। २३ ।।

पूजामन्त्राज्यहोमान्तं कर्म कृत्वा यथाविधि।
यागाणुनाज्यं जुहुयादष्टोत्तरसहस्रकम् ।। २४ ।।

हुनेत् स्विष्टकृदाद्यं च शान्तिहोमोऽयमीरितः।
तारं दुर्गापदं चोक्त्वा रूपिणीति पदं वदेत् ।। २५ ।।

कुमारी रूपिणिपदं प्रोक्त्वार्यावर्त्तिनीति च।
मायारूपिणिशब्दान्ते वदेदुत्सववासिनी ।। २६ ।।

यागभक्तकारिणीति सप्तमन्त्रेति चोद्धरेत्।
व्यापिनीतिपदं पश्चात् सर्वान्तफलदायिनि ।। २७ ।।

सर्वाक्रियास्सर्वदोषस्सर्वशब्दोपरिक्रमात्।
वर्धिनीति मर्दिनीति दायिनीति पदान् वदेत् ।। २८ ।।

ततो भगवतीत्युक्त्वा प्रासादान्ते समुद्धरेत्।
आपादयत्वग्निजायां यागमन्त्रोऽयमीरितः ।। २९ ।।

श्वस्पर्शनादि विहितान्निमित्ते शान्तिमाचरेत्।
अथाग्रे जनयित्वाग्निं तत्त्वहोमं विधाय च ।। ३० ।।

कुर्यान्मण्डपसंस्कारं मूर्तिपैस्सहितो गुरुः।
अश्वत्थवटौदुम्बरप्लक्षास्स्युस्तोरणद्रुमाः ।। ३१ ।।

चतुर्वेदादिमनुभिः स्नापयेच्च चतुर्दिशम्।
यज्ञेशं पूजयेत् पूर्वे दक्षिणे च प्रभाकरम् ।। ३२ ।।

पश्चिमे मङ्गलं सौम्ये सुप्रभं च समर्चयेत्।
द्वाः पार्श्वयो र्ध्वजौ द्वौ स्थापयेदष्टदिक्षु वा ।। ३३ ।।

अष्टवर्गाद्यर्ण बीजयुक्तैः काल्यादिनामभिः।
कालीकराली विरजा मन्दरा विन्ध्यवासिनी ।। ३४ ।।

सुप्रभा सिंहवक्त्रा च सम्प्रोक्ता दैत्यमर्दिनी।
प्राग्द्वारदक्षपार्श्वादिदिक्ष्वष्टास्वन्तरर्चयेत् ।। ३५ ।।

इन्द्रादिलोकपान् द्वारकलशेष्वष्टसुक्रमात्।
अथ संशोध्यमष्टाद्यैर्विकिराघं विकीर्य च ।। ३६ ।।

सम्पूज्य शक्तिं कुम्भेशमभ्यर्च्योत्पाद्य पावकम्।
कुम्भेशं च परिभ्रम्य पदानि परिकल्पयेत् ।। ३७ ।।

।। इति कलशचन्द्रिकायां दुर्गाभागे प्रथमपटलः समाप्तः ।।

# कलशचन्द्रिकायां दुर्गाभागः
# द्वितीयः पटलः

पञ्चविंशतिपूर्वैस्तु तत्वद्रव्याभिपूरितैः।
सहस्रनिष्ठैः कलशैः देवीं स्नापयेत् क्रमात् ।। १ ।।

पञ्चविशति पूर्वेषु क्षेत्रेषु सकलेष्वपि।
वैष्णवोक्तेन मार्गेण पदानि परिकल्पयेत् ।। २ ।।

हेमरत्नौषधीगन्धजलैः ब्राह्मं प्रपूरयेत्।
ईशादिसोमपर्यन्तं सक्त्वाद्यैर्देविकावृतौ ।। ३ ।।

मानुषावरणे पाद्यपूर्वैर्दिग्विदिगन्तरा।
सक्तुकं भस्मकं क्षौद्रं तैलमिक्षुरसं तथा ।। ४ ।।

आश्वत्थन्दौवरौप्ये च द्रव्याष्टकमितीरितम्।
पाद्यार्घ्यगव्यगौमूत्रान् गोमयं च पयोदधि ।। ५ ।।

सर्पिः कौशं कषायं च रत्नं काञ्चन धातुकम्।
गन्धं पुष्पं फलं चेति षोडशद्रव्यमीरितम् ।। ६ ।।

कुशा दूर्वा तथा सिंही व्याघ्री च शतमूलिका।
एतास्त्वौषधयः पञ्चसमूलाग्राः प्रकीर्त्तिताः ।। ७ ।।

प्लक्षौदुम्बराश्वत्थवटखादिरचर्मभिः।
सकरीषैश्च दग्धोत्थं भस्मोदं परिकीर्त्तितम् ।। ८ ।।

दूर्वाश्यामाकसिद्धार्थापाद्यद्रव्यमुदीरितम्।
गन्धपुष्पाक्षतांश्चैव कुशाग्रं च तिलं तथा ।। ९ ।।

क्षीरं सिद्धार्थकं तोयं अर्घ्यमष्टाङ्गमुच्यते।
क्षिरिद्रुखादिरत्वग्भिः कषायं समुदीरितम् ।। १० ।।

मणिमुक्ताप्रवालानि वज्रवैडूर्यनीलके।
ब्रह्मरागं महानीलं रत्नोदं परिकीर्त्तितम् ।। ११ ।।

मनश्शिला हरीतालमञ्जनं शायमसीसके।
सौराष्ट्री रोचना तद्वद् गौरिकं धातवः स्मृताः ।। १२ ।।

चोरवानरकर्पूरकुङ्कुमागरुचन्दनैः।
जटागोरोचनाभ्यां च गन्धोदकमुदीरितम् ।। १३ ।।

बकुलं नन्दिकावर्त्तं जातिमल्लिकसंज्ञिते।
चम्पकाशोकनागानां पुष्पसप्तकमीरितम् ।। १४ ।।

नारङ्गं नालिकेरं च कादलं बीजपूरकम्।
बदरं जातिसंज्ञं च फलषट्कमुदीरितम् ।। १५ ।।

मूलेन द्रव्यविन्यासः सर्वत्र परिकीर्त्तितः।
स्नानक्रमं च तन्मन्त्रान् क्रमेणाथ वदाम्यहम् ।। १६ ।।

इदं विष्णुरिति पाद्यमर्घ्यमापोहि पूर्वकैः।
गोमूत्रे गोमूत्रे तत्सदादिकः ।। १७ ।।

गोमये गन्धद्वारेति पयस्यायसपूर्वकः।
दधिक्राविणो अकारिषमित्यादिर्दधिसेचने ।। १८ ।।

इषेत्वेति घृतस्नानं सावित्र्या च कुशोदकम्।
अश्वत्थेऽपः कषायोदे रत्नोदे त्र्यम्बकादिकः ।। १९ ।।

हिरण्यगर्भो हेमोदेर्मानस्तोकेति धातुके।
शन्नो गन्धे पुष्पावती पुष्पे सैव फलोदके ।। २० ।।

सुमित्रान्नस्तथा सक्तौ भूतिश्री भस्मवारिणि।
मधुवातादिकाः क्षौद्रे तैलविश्वानिनस्तथा ।। २१ ।।

अग्ने त्वं च गुलेऽश्वत्थे अश्वत्थे वेति पूर्विका।
शन्नो देवीस्तथा दौर्वे रौप्ये चाग्ने त्वमादिकः ।। २२ ।।

ब्राह्मे चित्तिस्रुगाद्योऽणुर्दशहोताः प्रकीर्त्तितः।
एकैकं त्रिष्टुभोर्वर्णमेषामादौ प्रयोजयेत् ।। २३ ।।

शिष्टाक्षराश्चित्तिपूर्वमन्त्रस्यादौ च योजयेत्।
दिग्विदिङ्मध्यक्रमतो बहिरुद्धरणं स्मृतम् ।। २४ ।।

ईशादिसोमपर्यन्तमुद्धरेद् दैविकावृतौ।
भूतिश्रीः पिङ्गलो बहूभूतिर्विष्णुस्सनातनः ।। २५ ।।

अग्निमारुतयोभूतिर्भूतिस्सेन्द्राश्च देवताः।
स्नपयेत् पञ्चदुर्गाभिः परिकुम्भैस्तदा तदा ।। २६ ।।

अन्तरा स्नानमुद्दिष्टब्रह्मजं ज्ञानमित्यृचा।
क्षेत्रं द्रव्यं पूर्त्युद्धृतीस्नानमन्त्रास्समीरिताः ।। २७ ।।

ब्रह्मकुम्भार्चने पीठे भुवनेशीं प्रपूजयेत्।
दर्भन्यासादिकं कुर्यात् पञ्चतत्वैः क्रमेणतु ।। २८ ।।

मूर्त्यावाहनकाले तु दुर्गामूर्त्तिं समाह्वयेत्।
समष्टिमन्त्रास्तारांशसंभूताश्शैव चोदिताः ।। २९ ।।

पञ्चविंशतितत्वानामाह्वानं वैष्णवोक्तवत्।
भेदो व्यष्टिसमष्टीनामाह्वानेऽत्र प्रदर्श्यते ।। ३० ।।

सम्प्रोक्त्वाथादिमं तत्वं पञ्चतत्वेषु तत्पुनः।
नमसा रहितं चोक्त्वा सें बीजं च समुद्धरेत् ।। ३१ ।।

दुर्गायै नम इत्युक्त्वा षष्ट्या दुर्गां ततो वदेत्।
प्राणापानादिकान् भूयो वह्निजायान्तमुच्चरन् ।। ३२ ।।

नमसा रहितं तत्वं सें दुर्गायै नमोन्वितम्।
दुर्गाया बीजमित्युक्त्वा वदेदावाहयामि च ।। ३३ ।।

सं सों ह्रीं हं स इत्यन्तमुक्त्वाथावाहनां चरेत्।
नमसा रहितं तत्वं सें दुर्गायै नमोन्वितम् ।। ३४ ।।

उद्धार्यानेन संव्याप्य हृदिस्थेति जपेद्धृदि।
एवमन्यानि तत्वानि चत्वार्यावाहयेत् बुधः ।। ३५ ।।

आर्यां देवीं भगवतीं कन्यां संयोजयेत् प्रथक्।
दुर्गास्थानेऽत्र बीजानि जं बें तं जामिति क्रमात् ।। ३६ ।।

नमसारहितैस्तत्वैरार्याद्यैर्न्नमसान्वितैः।
तत्तदावाहनेव्याप्य प्राणस्थापनमाचरेत् ।। ३७ ।।

एवं व्यष्टीस्समावाह्य समष्टिं पुनराह्वयेत्।
तत्त्वानि पञ्च सम्प्रोक्त्वा नमोन्तान्यथ तान्यपि ।। ३८ ।।

नमसा रहितान्युक्त्वा दुर्गापञ्चकमीरयेत्।
स्वबीजाद्यं चतुर्थ्यन्तं नमोन्तं च क्रमेण तु ।। ३९ ।।

समस्योक्त्वाथ दुर्गाद्यं षष्ट्यन्तं प्राणपूर्वकान्।
वह्निजायान्तमुद्धार्य तत्वानि नमसा विना ।। ४० ।।

प्रोक्त्वा स बीजं दुर्गाद्यं चतुर्थ्या नमसा पृथक्।
दुर्गार्याद्यं समस्योक्त्वा षष्ट्यन्तं जीवमुच्चरेत् ।। ४१ ।।

आवाहयामित्यन्तेऽथ सं सों ह्रीं हं स इत्यपि।
एवमुक्त्वा समावाह्य व्यापयेन्मनुनामुना ।। ४२ ।।

पञ्चतत्त्वानि सम्प्रोक्त्वा नमसा रहितान्यथ।
बीजपञ्चकमुच्चार्य दुर्गार्याद्यं समस्य च ।। ४३ ।।

आत्मने नम इत्यन्तमुद्धार्यो व्यापने मनुः।
हृदिस्था देवतेत्यादि हृदिस्पृष्ट्वा जपेत् ततः ।। ४४ ।।

एवं समावाह्य तत्र पररूपे चितिं नयेत्।
पल्लवाद्यै र्घटमुखमस्त्रेण परिभूष्य च ।। ४५ ।।

तारोपचारमूलैस्तां समावाह्याखिलेश्वरीम्।
षडध्वनोऽथ विन्यस्येन्मन्त्रार्णांगान्यपिक्रमात् ।। ४६ ।।

मुद्रां सन्दर्श्य चार्घ्याद्यमुपचर्य यथाविधि।
साङ्गावरणमभ्यर्च्य सनिवेद्यं प्रतोष्य च ।। ४७ ।।

सहस्रवारं सञ्जप्य मूलमन्त्रेण गोपयेत्।
एवं प्रधानमभ्यर्च्य कलशानितरान्यजेत् ।। ४८ ।।

एवं सम्पूर्य सम्पूज्य कुयाद् होमान्यपि क्रमात्।
चतुरश्रं धनुर्वक्त्रं वृत्तं पङ्कजसन्निभम् ।। ४९ ।।

दिक्षुकुण्डानि कृत्वैवं नागेऽन्यच्चतुरश्रकम्।
उपस्थाय पुरा वह्निमग्निंदूतमृचा गुरुः ।। ५० ।।

प्रागादिपरिकुण्डेषु विहरेच्च विभावसुम्।
ऐन्द्रेऽग्निमीले याम्ये त्वमग्ने पश्चिमे तथा ।। ५१ ।।

अग्न आयाहिह्यग्निमग्निमुत्तरे ऋच ईरिताः।
जुहुयुस्त्रिष्टुभा पक्वं दुर्गाभिः पञ्चभिस्ततः ।। ५२ ।।

सकृत् सकृत् घृतं हुत्वा द्रव्याण्येतानि होमयेत्।
पलाशसमिधोमध्ये त्रिष्टुभाष्टोत्तरं शतम् ।। ५३ ।।

पलाश्वत्थखदिरविल्वानां समिधः क्रमात्।
पूर्वादि दिक्षु वेदादिमन्त्रैरष्टशतं हुनेत् ।। ५४ ।।

आज्यं हविर्यवव्रीहितिलसिद्धार्थदूर्वकान्।
त्रिष्टुभा जुहुयुस्सर्वे शतमष्टोत्तरं पृथक् ।। ५५ ।।

ततः स्विष्टकृदादीनि हुत्वाशेषं समापयेत्।
ततः संस्पृश्य सम्पातं मङ्गलाण्यङ्कुराणि च ।। ५६ ।।

विन्यस्य वीथीस्सम्मार्ज्य कलशानधिवासयेत्।
श्रीवत्सं पूर्णकुम्भं च भेर्यादर्शकमत्स्यकाः ।। ५७ ।।

अङ्कुशं शङ्खमावर्त्तमष्टमङ्गलमीरितम्।
बलिकर्म च तन्मन्त्रा वैष्णवोदितवर्त्मना ।। ५८ ।।

शुद्धेत्यादौ विष्णुपदे दुर्गाया इति योजयेत्।
शास्त्रोदितादिके मन्त्रे प्रसन्ना परमेश्वरी ।। ५९ ।।

अधिवासः कृतेत्याद्ये क्रियतां परमेश्वरी।
कलशानथ संरक्ष्य जाग्रदेव निशां नयेत् ।। ६० ।।

अथ प्रभातकृत्यान्ते परिशुद्धकलेबरः।
पीठमभ्यर्च्य देवेशीमावाह्यर्घ्याद्युपाहृतीः ।। ६१ ।।

समर्प्य स्नानवेलायां पाद्याद्यैः कलशैः क्रमात्।
इदं विष्ण्वादिकैर्मन्त्रैः स्नपयेत् प्रोक्तवर्त्मना ।। ६२ ।।

संस्नाप्यैवं भगवतीं परिवारगणानथ।
अवस्रुतेन सम्प्रोक्ष्य सम्पूज्य परमेश्वरीम् ।। ६३ ।।

निवेद्य हुत्वा दत्त्वा च बलिं देवीं प्रसाद्य च।
तालत्रयाद्यैः संरक्ष्य नमस्कृत्य क्षमापयेत् ।। ६४ ।।

प्राणादिन्यसने बीजं स्वेषु तत्त्वोदितं स्मृतम् ।।

।। इति कलशचन्द्रिकायां दुर्गाभागे द्वितीयपटलः समाप्तः ।।

# कलशचन्द्रिकायां दुर्गाभागः
# तृतीयः पटलः

अथ वक्ष्यामि यजनमात्माराधन पूर्वकम्।
गुरून् संवन्द्य चक्रेण कृत्वा तालत्रयादिकम् ।। १ ।।

वैष्णवोक्तेन मार्गेण कृत्वा भूतलयादिकम्।
लिपिन्यस निष्ठं त्रिमूलेनायम्य मारुतम् ।। २ ।।

आधारार्थं प्रविन्यस्येद् देहे पीठमनूंस्ततः।
इष्ट्वा देवीं हृदम्भोजे कुर्याच्च करभावनाम् ।। ३ ।।

मूलेन करयोर्व्याप्य तले पृष्ठे च पार्श्वयोः।
अङ्गुष्ठादिष्वङ्गुलीषु न्यसेद् दुर्गादिपञ्चकम् ।। ४ ।।

अङ्गुष्ठादितलान्तं च षडङ्गानि प्रविन्यसेत्।
ततः संव्याप्य मूलेन विन्यसेच्च षडध्वनः ।। ५ ।।

शैवोदितः कलान्यासस्तत्वानां पञ्चविंशतिः।
विष्णुवत् पञ्चतत्वानि वक्ष्यन्तेऽत्र क्रमेण च ।। ६ ।।

बीजं नमः परायान्ते श्रेष्ठादि पदमुद्धरेत्।
शक्त्यात्मने हृदन्तं च तत्वानां पञ्चकं स्मृतम् ।। ७ ।।

श्रेष्ठा च पौरुषी तद्वद् विश्वरूपा निवृत्तिनी।
सर्वरूपेति सम्प्रोक्ताः क्रमात् तच्छक्तिपञ्चकम् ।। ८ ।।

षौं यौं रौं वौं लौमिति च बीजानां पञ्चकं स्मृतम्।
भुवनाध्वा शिवे प्रोक्तो वर्णाध्वा लिपिवर्णकैः ।। ९ ।।

मूलाणुरुद्धैर्न्यासस्य पदाध्वा च निगद्यते।
मूर्धालिकाक्षियुक्कर्णयुगोष्ठरसनासु च ।। १० ।।

कण्ठकक्षहृदुदरकटीतटशिखेषु च।
ऊरुजानुजङ्घापत्सु पदानि त्रिष्टुभो न्यसेत् ।। ११ ।।

मूर्धादिपञ्चस्थानेषु पञ्चदुर्गाः प्रविन्यसेत्।
मन्त्राध्वायं समुद्दिष्टः षडध्वान इतीरिताः ।। १२ ।।

मूर्धेक्षणास्यहृन्नाभिगुह्यपादेषु विन्यसेत्।
निर्बीजके मन्त्रवर्णाद् बीजयुक्ते सजानुषु ।। १३ ।।

तारं मायां च दुर्गायै पदमादौ नियोज्य च।
ह्लामाद्यैश्च षडङ्गानि कुर्यान्नेत्रत्रयान्तिमम् ।। १४ ।।

ऋषिस्तु नारद प्रोक्ता गात्रीच्छन्द उच्यते।
दुर्गादेवी च विद्वद्भिर्देवता समुदीरिता ।। १५ ।।

तारं मायां च दुर्गायै नत्यन्तं मनुमुद्धरेत्।
चक्रशङ्खधनुर्बाणमुद्राश्चापि प्रदर्शयेत् ।। १६ ।।

धनुषस्तु धनुर्मुष्टिश्शरमुष्टिश्शरस्य च।
मुद्रे स्मृते वैष्णवे तु दर्शिते शङ्खचक्रयोः ।। १७ ।।

ततो हृदब्जे सङ्कल्प्य धियाभ्यर्च्योपहारकैः।
यथाशक्तिमनुं जप्त्वा विदध्याद् विष्णुभावनाम् ।। १८ ।।

ततः शङ्खं समापूर्य पीठाराधन पूर्वकम्।
त्र्याधारपद्मे संस्मृत्य तेजांसीष्ट्वा ध्रुवांशकैः ।। १९ ।।

प्लुतादिनैकीकृत्यासुं सन्नियम्याथ मूलतः।
सकलीकृत्य तारोपचारमूलाक्षराङ्गकैः ।। २० ।।

न्यासस्थानेषु सम्पूज्य समर्प्यार्घ्यादिकं पुनः।
देवीभावनया युक्तः पूजाकर्मसमारभेत् ।। २१ ।।

पीठाधः प्रकृतिं कूर्मं मायाकम्बीजसंयुतम्।
स्वाद्यर्णबीजैर्गात्रेषु सौम्यां भद्रां जयां तथा ।। २२ ।।

आर्यामग्न्यादिकोणेषु बलं च प्रबलं तथा।
सुबलं च माहपूर्वबलं पीठाङ्घ्रिगान् यजेत् ।। २३ ।।

एषां क्लीबार्णसम्भिन्नभतारौ बीजमुच्यते।
स्वाद्यर्णबीजसत्वादि पञ्चकञ्चोर्ध्वतो यजेत् ।। २४ ।।

कन्दं नालं च पद्मं च क्लिन्नं लं बीजसंयुतम्।
न बिन्द्वकारोकाराभ्यां युक्ते सूर्येन्दुमण्डले ।। २५ ।।

रं बीजेन समायुक्तं वह्निमण्डलमीरितम्।
तारांशबीजसंयुक्तमात्मादि त्रितयं क्रमात् ।। २६ ।।

केसरेषु च मध्ये च नवशक्तीर्यजेत् पुनः।
प्रभा माया जया सूक्ष्मा विशुद्धा नन्दिनी पुनः ।। २७ ।।

सुप्रभा विजया सर्वसिद्धिदानव शक्तयः।
आदित्रिदीर्घैस्सन्ध्यर्णैश्चतुर्भिर्बिन्दुसंयुतैः ।। २८ ।।

कल्पयेद् बिन्दुसर्गाभ्यां बीजन्यासं क्रमेण च।
तारं वज्रनखेत्युक्त्वा दंष्ट्रायुध इतीरयेत् ।। २९ ।।

आयरुद्धमहासिंह वर्णान्ते ह्रूं नतिं वदेत्।
समष्टिमन्त्रः सम्प्रोक्तः पीठपूजेयमीरिता ।। ३० ।।

त्रितारमुपचाराणुमूलं भगवतीति च।
आगच्छ युग्मं संप्रोक्त्वा दुर्गामावाहयामि च ।। ३१ ।।

अनेन मनुनावाह्य मुद्राश्चावाहनादिकाः।
प्रदर्श्य व्याप्य विन्यस्येल्लिपितत्त्वाक्षराङ्गकान् ।। ३२ ।।

यद्वा षडध्वनो न्यस्य व्याप्याङ्गानि च विन्यसेत्।
दुर्गां दूर्वादलश्यामां स्मरेदापीतवाससम् ।। ३३ ।।

शङ्खचक्रधनुर्बाणकरां चन्द्रार्धशेखराम्।
सदरारि वराभीतिं स्मरेद् यद्वत् त्रिलोचनाम् ।। ३४ ।।

दत्वार्घ्याद्युपहारांश्च पूजयेत् परमेश्वरीम्।
तारोपचारमूलैश्च न्यासस्थानेऽक्षराङ्गकैः ।। ३५ ।।

अङ्गानि दिक्षु वर्मान्तान्यस्त्रंकोणेषु पूजयेत्।
पुरोक्षिणी च तद्बाह्ये दिक्ष्वष्टास्वष्टशक्तयः ।। ३६ ।।

जयां च विजयां कीर्त्तिं प्रीतिं तद्वत्प्रभाह्वयाम्।
श्रद्धां मेधां श्रुतिं चैव द्वितीयावरणे यजेत् ।। ३७ ।।

चक्रं शङ्खं गदां खड्गं पाशमङ्कुशसंज्ञकम्।
शरं धनुश्च तद्बाह्ये तृतीयावरणे यजेत् ।। ३८ ।।

एषां षोडशमन्त्राणां स्वाद्यर्णं बिन्दुसंयुतम्।
कीर्त्तेः प्रीतेश्च मेधाया अकारस्वरसंयुतम् ।। ३९ ।।

ईकारैकाररेफोनं स्वाद्यर्णं बिन्दुसंयुतम्।
चक्रस्य बिन्दुसंयुक्तं रेफबीजमुदीरितम् ।। ४० ।।

अस्त्राणि सम्बुध्यन्तानि फडन्तानि समुद्धरेत्।
तद्बाह्ये पूजनीया स्युः इन्द्रवज्रादिकाः क्रमात् ।। ४१ ।।

पूज्या च मुण्डिनीतत्र देवी निर्माल्यधारिणी।
एवं सम्पूज्य देवेशीं जलगन्धार्त्त वारिभिः ।। ४२ ।।

निवेद्य हुत्वा दत्त्वा च बलिमाग्नेयगोचरे।
प्रसन्नजयनं कृत्वा पूर्वचोदितवर्त्मना ।। ४३ ।।

पूजाशेषं समाप्याथ नमस्कृत्य क्षमापयेत्।
अथोत्सवविधिं वक्ष्ये समासान्महिषद्विषः ।। ४४ ।।

प्रकल्प्य वाहनं सिंहं ध्वजदण्डादिकं तथा।
नान्दीमुखादिकं कृत्वा सिंहमन्त्रेण वाहनम् ।। ४५ ।।

आवाह्य पुरतो देव्या ध्वजस्थापनमाचरेत्।
कृत्वा भूतबलिं रात्रौ परेद्युर्यजनान्वितम् ।। ४६ ।।

औत्सवं भौतिकं यद्वा सायं प्रातबलिं हरेत्।
चण्डिकामंबिकाञ्चैव प्रासादद्वारपार्श्वयोः ।। ४७ ।।

मण्डपे सिंहमभ्यर्च्य दक्षिणे विघ्नशङ्करौ।
दिक्पान् मातृंश्च शास्तारं दुर्गां स्कन्दं धनेश्वरम् ।। ४८ ।।

मुण्डिनीं च समभ्यर्च्य सभान्तर्द्वारपर्श्वयोः।
ह्लादिनीं मोदिनीमिष्ट्वा विजयन्तीं बहिस्तथा ।। ४९ ।।

कात्यायनीं च सम्पूज्य काल्याद्याः परितो यजेत्।
काली कराली विरजा मन्दरा विन्ध्यवासिनी ।। ५० ।।

सुप्रभा सिंहवक्त्रास्यादष्टमी दैत्यमर्दिनी।
अष्टकोटिगणेभ्योऽथ द्वितीयावरणे बलिम् ।। ५१ ।।

दत्त्वा देवग्रहादीनां द्वितीयावरणे ददेत्।
दिग्बलिश्च तथा कार्यो देवीदासिभ्य इत्यपि ।। ५२ ।।

मूलेन वा महापीठे बलिं दद्यादनन्तरम्।
ब्रह्मघोषी सुघोषी च यज्ञवेष्टी सुरङ्गिणी ।। ५३ ।।

सुमुखी सुभुजा चैव प्रमोदिन्यात्मनी क्रमात्।
एताश्च परितोऽभ्यर्च्य ब्राह्मीमध्ये समर्चयेत् ।। ५४ ।।

काल्याद्या वात्र सम्पूज्य ब्राह्म्यन्तेऽष्टदलस्थिताः।
क्षेत्रेशस्य बलिं दत्वा समाप्यान्तः प्रवेशयेत् ।। ५५ ।।

एवं भूतबलिः प्रोक्ता यात्रा पूर्वदिने निशि।
महाबलिं विधायाथ शयनं परिकल्प्य च ।। ५६ ।।

चक्रेण कौतुकं बध्वा प्रार्थयेन्मनुनामुना।
तीर्थयात्रा त्वया देवी श्वः कर्त्तव्या सुरेश्वरी ।। ५७ ।।

अद्य प्रतिसरारम्भस्त्वमनुज्ञातुमर्हसि।
आवाह्य कौतुके देवीं सकलीकृत्य मूलतः ।। ५८ ।।

शयने शाययित्वाथ पूर्वप्रोक्तेन वर्त्मना।
प्रातरुत्थाप्य सम्पूज्य मूलबिम्बे नियोज्य च ।। ५९ ।।

यात्राहोमं विधायाथ पञ्चदुर्गाहुतान्वितम्।
मूलबिम्बान्महोवाह्य कर्मार्चायां नियोज्य च ।। ६० ।।

चूर्णैरुन्मृज्य मूलार्चां रक्षां कृत्वा बहिर्व्रजेत्।
दत्वाथ चण्डिकादिभ्यो यथादृष्टं बलिं ततः ।। ६१ ।।

ध्वजसंस्थां चितिं भूयः कर्मार्चायां नियोज्य च।
तीर्थाशयं समासाद्य संस्नाप्यात्र यथाविधि ।। ६२ ।।

सनिवेद्यं प्रपूज्यैनां प्रार्थयेन्मनुनामुना।
तीर्थेऽस्मिन् विमले पुण्ये स्नातासि परमेश्वरि ।। ६३ ।।

अतस्त्वमनुगृह्णीष्व स्वस्थानोपाश्रयेण नः।
ततो द्रुतं गृहं प्राप्य मूलबिम्बे नियोज्य च ।। ६४ ।।

अभिषिच्य समभ्यर्च्य निवेद्यैनां प्रतोषयेत्।
कलशैरभिषिच्याथ परेद्युस्तद्दिनेऽपि वा ।। ६५ ।।

सम्पूज्य रात्रौ भूतेभ्यो बलिं दत्वा क्षमापयेत् ।।

।। इति कलशचन्द्रिकायां दुर्गाभागे तृतीयपटलः समाप्तः।।

।। दुर्गाभागः समाप्तम् ।।

# ।। कलशचन्द्रिकायां स्कन्दभागः ।।

## ।। प्रथमः पटलः ।।

।। श्रीगणपतये नमः ।।

भूयाद् वस्सततं भूत्यै तारकान्धतमो रविः।
शीतलीकुरुतेऽश्रूणि यस्तु गीर्वाणयोषिताम् ।। १ ।।

अथ वक्ष्ये षण्मुखस्य कलशं नवधा श्रुतम्।
बीजवापविशुद्ध्युक्षा प्रायश्चित्तहुतादिकम् ।। २ ।।

निश्यष्टऽह्नि स्नपनात् प्राक् कुर्यात् बीजवापनम्।
सामान्यविहितं कर्म न विविच्योच्यतेऽत्र तु ।। ३ ।।

शालीमाषयवाश्चापि प्रियङ्गुतिलशिम्बकाः।
कुलस्थमुद्गनिष्पावसिद्धार्था दशबीजकाः ।। ४ ।।

अस्त्रेण क्षालयेत् तोयैर्मूलेन पयसा तथा।
आदित्यो निर्ऋतिर्ब्रह्मा स्कन्दो यमसमीरणौ ।। ५ ।।

अग्निविष्णू रमारुद्राः शाल्यादिद्रव्यदेवताः।
वापो मूलेन गायत्र्या सेचनं वोपचारतः ।। ६ ।।

ब्रह्मेन्द्रभूतगन्धर्वयक्षरक्षः पिशाचकाः।
विष्णुविघ्नस्कन्दरुद्रशिवा बलिभुजो ग्रहाः ।। ७ ।।

शैवोदितानि द्रव्याणि बलिकर्मणि योजयेत्।
बलिभुग्देवतावत्तु द्रव्यव्यात्यास ईरितः ।। ८ ।।

शिवोक्तान्येव बीजानि विष्णूक्ते द्रव्यदेवते।
ग्राह्याणि स्युर्बलिश्चात्र भूतकूरान्धसापि वा ।। ९ ।।

प्रासादस्य विशुद्धौ तु भेदमात्रं प्रदर्श्यते।
सूत्रादिजापने मन्त्रा व्यस्ताव्यस्तध्रुवादिकाः ।। १० ।।

अस्त्रमन्त्रः सर्षपे तु पञ्चतत्वानि गव्यके।
ज्वालामालिनि हुमिति सम्प्रोक्तास्त्राभिधो मनुः ।। ११ ।।

मुष्टिर्दर्भशलाकोद्यत् पलाशाश्वत्थशाखया।
चन्दनागरुकर्पूरकुष्ठकुङ्कुमवानरैः ।। १२ ।।

ह्रीवेरमुरसंयुक्तैर्गन्धाष्टकमुदीरितम्।
स्वस्वाक्षराङ्गमन्त्रेण रक्षाकलशमर्चयेत् ।। १३ ।।

हुनेदस्त्रेण रक्षोघ्नहोमे मार्गेऽश्मकादिकम्।
उपचारेण पूर्णां च हुनेद्वौषड्वतान्तरा ।। १४ ।।

तारं नमः षण्मुखायेत्युपचारमनुः स्मृतः।
वास्तुहोमे वास्तोष्पते पूर्वैजातादिपञ्चभिः ।। १५ ।।

षण्मन्त्रैश्शन्नवर्गैश्च व्याहृतीभिर्घृतं हुनेत्।
शमी समिद्घृताद्यं तु दूर्वाश्शान्त्या सपूर्णकम् ।। १६ ।।

बलिं विधाय वास्तोश्च पुण्याहं च समाचरेत्।
चतुश्शुद्धिं ततः कृत्वा कुर्याद् धारां यथाविधि ।। १७ ।।

सावित्रीं पञ्चतत्वानि सूक्तं वेदादिमं तथा।
अग्निहोतादिकं रौद्रं पावमानं नृ सूक्तकम् ।। १८ ।।

वेदान्त्यसूक्तं धारायां जपेयुरभितो द्विजाः।
धारोदितान्मनून् जप्त्वा गव्यैरप्यवगाहयेत् ।। १९ ।।

पञ्चकैः स्नापयेद् देवं यथाविधि समर्चितैः।
अथ वक्ष्ये महाकुम्भं प्रोक्षणप्रक्रियाक्रमम् ।। २० ।।

विलिखेद् षड्दलं पद्मं मण्डपे पञ्चवर्णकैः।
चतुरश्रं विधायादौ भङ्कत्वा षोडशधा पुनः ।। २१ ।।

अन्तः कोष्ठचतुष्के तु समं वृत्तत्रयं लिखेत्।
कर्णिकां दलसन्धींश्च दलान्येषु प्रकल्पयेत् ।। २२ ।।

केसरार्थं मध्यवृत्तं मध्ये वृत्तं समालिखेत्।
षोढा विभज्य तद्वृत्तं षड्दलानि प्रकल्पयेत् ।। २३ ।।

इन्द्राग्निरक्षोवरुणवाय्वीशाग्राणि तानि च।
एकीकुर्याद् पदद्वन्द्वं दिक्षु द्वारस्य सिद्धये ।। २४ ।।

कर्णिकां पीतरजसा केसराण्यपि तेन तु।
पीतानि च दलानि स्युः यद्वा कृष्णेन पूरयेत् ।। २५ ।।

हरितेनाथ सन्धींश्च वृत्तबाह्यं सितेतरैः।
द्वाराणि हरितेनैव कोणं शुक्लेन पूरयेत् ।। २६ ।।

सितरक्तासितैर्बाह्ये गुणरेखाश्च संलिखेत्।
एतन्मण्डपपार्श्वे तु स्वस्तिकद्वयमालिखेत् ।। २७ ।।

सशालितण्डुलतिलसिद्धार्थानि यथाक्रमम्।
वर्णोत्तरं क्षिप्त्वा कुशकूर्चानि विन्यसेत् ।। २८ ।।

विधाय पीठपूजां च प्रागादिषु दलेष्वथ।
ब्रह्माणं भद्रकालीं च विघ्नेशं विष्णुमीश्वरम् ।। २९ ।।

शास्तारं च समभ्यर्च्य क्षालितं निर्वृणं घटम्।
तत्र द्रोणवहं सूत्रवेष्टितं धूपितं शुभम् ।। ३० ।।

तारेण न्यग्विलं न्यस्त्वा स्वस्तिके च घटद्वयम्।
संस्कृत्य शोषदाहाद्यैः तत्घटं च घटीद्वयम् ।। ३१ ।।

दर्भन्यासं गन्धजलप्रोक्षणाञ्चाक्षतार्पणम्।
कृत्वामूलेन पूजान्तमुत्तानीकरणोद्धृती ।। ३२ ।।

पीठे विन्यस्य सम्प्रोक्ष्य हेमरत्नाक्षतान्वितम्।
कूर्चं विन्यस्य तत्कुम्भे हैमान्येतानि निक्षिपेत्।
वज्रं शक्तिमयूरेभपद्माकाराणि तानि च ।। ३३ ।।

गन्धाद्भिर्मूलमन्त्रेण सम्पूज्यार्धादिकं घटम्।
पल्लवाद्यं निधायास्मिन् लिपिपङ्कजमर्चयेत् ।। ३४ ।।

विकिरौघं पञ्चगव्यं साधयेच्च घटीद्वये।
यवमाषतिलव्रीहि तण्डुलैस्सर्षपान्वितैः ।। ३५ ।।

दूर्वादर्भकुशाग्रैस्सतुलसीपद्मकेसरैः।
संयुक्तं विकिरं प्रोक्तं सर्वदोषहरं परम् ।। ३६ ।।

मूलेनावाह्य तत्कुम्भे लिपितत्त्वाक्षराङ्गकैः।

विन्यस्यार्घ्यादिकं दत्वा स्नाने कुर्यात् समूर्त्तिपः ।। ३७ ।।

नान्दीमुखं च पुण्याहं कुमारः प्रियतामिति।
पुण्याहशिष्टतोयेन तत्कुम्भं पूरयेदथ ।। ३८ ।।

अम्बरादि समर्प्यास्मै यजेत् सावरणं गुहम्।
लोकपालार्चनान्ते तु वज्राद्यार्चनतः पुरा ।। ३९ ।।

इन्द्रेशानान्तरारभ्य सोमेशानान्तरावधि।
विदिक्षु पूजयेदेतान् वक्ष्यमाणक्रमेण तु ।। ३२ ।।

आदित्यानाश्विनौ चैव पितॄन् गणपतिं तथा।
मात्रप्सरो वसून् रुद्रान् वज्रादीनर्चयेत्ततः ।। ३३ ।।

विकिरौघं पञ्चगव्यमस्त्रेणावाह्य पूजयेत्।
निवेद्यं च प्रसन्नार्चां कृत्वा तत्कलशं स्पृशन्।
द्विजैश्चतुर्भिस्सहितो जपेदेतान् मनून् गुरुः ।। ३४ ।।

वेदाद्यसूक्तं रौद्रं च सूक्तं श्रीरुद्रसंज्ञितम्।
तमर्वंतादिसूक्तं च शाकुनं स्वस्तिसूक्तकम् ।। ३५ ।।

शन्नवर्गं पौरुषं च यस्मिन् वृक्षे च सूक्तकम्।
वातावात्वादि सूक्तं साङ्गमूलोपचारकान् ।। ३६ ।।

गायत्रीं षण्मनून् द्वादशाख्यास्तारं शतं जपेत्।
विकिरं पञ्चगव्यं च स्पृष्ट्वास्त्रं सञ्चपेच्छतम् ।। ३७ ।।

संरक्ष्यास्त्रेण नीराज्य प्रासादान्तः प्रविश्य च।
पीठं सम्पूज्य देवेशमावाह्य सकलीक्रियाम् ।। ३८ ।।

विधायार्घ्यादिकं दत्त्वा स्नानेऽद्भिरभिषिच्य च।
नीराज्यान्तस्समानीय कलशं च घटीद्वयम् ।। ३९ ।।

दत्त्वा पाद्यादिकं दर्भशमीब्रह्मद्रुशाखया।
पुण्याहचोदितैर्मन्त्रैः प्रोक्ष्यैनं कलशाम्बुभिः ।। ४० ।।

मूलोपचाराङ्गमन्त्रषण्मन्त्रैर्द्वादशाख्यया।
शाकुनस्वस्तिसूक्ताभ्यामभिषिच्य सशोषकम् ।। ४१ ।।

गव्येनास्त्रेण सम्प्रोक्ष्य विकिरौघै र्विकीर्य च।
पुष्पमाराध्य नीराज्य संरक्ष्याथ बहिः पुनः ।। ४२ ।।

परिवारान् वज्रहस्तप्रमुखान् क्षेत्रपान्तिमान्।
धूर्त्तसेनं विना स्वस्वनामभिश्चास्त्रमन्त्रतः ।। ४३ ।।

शिष्टाम्बुगव्यविकिरैः प्रोक्षयेद् विकिरेत्तथा।
धूर्त्तसेनं स्वमन्त्रेण तच्छेषं सर्वमर्पयेत् ।। ४४ ।।

ततस्सम्पूज्य देवेशं निवेद्यैनं प्रतोष्य च।
जप्तॄणां दक्षिणां दद्यादेवं प्रोक्षणमीरितम् ।। ४५ ।।

स्कन्दप्रोक्तं ततः कुर्यात् प्रायश्चित्तं हुतात्मकम्।
गेहस्य दक्षिणे भागे कुण्डं खण्डेन्दुसन्निभम् ।। ४६ ।।

कृत्वास्मिन् जनयेदग्निं वक्ष्यमाण क्रमेण तु।
अथोपलिप्य तत्कुण्डं मुष्ट्यादीन् सादयेदुदक् ।। ४७ ।।

तानि संस्कृत्य कुण्डस्य कुर्यात् तैर्मार्जनादिकम्।
वाय्वादि पञ्चबीजैश्च कृत्वा शोषादिपञ्चकम् ।। ४८ ।।

विधाय शोषदाहावप्यस्त्रेणोल्लिख्य तत्र च।
कवचेनाथ सम्पोक्ष्य प्रणवेनात्रविष्टरम् ।। ४९ ।।

विन्यस्य पीठं सम्पूज्य देवयानीमथाह्वयेत्।
शक्तिनाम चतुर्थ्यन्तनमोन्तं मन्त्र उद्धृतः ।। ५० ।।

ह्लामाद्यङ्गानि विन्यस्य सम्पूज्यानीय पावकम्।
आदाय नाभौ विन्यस्य क्रव्यादंशं निरस्य च ।। ५१ ।।

कवचेन विधायास्त्रमनुनाभ्युक्ष्य मूलतः।
अभ्यर्च्योद्धृत्य कुण्डेर्ध्वे त्रिः परिभ्राम्य पावकम् ।। ५२ ।।

मूलेन कुण्डे निक्षिप्य ततः प्रज्वाल्य मूलतः।
कृत्वा परिसमूहाद्यं गर्भाधानादिकाः क्रियाः ।। ५३ ।।

षण्मन्त्रमूलोपचारैः कुर्यादष्टक्रमेण तु।
उपचारेण पूर्णां च वौषडन्तेन दापयेत् ।। ५४ ।।

सनत्कुमारस्कन्देन्द्र विशाखाः षष्ठिषण्मुखौ।
षण्मन्त्रास्तारपूर्वास्तु चतुर्थ्यन्ता नमोन्विताः ।। ५५ ।।

होमकर्मणि सम्प्रोक्ता वह्निजाया समन्विताः।
देवमावाह्य सम्पूज्य हुत्वा पूजाणुभिर्घृतम् ।। ५६ ।।

मूलेनाष्टोत्तरशतं हुत्वाशेषं समापयेत्।
उपलिप्याथ तत्कुण्डं होमकर्म समारभेत् ।। ५७ ।।

अन्वाधानं समारभ्य परिधिस्थापनात् पुरा।
दक्षिणेऽभ्यर्च्य कलशं परिधिस्थापनादिकम् ।। ५८ ।।

कृत्वा वह्न्याराधनान्तं तत्र पीठं समर्च्य च।
आवाह्य देवं सकलीकृत्याभ्यर्च्यावरणान्वितम् ।। ५९ ।।

इध्वाधाराज्य भागान्तेऽथ पक्वं गायत्र्या हुनेत्।
तारान्ते शक्तिहस्ताय विद्महे पदुमुच्चरेत् ।। ६० ।।

षडाननाय धीमहे, तन्नस्कन्दः पदं वदेत्।
प्रचोदयादिति पुनः गायत्र्यैषा समीरिता।
पूजामन्त्रैर्घृतं हुत्वा षण्मन्त्रैश्च सकृत् सकृत् ।। ६१ ।।

मूलोपाचारा गायत्री द्वादशाख्याणुभिस्तथा।
स्कन्दो बाणो हेमचूडो भद्रसेनो भवस्तथा ।। ६२ ।।

भवपुत्रोऽनाद्यशीलः कुक्कुटध्वज एव च।
मयूरवाहनगुहौ सनत्कुमारनामकः ।। ६३ ।।

महासेनश्च ताराद्याश्चतुर्थी नमसान्विताः।
होमकर्मणि सर्वत्र स्वाहान्ता द्वादशाभिधाः ।। ६४ ।।

व्याहृतीभिस्ततः पूर्णां हुत्वा द्रव्याणि होमयेत्।
कदम्बसमिधश्चाज्यं अन्नं लाजांश्च सर्षपान् ।। ६५ ।।

यवांस्तिलांश्च षण्मन्त्रैरावृत्य द्व्यधिकं शतम्।
द्व्यधिकं तु सहस्रं वा त्रिसहस्रमथापि वा ।। ६६ ।।

देवसेनादिभिर्यद्वा व्याहृतीभिस्तु वा क्रमात्।
घृतक्षीरदधिक्षौद्राण्यष्टोत्तरशतं हुनेत् ।। ६७ ।।

देवसेना च विद्या च मेधा प्राज्ञा च ता स्मृताः।

दधिक्षौद्रघृताक्ताश्च दूर्वास्तु त्रिसहस्रकम् ।। ६८ ।।

मृत्युञ्जयेन हुत्वात्र पूर्णां द्रव्यान्तरे हुनेत्।
होमशेषं समाप्याथ सम्पातं कलशेऽर्घ्ये च ।। ६९ ।।

हुतमन्त्रान् जपेद् देवं कलशैरभिषेचयेत्।
शान्तिहोमांस्ततः कुर्याद् यद्वा दोषानुसारतः ।। ७० ।।

नव वा पञ्चयद्वैकं गेहस्य परितः क्रमात्।
कुर्यात्तुर्यश्रकुण्डानि दिग्विक्ष्वग्रतस्तथा ।। ७१ ।।

दिक्ष्वग्रतो वा यद्वाग्रे होमसंख्यानुसारतः।
पूर्ववज्जनयित्वाग्निं विहरेद्दिग्विदिक्क्रमात् ।। ७२ ।।

अन्वाधानं समारभ्य व्याहृत्याहुत्यनन्तरम्।
सकलाख्येन मन्त्रेण समिदष्टशतं हुनेत् ।। ७३ ।।

कदम्बजास्तु समिधो गुरुकुण्डे प्रकीर्त्तिताः।
न्यग्रोधौदुम्बराश्वत्थप्लक्षजादिक्षु कीर्त्तिताः ।। ७४ ।।

पलाशामधूकजम्बुकपित्थोत्थ विदिक्षु च।
हविश्च बीजमन्त्रेण सर्वत्राष्टशतं हुनेत् ।। ७५ ।।

ततो मन्त्रेण महता घृतमष्टशतं हुनेत्।
ततो राजींस्तिलांस्तद्वत् बीजमन्त्रेण होमयेत् ।। ७६ ।।

आद्ये दीर्घौ विद्वन्तौ सकलाख्यो मनुस्मृतः।
हालां चतुर्थनवममष्टमस्वरसंयुतम् ।। ७७ ।।

अक्षरं बिन्दुसंयुक्तमष्टमं च समुद्धरेत्।

एकोनविंशदर्णं तु पाशबीजसमन्वितम् ।। ७८ ।।

पञ्चविंशाक्षरं वह्निबीजेन तु समन्वितम्।
एकोनत्रिंशदर्णं तु वायुतारसमन्वितम् ।। ७९ ।।

क्रमाद् बीजैः षड्भिरेवं बीजाख्यो मनुरुद्धृतः।
गृं गुहाय हृदन्तोऽयं महदाख्यो मनुस्मृतः ।। ८० ।।

द्रव्यान्तरे हुनेत् पूर्णां होमशेषं समाप्य च।
वह्निं संरक्ष्य देवेशं कलशैरभिषिच्य च ।। ८१ ।।

होमक्रमेणाथ देवं पूजयित्वा प्रतोषयेत्।
तत्कुण्डान्युपलिप्याथ कुर्याद्धोमांस्तु पूर्ववत् ।। ८२ ।।

त्रिरावृत्य हुनेदेवं यद्वा त्रिदिनमेव वा।
एवं प्रोक्ता शान्त्यभिधा सविशेषा हुतक्रिया ।। ८३ ।।

शान्तिहोमं ततः कुर्यादीशे तुर्यश्रकुण्डके।
पूर्ववज्जनयित्वाग्निं व्याहृत्याहुतिपश्चिमम् ।। ८४ ।।

हुत्वा द्रव्याणि गायत्र्या पृथगष्टशतं हुनेत्।
अष्टोत्तरसहस्रं वा पूर्णद्रव्यान्तरे हुनेत् ।। ८५ ।।

प्लक्षौदुम्बरवटजाः पैप्पलास्समिधस्तथा।
मध्वाज्यक्षीरसंयुक्ता दूर्वाश्चाज्यान्नलाजकान् ।। ८६ ।।

सर्षपांश्च यवतिलव्रीहिसक्तुघृतान्यथ।
शेषं समाप्य संस्नाप्य पूजाशेषं समापयेत् ।। ८७ ।।



अथाग्रे जनयित्वाग्निं कुर्यात्तत्त्वहुतक्रियाम्।

कलशस्यानुरूपेण कारयित्वा च मण्डपम् ।। ८८ ।।

मण्डपेऽस्मिन्नागपदे चतुर्दिक्ष्वग्निशर्वयोः।
रचयेत् सप्तकुण्डानि नागस्थन्त्वेकमेव वा ।। ८९ ।।

चतुरश्रं धनुर्वक्रं वृत्तं चैव त्रिकोणकम्।
योन्याकारं तथाष्टाश्रं नागे तु चतुरश्रकम् ।। ९० ।।

सूत्रादीनथ संस्कृत्य तारांशैस्तेन वेष्टयेत्।
प्लाक्षमौदुम्बरं चैव पैप्पलं वटसम्भवम् ।। ९१ ।।

तोरणानि चतुद्द्वारि स्थापयेत् स्वस्वनामभिः।
वरदश्च यशोदश्च पुष्टिदः श्रीप्रदस्तथा ।। ९२ ।।

तोरणेशा इमे प्रोक्ता ध्वजेशास्तु दिशाधिपाः।
संस्थाप्यैषां बलिं दत्त्वा द्वारकुम्भेष्विमान्यजेत् ।। ९३ ।।

वीरसेनं महासेनं सुसेनं भद्रसेनकम्।
चारुसेनं सुषेणं च पूर्णाचित्रादिसेनकम् ।। ९४ ।।

विशोध्य मध्ये मूलेन दिक्पालैस्सह पूजयेत्।
विकीर्यमूलेनाधारशक्त्यादीन् न्यस्य गोपयेत् ।। ९५ ।।

वर्धनीमपि सम्पूज्य कुम्भेशं विधिवद्यजेत्।
अस्त्रेणावाहितां तद्वत् कर्करीमपि संयजेत् ।। ९६ ।।

जननानन्तरं वह्नेः परिभ्रम्य घटेश्वरम्।
विकिरोपरि विन्यस्य द्वयं सम्पूज्य गोपयेत् ।। ९७ ।।



।। इति कलशचन्द्रिकायां स्कन्दभागे प्रथमपटलः समाप्तः ।।

# कलशचन्द्रिकायां स्कन्दभागः
# द्वितीयः पटलः

वक्ष्येऽथ पदक्लृप्तिं च द्रव्याण्येषां च पूरणम्।
नवधा गदितस्सात्र कलशस्य पृथक् पृथक् ॥ १ ॥

क्षेत्रे धारापुटे वीथीर्मृजेत् पञ्चपुटान्तरे।
पञ्चविंशतिकान्यत्र पञ्चविंशति कल्पयेत् ॥ २ ॥

अत्रान्तरालखण्डेन नवकानि प्रकल्पयेत्।
बहिः कोणेषु कोणानामेकैकोपपदार्पणात् ॥ ३ ॥

षड्विंशति पदानि स्युरेवं पञ्चशते विधिः।
आयोज्य गव्यान्येकस्मिन् पात्रे संस्कृत्य तेन तु ॥ ४ ॥

मध्यस्थं ब्रह्मकलशं यथान्यायं प्रपूरयेत्।
रत्नाष्टकेनाष्टकुम्भान् परितो दिग्विदिक्रमात् ॥ ५ ॥

परितः षोडशघटान् पूरयेच्छुद्धवारिभिः।
दिग्विदिक्स्थान् जयन्तादिदित्यन्तानन्तरालगान् ॥ ६ ॥

ऐन्द्रे मध्ये घृतेनाष्टबीजैः परिघटानपि।
पयसा याम्यमध्येऽन्यानष्टत्वक्क्वथिताम्बुभिः ॥ ७ ॥

दधिवारुणमध्येऽन्येष्वष्टपुष्पाणि पूरयेत्।
उत्तरे मधुना मध्यं परितोऽष्टफलैस्तथा ॥ ८ ॥

अग्नौ तैलेन मध्यस्थमितरानष्टणन्धकैः।
गुलेन निऋतौमध्यमष्टौ लोहाष्टकेन तु ।। ९ ।।

वायुमध्यस्थमिक्षूदेनान्यानष्टौषधैः क्रमात्।
ईशे तीर्थाम्भसामध्यं परां तोयाष्टकेन च ।। १० ।।

तत्रत्यान् षोडशघटान् पूरयेच्च तदा तदा।
धात्रीं हरिद्रामाचाममध्यदिक्ष्वर्पयेद् बहिः ।। ११ ।।

कोणेषु कौशकाशं च रामञ्जं दौर्वकं तथा।
पूरयेत् परिकुम्भाश्च कोणेषूपपदस्थितान् ।। १२ ।।

इन्द्रेशानान्तरारभ्य सोमेशानन्तरावधि।
अन्तरालब्रह्मघटेष्वर्पयेत् पल्लवाष्टकम् ।। १३ ।।

द्रव्याणां न्यसनं तद्वत्पूरणं मूलमन्त्रतः।
रत्नाष्टकं पद्मरागं नीलमुक्तेन्दुकान्तके ।। १४ ।।

कुरुविन्दं च काचं च विद्रुमं वज्रमीरितम्।
यवैस्तिलैश्च गोधूमैस्सर्षपैश्शालिभिस्तथा ।। १५ ।।

मुद्गैर्माषैश्च नीवारैर्बीजतोयं प्रकीर्त्तितम्।
न्यग्रोधौदुम्बराश्वत्थप्लक्षचूतपलाशजैः ।। १६ ।।

शिरीषमधुकत्वग्भिः कषायाष्टकमीरितम्।
उत्पलं चैव कल्हारं पद्मं कुमुदमेव च ।। १७ ।।

सौगन्धिकं कशेरुं च सितरक्तोत्पले तथा।
समातुलं गाम्रविल्वजम्बूपनसडाडिमम् ।। १८ ।।

भव्यं च कादलयुतं फलाष्टकमुदाहृतम्।
कुङ्कुमागरुकर्पूरकुष्ठवानरवारिभिः ।। १९ ।।

मुरशीतयुतैरेवं गन्धाष्टकमुदीरितम्।
सुवर्णं रजतं ताम्रमायसं त्रपुसीसके ।। २० ।।

कांसं पित्तलञ्चैव लोहाष्टकमुदीरितम्।
सुवर्चलावचाब्रह्मी शङ्खपुष्पी शतावरी ।। २१ ।।

सहदेवी विष्णुकान्ता लक्ष्मीश्चाष्टौषधि स्मृताः।
सामुद्रं च सरित्तोयं नैर्झरं वापिसंभवम् ।। २२ ।।

तटाकं ह्रदजं कौप्यं सेतुजं च जलाष्टकम्।
जातीलवङ्कतक्कोलैर्मतमाचमनीयकम् ।। २३ ।।

अक्षतं तिलसिद्धार्थौ यवं तोयं पयोदधि।
कुशाग्रेणयुतन्त्वेतदर्घ्यं द्रव्याष्टकंस्मृतम् ।। २४ ।।

न्यग्रोधौदुम्बराश्वत्थप्लक्षचूतपलाशजम्।
शम्यपा मार्गसम्भूतमीरितं पल्लवाष्टकम् ।। २५ ।।

एककुम्भविधाने तु रत्नादीन् युगपन्यसेत्।
पृथङ्न्यासविधावेतान्यैकैकत्र प्रविन्यसेत् ।। २६ ।।

सप्तोत्तरं नवतिभिरेवं द्रव्यैः क्रमोदितैः।
कुम्भान् सम्पूर्य सम्पूज्य कलशानधिवास्य च ।। २७ ।।

पूरणक्रमतस्सर्वान् समुद्धृत्याप्रमादकः।
परेद्युस्नपयेद् देवं शुभलग्नोदये दिने ।। २८ ।।

गायत्र्या ब्रह्मकुम्भैश्च द्रव्यकुम्भैश्च मूलतः।
शुद्धाम्बुपूरितघटेस्नपयेदङ्गमन्त्रकैः ।। २९ ।।

द्रवयोः स्नेहरसयो स्नपनान्ते तु मृद्गणैः।
आलिप्य शुद्धतोयैश्च स्नपयेदन्तरान्तरा ।। ३० ।।

नदी वेदी समुद्रेभ्यो वल्मीकक्षेत्रपर्वतात्।
वृक्षकुञ्जरयोः श्रुङ्गादाहृताश्चाष्टमृत्तिकः ।। ३१ ।।

सैकपञ्चशतं त्वेवं कलशं क्रौञ्चघातिनः।
उत्तमत्रितयेऽप्येवमुत्तमा परिकीर्त्तिता ।। ३२ ।।

एकविंशत्पुटे क्षेत्रे मृजेति त्रिपुटान्तरे।
मध्ये पद्मं लिखेदत्र पञ्चविंशतिभिः पदैः ।। ३३ ।।

दिक्षुपद्मपदान्यन्तर्न्नवकानि प्रकल्पयेत्।
चतुर्दिक्षु बहिः पञ्चदशकान्येवमेव तु ।। ३४ ।।

अन्यानि नवकान्येव पूरणं मूलमन्त्रतः।
पञ्चगव्यघृताद्यैस्तु रत्नबीजादिभिस्तथा ।। ३५ ।।

मध्यस्थान्दैविकस्थांश्च पूर्ववत् पूरयेद्घटान्।
धात्रीं रात्रिमाचमनमर्घ्यं दिक्षुबहिः क्रमात् ।। ३६ ।।

कुशकाशादिकान् कोणेष्वन्तरालेषु पल्लवैः।
पूरणं पूर्ववत् प्रोक्तं उद्धृतीः स्नपनं तथा ।। ३७ ।।

अस्यैव कलशस्यान्या कथ्यते पदकल्पना।
एकविंशत्पुटे क्षेत्रे मृजेदेकपुटान्तरे ।। ३८ ।।

चत्रस्रो वीथिकास्तद्वत् ततः पञ्चपुटान्तरे।
पञ्चविंशतिकान्यत्र मध्येऽष्टासु दिशासु च ॥ ३९ ॥

पञ्च पञ्च बहिर्दिक्षु कोणेष्वेकैकमर्पयेत्।
क्षेत्रे सौम्यपुटे यद्वा मृजेत् षष्ठपुटान्तरे ॥ ४० ॥

पञ्चविंशतिमध्येऽत्र दिक्षु त्रिस्त्रि पदानि च।
कोणेषु बाह्ये कोणस्थमेकैकं पदमर्पयेत् ॥ ४१ ॥

अन्यानि मार्जयेत् कोणेष्वेवं षड्विंशतिर्भवेत्।
मध्याष्टदिक् संस्थितेषु पञ्चविंशतिकेष्वथ ॥ ४२ ॥

पूर्ववत् पूर्वमुदितैर्द्रव्यैरेवं प्रपूरयेत्।
बहिः पञ्चकमध्यस्थ कुम्भेष्वामलकादिभिः ॥ ४३ ॥

कोणस्थैकेककुम्भेषु कुशकाशादि पूरयेत्।
अभ्यर्च्य स्नपयेद् देवं पूर्वचोदितवर्त्मना ॥ ४४ ॥

एवमुत्तमवर्गेऽपि मध्यमस्नपनं स्मृतम्।
सदापुटे मृजेद् वीथीर्दिक्षु द्वित्रिपुटान्तरे ॥ ४५ ॥

अन्तर्न्नवानां नवकं बहिर्दिक्षु चतुष्टयम्।
द्विकान्यत्रान्तरालेषु त्रिकं कोणेषु कल्पयेत् ॥ ४६ ॥

दिग्गतानां तु षट्काणामन्तः पार्श्वद्वयं त्यजेत्।
कोणस्थानं चतुष्काणामन्तः कोणानि मार्जयेत् ॥ ४७ ॥

अन्तरालेषु षट्कानि द्विकान्येव प्रकल्पयेत्।
पूर्ववत् पूरयेद् द्रव्यैः देवं संस्नपयेत्तथा ॥ ४८ ॥

यद्वा लोकपुटे वीथीः सम्मार्ज्य त्रिपुटान्तरे।
पञ्चविंशति मध्येऽत्र दिक्षु पञ्चदशैव च ।। ४९ ।।

विदिक्षु दशकं कुर्यात् कोणेषूपपदार्पणात्।
अत्रैकाशीतिभिर्द्रव्यैः पूर्ववत् पूरयेद् घटान् ।। ५० ।।

शिष्टांश्चतुश्चत्वारिंशत्पूरयेद् शुद्धवारिभिः।
यद्वा साकपुटे वीथीं मृजेत् पञ्चपुटान्तरे ।। ५१ ।।

पञ्चविंशतिकान्यत्र नव संकल्प्यतेष्वथ।
कोणखण्डानि सम्मार्ज्य मध्यदिक्संस्थितेष्वथ ।। ५२ ।।

मध्यदिग्विहितैर्द्रव्यैस्सम्पूर्य स्नपयेद्विभुम्।
त्रिधा निगदिते क्षेत्रे स्नपनन्तूत्तमाधमम् ।। ५३ ।।

पञ्चविंशोत्तरशतैर्घटैरेवमुदीरितम्।
वक्ष्ये द्विधाथ गदितं स्नानमुत्तमकल्पकम् ।। ५४ ।।

त्रयोदशपुटे क्षेत्रे चतस्रो वीथिका मृजेत्।
पञ्चविंशतिमध्येऽत्र दिक्षु पञ्चदशार्पयेत् ।। ५५ ।।

कोणस्थनवकेष्वन्तर्लुप्ता त्रित्रिपदानि च।
षट्कान्यापादयेदेवं नवोत्तरशते विधिः ।। ५६ ।।

सर्वरत्नोदकै र्ब्राह्मं मध्यगं पूरयेद् घटम्।
तत्राष्टौदलगान् कुम्भान् गव्याद्यैः परिपूरयेत् ।। ५७ ।।

पञ्चगव्यं ततः क्षीरं दधिसर्पिमधूनि च।
गौलेक्षु जलतैलानि दिग्विदिक्रमतस्सुधीः ।। ५८ ।।

परितः षोडशघटेष्वष्ट दिग्विदिशागतान्।
निशा सगन्धामलकफलतोयकषायकैः ।। ५९ ।।

कौशकाशोदरामञ्जदूर्वातोयैः प्रपूरयेत्।
तदन्तरालगानष्टशर्वशक्रान्तरादितः ।। ६० ।।

पूरयेद् गन्धयुगलैस्सोमेशानन्तरावधि।
काश्मीरचन्दनाम्भोभिर्वानरागरुवारिभिः ।। ६१ ।।

मुरमांसीजलेनाथो ह्रीवेरघनपाथसा।
प्लवचोराम्बुना पश्चात् कर्पूरैरलजलेन च ।। ६२ ।।

कुष्ठजातीफलोदेन द्विलवङ्गत्वगम्भसा।
तद्बहिश्चाष्टखण्डेषु ब्रह्मकुम्भान् प्रपूरयेत् ।। ६३ ।।

न्यग्रोधौदुम्बरादीनां पल्लवैर्दिग्विदिक्रमात्।
षट्सप्ततिघटान् शिष्टान् शुद्धादेनैव पूरयेत् ।। ६४ ।।

मूलेन सर्वानापूर्य समभ्यर्च्याधिवास्य च।
मन्त्रैः पूर्वोदितैर्देवं स्नपयेत् पूरणक्रमात् ।। ६५ ।।

एवं नवोतरश्तैः स्नपनं परिकीर्त्तितम्।
क्षेत्रेऽस्मिन् पञ्चदशके पदानि चतुरो मृजेत् ।। ६६ ।।

अन्तः कोणगते द्वे च तत्पार्श्वाशागते उभे।
कोणस्थनवकेष्वन्तर्द्विग्गते च पदे मृजेत् ।। ६७ ।।

एकादशचतुर्दिक्षु सप्त सप्त विदिक्ष्वपि।
पदानिस्युर्द्रव्यपूर्त्तिः स्नपनाद्यं तु पूर्ववत् ।। ६८ ।।

सप्तोत्तरनवतीभिर्घटैरेवं समीरितम्।
एवं द्विधा सम्प्रदिष्टं स्नानमुत्तमकल्पकम् ।। ६९ ।।

एकादशपुटे क्षेत्रे नवानां नवकं नयेत्।
ब्रह्मकुम्भघृतं तत्र परितोऽष्टघटेष्वथ ।। ७० ।।

गोमूत्रं गोमयं क्षीरं दधि दिक्षु विदिक्ष्वथ।
गोरोचनाम्बुकौशं च रत्नोदं गन्धवारि च ।। ७१ ।।

क्षौद्रं गुलं कषायं च बीजं दिक्षु बहिः क्रमात्।
मृज्जलं तिलतोयं च पुष्पं स्वर्णं विदिक्ष्वपि ।। ७२ ।।

चतुष्षष्टिघटाम्भस्तद्वत् शुद्धाद्भिः परिपूरयेत्।
पूर्त्तिक्रमात्पुर्वमन्त्रैः पूर्ववत् स्नपयेद्विभुम् ।। ७३ ।।

एकाशीति घटैरेवं स्नपनं समुदाहृतम्।
क्षेत्रेऽस्मिन् बाह्यखण्डेषु द्वौ द्वौ सम्मार्जयेत् पदे ।। ७४ ।।

अन्तः कोणगते दिक्षु कोणेष्वन्तर्दिशागते।
द्रव्याण्येषां पूरणं च स्नपनं पूर्ववत् स्मृतम् ।। ७५ ।।

पञ्चषष्टिघटैरेवं स्नपयेद् वा षडाननम्।
एवं द्विधा निगदितं मध्यमन्त्वभिषेचनम् ।। ७६ ।।

षट् दिक्षुमध्ये च नवकं कोणेषु च चतुष्टयम्।
पञ्चाशत्येकहीने तु क्षेत्रे नवपुटे नयेत् ।। ७७ ।।

गव्यं मध्ये मधुक्षीरं घृतं दधि दिशासु च।
गुलमिक्षुरसं तैलं केरोदं विदिशि क्रमात् ।। ७८ ।।

पाद्यमर्घ्यं तथाचामं कषायं रत्नवारि च।
फलं गन्धं ततः पुष्पं बाह्ये दिक्षु विदिक्षु च ।। ७९ ।।

दूर्वासिद्धार्थकतिलगिरिमृत्पाद्यमुच्यते।
द्वात्रिंशत्कलशानत्र शुद्धाद्भिः पूरयेत् ।। ८० ।।

क्षेत्रे सप्तपुटे वीथीः मार्जयेत् चतुरः क्रमात्।
दिक्षु त्रिकं विदिक्ष्वैकं नवान्तः पञ्चविंशतौ ।। ८१ ।।

गव्याद्यैः पूजयेच्छिष्टानष्टशुद्धोदकेन च।
पूर्त्युद्धाराभिषेकाश्च पूर्ववत् सर्वमाचरेत् ।। ८२ ।।

पञ्चविंशत् घटैरेभिर्द्रव्यैरेवाभिषेचयेत्।
एवं द्विधा निगदितमधमञ्चाभिषेचनम् ।। ८३ ।।

आरभ्य पञ्चदशकं पञ्चविंशति पश्चिमम्।
नवधा कथितन्त्वेवं स्नपनं तारकद्विषः ।। ८४ ।।

आस्तीर्य पीठमभ्यर्च्य घटान् संसाद्य च क्रमात्।
संस्कृत्य च यथान्यायं सम्पूज्याभ्यर्चयेत् क्रमात् ।। ८५ ।।

मूर्त्याह्वाने षण्मुखान्ते मूर्तये नमसा वदेत्।
कृत्वा कलावाहनां च विद्यादेहं समाह्वयेत् ।। ८६ ।।

कृत्वा तत्वावाहनां च व्यष्ट्याद्यं तु समाह्वयेत्।
आद्यं तत्त्वं समुच्चार्य भूयोऽपि नमसा ततः ।। ८७ ।।

रहितं तत् समुच्चार्य षष्ठैः प्राणादिकान् वदेत्।
स्वाहान्तान् हृद्विहीनं तत् तत्त्वं पूर्ववदुच्चरेत् ।। ८८ ।।

षष्ठैर्जीवमिति प्रोक्त्वा वदेदावाहयामि च।
सं सों ह्लीं हंस इत्युक्त्वा समावाह्य समाहितः ।। ८९ ।।

तारं बीजं हृत्पराय शान्त्यतीतात्मने पुनः।
षष्ट्यात्मने नमः प्रोक्त्वा व्यापयेन्मनुनामुना ।। ९० ।।

हृदिस्थ मन्त्रं जप्त्वैवमन्यैरप्यभिवाहयेत्।
विशाखेन्द्रौ ततस्कन्दः कुमारस्सनदादिकः ।। ९१ ।।

कथितामूर्त्तयस्त्वेतास्तत्वेष्वन्येषु योजयेत्।
व्यष्टिरेवं समुद्दिष्टा तत्त्वैः पञ्चभिरन्वितैः ।। ९२ ।।

समूर्त्तिभिस्समष्टिं च योजयेत् पूर्ववर्त्मना।
मूलेनाथ समावाह्य प्रविन्यस्य षडध्वनः ।। ९३ ।।

अभ्यर्च्येतरखण्डानप्यधिवासहुतं चरेत्।
मध्यात् प्राग्दक्षवरुणसौम्येशानलदिक्क्रमात् ।। ९४ ।।

विहृत्य षट्सु कुण्डेषु स्वद्रव्यमनुना वसुम्।
कृत्वाचाग्निमुखं पक्वं गायत्र्या जुहुयुः क्रमात् ।। ९५ ।।

पूजामन्त्राज्यहोमान्ते स्वद्रव्यहवनाणुभिः।
स्वस्वानलेघृतं हुत्वा षट्कृत्वाथ सकृत् सकृत् ।। ९६ ।।

मूलमन्त्रोपचारद्वादशाख्याणुभिर्घृतम्।
हुत्वाथ समिदादीनि सप्तद्रव्याणि होमयेत् ।। ९७ ।।

समिदाज्यचरून् लाजान् तिलांश्च यवसर्षपान्।
अष्टोत्तरशतं हुत्वा पूर्णां द्रव्यान्तरे हुनेत् ।। ९८ ।।

ततः स्विष्टकृदादीनि हुत्वाशेषं समापयेत्।
कदम्बजा वा बिल्वोत्था मध्येऽत्र समिधः स्मृताः ।। ९९ ।।

पलाशखदिराश्वत्थप्लक्षन्यग्रोधसम्भवाः।
औदुम्बराश्च समिधः प्रागादिषु समीरिताः ।। १०० ।।

सनत्कुमारः पूर्वस्यां दक्षिणे स्कन्दसंज्ञितम्।
प्रत्यग्बाणो हेमचूड उदीच्यां परिकीर्तिताः ।। १०१ ।।

ऐशान्यां भद्रसेनस्तु भवपुत्रोऽनले स्मृतः।
मध्ये मूलमनुः प्रोक्ता द्रव्यहोमाणव स्मृताः ।। १०२ ।।

संख्याष्टविंशतिर्यद्वा बलिमन्त्रमतो ब्रुवे।
इमं स्कन्दं पुरस्कृत्य ये देवा ये च राक्षसाः ।। १०३ ।।

ये भूता ये सुरा सर्वे पिशाचाः किन्नरास्तथा।
गन्धर्वाः पन्नगा नाग ऋषयश्च खगा अपि ।। १०४ ।।

यक्षाश्च मातरस्सर्वे चारकाः परमात्मनः।
ते सर्वे प्रतिगृह्णन्तु तेभ्यस्ताभ्यो नमो नमः ।। १०५ ।।

शुद्धा भवन्तु मन्त्रे तु षष्ठे शास्त्रोदितादिके।
गुहो ज्ञेयोऽधिवासाद्ये संयोज्यः क्रौञ्चघातनः ।। १०६ ।।

अधिवास्यैवमाचार्यः परेद्युः स्नपयेद् विभुम्।
पूरणक्रममाश्रित्य स्नपयेत् सर्वकुम्भकैः ।। १०७ ।।

कुम्भेशं ब्रह्मकुम्भेन नीत्वाथो मण्डपावधि।
पूर्वस्थाने प्रविन्यस्य सिञ्चेदन्त्यघटात्पुटः ।। १०८ ।।

मादिबीजसमायुक्ताः प्राणाद्या नागपूर्वकाः।
न्यस्तव्या स्वोदितस्थाने पञ्चतत्त्वैरपि क्रमात् ।। १०९ ।।

समूर्त्तिभिर्हृदम्भोजदिङ्मध्येषु प्रविन्यसेत्।
ततः षडध्वनो न्यस्य सम्पूज्यैनं प्रसादयेत् ।। ११० ।।

।। इति कलशचन्द्रिकायां स्कन्दभागे द्वितीयपटलः समाप्तः ।।

# कलशचन्द्रिकायां स्कन्दभागः
# तृतीयः पटलः

अथ पूजां प्रवक्ष्यामि देहसंस्कारपूर्वकम्।
गुरुवन्दनपूर्वं तु कृत्वा तालत्रयादिकम् ।। १ ।।

शैवोदितेन मार्गेण कृत्वा भूतलयादिकम्।
प्राणानायम्य मूलेन पीठन्यासं विधाय च ।। २ ।।

मन्त्रोदयं ततः कृत्वा कुर्याच्च करभावनाम्।
ताररुद्धेन मूलेन करयोरुभयोरपि ।। ३ ।।

तले पृष्ठे च पार्श्वे च व्याप्य मन्त्राक्षरैः पुनः।
अङ्गुष्ठादितलान्तं च न्यसेद्वा षण्मनूनपि ।। ४ ।।

तद्वदङ्गानि विन्यस्य षडध्वन्यासमाचरेत्।
बीजान्ते हृत्परायेति शान्त्यतीतकलात्मने ।। ५ ।।

हृदन्तो मनुरुद्धार्य एवमन्यान् समुद्धरेत्।
हौमादिकं स्मृतं बीजं शान्त्यतीतादिकाः कलाः ।। ६ ।।

पञ्चविंशतितत्वानि सामान्यविहितानि तु।
तारं बीजं हृत्पराय शान्त्यतीतात्मने नमः ।। ७ ।।

मनुः प्राथमिकोऽयं स्यात् अन्यानप्येवमुद्धरेत्।
षष्ट्याद्याः पञ्चमूर्त्तिर्वा तत्त्वानां पञ्चके क्रमात् ।। ८ ।।

ङेन्ता अन्त्यनतेः पूर्वमेकैकां परियोजयेत्।
नादिप्रतीपमूलार्णैः बीजमेषां प्रकीर्त्तितम् ।। ९ ।।

मूलषष्ठार्णबीजाढ्यं क्षेत्रज्ञात्मा च ङेयुतम्।
नमोऽन्तो व्यापने मन्त्रः तत्त्वन्यासोऽयमीरितः ।। १० ।।

अत्र षण्मुखमूर्त्तिं तु पूर्ववत् योजयेत्तु वा।
भूरादि लोकत्रितयं वां वीं वूं बीजसंयुतम् ।। ११ ।।

आत्मने नमसा युक्तं नाभेराचरणं न्यसेत्।
आनाभिकण्ठादाकण्ठमूर्ध्नोर्ध्वा लौकिकः स्मृतः ।। १२ ।।

वर्णाध्वामूलपुटितैर्लिप्यार्णैर्न्यास ईरितः।
मूर्ध्नीक्षणास्यहृन्नाभि गुह्यजानुपदद्वये ।। १३ ।।

जिनार्णस्य पदान्यष्ट विन्यसेच्च पदाध्वनि।
तमर्वेत्यादि पञ्चद्भिर्विन्यसेत् कादिपञ्चके ।। १४ ।।

गायत्र्या पूर्ववन्न्यस्य ताराद्यैर्न्नमसान्वितैः।
षण्मन्त्रैः कास्य हृद्गुह्यजानुपदेषु विन्यसेत् ।। १५ ।।

मन्त्राध्वायं कास्यहृत्सु गुह्यजानुपदद्वये।
ताररुद्धैर्मूलवर्णैस्सृष्ट्यादिक्रमतो न्यसेत् ।। १६ ।।

सतारैर्मूलवर्णैस्तु षडङ्गानि समाचरेत्।
सर्ग्यन्त्योस्त्रे नेत्रयुग्मे नकारो बीजमीरितः ।। १७ ।।

अस्त्रनेत्रक्रमेणैवमङ्गन्यासोऽयमीरितः।
लान्तं च दितिं प्रोक्त्वा भुवेनात्यन्तमुद्धरेत् ।। १८ ।।

तारपूर्वो मूलमनुऋष्यादीन् कथयाम्यथ।
सनत्कुमारगायत्री सुब्रह्मण्याश्च कीर्त्तिताः ।। १९ ।।

महामकुटशोभितं मणिविभूषणैर्भूषितम्।
प्रफुल्लनवचम्पकाकलितमालिकालङ्कृतम् ।। २० ।।

करात्तपविशाक्तिकं वयसि षोडशे संस्थितम्।
गुहं घुसृणभासुरं स्मरतु पीतवासोवसम् ।। २१ ।।

पविशक्तिवरां दधतः कटितटन्यस्तवामकरकमलम्।
अथवा स्मरतु षडास्यं विगतं पविशक्ति धृतकराभ्यां वा ।। २२ ।।

ध्यात्त्वैवं हृदयाम्भोजे मानसैरुपहारकैः।
यथाशक्तिमनुं जप्त्वा बाह्यपूजां समाचरेत् ।। २३ ।।

शङ्खं विधिवदापूर्य पीठन्यासक्रमेण च।
देहे पीठं समाराध्य जलगन्धार्त्तवारिभिः ।। २४ ।।

आधारेषु महोऽभ्यर्च्य चैकीकृत्य प्लुतादिना।
उपहृत्य हृदम्भोजे यष्ट्वा मूलाङ्गहेतिभिः ।। २५ ।।

मूर्ध्नि पुष्पाञ्जलिं कृत्वा पञ्चकृत्वस्सुधामयम्।
निवेद्य बुद्ध्या दत्त्वार्घ्यं तन्मयोऽस्त्रेण गोपयेत् ।। २६ ।।

पूजाक्रमतो वक्ष्ये संक्षेपात् षण्मुखस्य च।
अभ्यर्च्याधारशक्त्यादि नवशक्त्यन्तिमं क्रमात् ।। २७ ।।

मण्डलात्मत्रयान्तेऽथ समष्टिमनुनार्चयेत्।
विद्याशान्तिः स्मृतिर्मेधा प्राज्ञाकान्तिर्द्युतिर्धृतिः ।। २८ ।।

व्यापिनी नवमी चासां बीजानि व्यापकाक्षरैः।
पाशान्वितैर्लार्णहीनैः क्षार्णयुक्तैः प्रकल्पयेत् ।। २९ ।।

सर्वशक्त्यन्ततोयुक्तमयूरार्णान् समुद्धरेत्।
कमलासनाय नमः समष्टिः तारपूर्वकः ।। ३० ।।

एवं पीठं समभ्यर्च्य मूर्त्तिमूलेन कल्पयेत्।
त्रितारमुपचाराणुं मूलमन्त्रं समुच्चरन् ।। ३१ ।।

सम्बुद्ध्या भगच्छब्दमागच्छ द्वितयं तथा।
षण्मुखमावाहयामीत्यावाहनमनुस्मृतः ।। ३२ ।।

आवाहितो भवमुखैः पञ्चमुद्रां प्रदर्श्य च।
षडध्वनो वा विन्यस्येल्लिपितत्त्वाक्षरैस्तु वा ।। ३३ ।।

साङ्गीकृत्य ततो ध्यायेत् पूर्वचोदित वर्त्मना।
आसनस्वागते तद्वत् समर्प्यार्घ्याद्युपाहृतीः ।। ३४ ।।

तारोपचारमूलैस्तन्मूर्त्यङ्गाशाधिपैर्यजेत्।
सनत्कुमारं स्कन्दं च सबाणं हेमचूडकम् ।। ३५ ।।

दिशास्वीशादिकोणेषु भद्रसेनमतः परम्।
भवपुत्रं देवसेनां देवयानीं क्रमाद् यजेत् ।। ३६ ।।

अग्नीशरक्षो मरुति दिक्ष्वग्रेङ्गानि पूजयेत्।
इन्द्रवज्राद्यर्चनान्ते धूर्त्तसेनं शिवे यजेत् ।। ३७ ।।

सम्पूज्यैवं निवेद्याथ तच्छेषं सर्वमाचरेत्।
उत्सवं च ततः कुर्यात् सप्ताहादिविधानतः ॥ ३८ ॥

बीजवापेन सहितं बलिना चोत्सवेन च।
कुर्याद् यद्वा ध्वजेनैवं बलिना भौतिकेन च ॥ ३९ ॥

ध्वजं संस्थापयेदग्रे मयूरवरलक्षितम्।
सायं प्रातर्बलिं कुर्यात् कथ्यते भौतिको बलिः ॥ ४० ॥

सुकुमारभद्रसेनौ गर्भद्वारस्य पार्श्वयोः।
पूजयित्वा बलिंदत्वा गेहद्वारस्य पार्श्वयोः ॥ ४१ ॥

दक्षिणे वज्रहस्तं तु खड्गपाणिनमुत्तरे।
मयूरं मण्डपेऽभ्यर्च्य दक्षिणे विघ्नशङ्करौ ॥ ४२ ॥

दिक्पान् मातॄंश्च शास्तारं दुर्गास्कन्दधनाधिपान्।
धूर्त्तसेनं च सम्पूज्य बहिर्द्वारि प्रपूजयेत् ॥ ४३ ॥

अग्निकेतुं सूर्यकेतुं तद्बाह्ये बलिमाहरेत्।
देवसेनापतिं प्राच्यामाग्नेय्यामग्निलोचनम् ॥ ४४ ॥

दक्षिणे दण्डहस्तं तु नैऋत्यामसिधारिणम्।
वारुण्यां पाशपालं तु वायव्यां ध्वजशेखरम् ॥ ४५ ॥

उत्तरे गदिनं तद्वदीशे शूलविलासिनम्।
विप्रप्रियञ्चोपरिष्टात् ऐशान्यामेव पूजयेत् ॥ ४६ ॥

नवदिक्षु बलिं दद्याद् द्वितीयावरणेऽमुना।
षट्कोटिगणेभ्यो नमः। इति ॥ ४७ ॥

देवग्रहादयः पूज्यास्तृतीयावरणे बहिः।
देवासुरग्रहादीनां बलिदाने तदा तदा ।। ४८ ।।

अष्टासु दिक्षु तद्बाह्ये बलिं दद्यादनेन तु।
स्कन्दपार्षदेभ्यो नमः। इति ।। ४९ ।।

अथासाद्य महापीठं दशदिक्षु बलिं हरेत्।
शूरसेनोग्रसेनौ च शिखिसेनो जगद्युतः ।। ५० ।।

सेनोमहादिसेनश्च चण्डसेनः ततः परः।
कुब्धक्रूरजयस्कन्दपूर्वास्सेना दशेरिताः ।। ५१ ।।

अथवा भूतिदाद्याश्च पिङ्गलस्कन्दसेनकौ।
पूजनीया महापीठे तत्रैवाभ्यां बलिं हरेत् ।। ५२ ।।

ये भूता स्कन्दसेनस्य पार्षदा बलिभोजिनः।
तृप्यन्तु ते मुदं यान्तु सद्भ्योऽसद्भ्यो नमो नमः ।। ५३ ।।

ग्रहेभ्यस्कन्दपार्षदेभ्यश्च सर्वेभ्यस्तेभ्यस्ताभ्यो नमे नमः। इति ।। ५४ ।।

ऐशान्यां क्षेत्रपालाय बलिं दत्वा प्रदक्षिणम्।
प्रविश्य च समायम्य नमस्कृत्य क्षमापयेत् ।। ५५ ।।

औत्सवेषु दिनेष्वेवं सायं प्रातर्बलिं हरेत्।
यात्रा पूर्वदिने रात्रौ शय्यायामधिवास्य च ।। ५६ ।।

तीर्थस्नानं ततः कृत्वा परेद्युमूलबिम्बके।
नियोज्य कलशैर्देवमभिषिच्य प्रसादयेत् ।। ५७ ।।

एवं संक्षेपतः प्रोक्तस्नपनप्रक्रिया क्रमः।
क्षेत्रग्रामालयेनायं तारकासुरविद्विषः ॥

॥ इति कलशचन्द्रिकायां स्कन्दभागे तृतीयपटलः समाप्तं ॥

॥ स्कान्दभागः समाप्तम् ॥

# ।। कलशचन्द्रिकायां गाणपतिभागः।।

## ।। प्रथमः पटलः।।

।। श्रीगणपतये नमः।।

मदलालसलोलम्बमालालोचनलोलुपम्।
वरवारणवक्त्राब्जं वन्देऽहं परमं महः ।। १ ।।

गणाधिपस्य वक्ष्येऽहं स्नपनप्रक्रियाक्रमम्।
बीजवापविशुद्ध्यादिसहितं चोत्सवान्वितम् ।। २ ।।

तिलमुद्गासुरीशाली माषश्यामकुलस्थकाः।
प्रियङ्गुशिम्बनिष्पावा बीजानां दशकं स्मृतम् ।। ३ ।।

अस्त्रेण क्षालयेत् तोयैः पयसा मूलमन्त्रतः।
वापोमूलेन गायत्र्या सेचनं समुदीरितम् ।। ४ ।।

ब्रह्मभूतेन्द्रगन्धर्वयक्षरक्षः पिशाचकाः।
एते बलिभुजः प्रोक्ता बलिद्रव्यं शिवोक्तवत् ।। ५ ।।

प्रासादशोधने मुष्टिर्दर्भब्रह्मद्रुशाखया।
अघोरं वा पाशुपतमन्त्रं होमे च पूजने ।। ६ ।।

समिदाज्यानाज्यदूर्वा शन्नो देव्याणुना हुनेत्।
बीजार्पणे गेहशुद्धौ विशेषोऽयं प्रदर्शितः ।। ७ ।।

चतुश्शुद्धिं ततः कृत्वा धारां कुर्याद् यथाविधि।
सावित्रीं पञ्चतत्त्वानि पावमानं च पौरुषम् ।। ८ ।।

रौद्रोदितानि सूक्तानि गणानांन्त्वाद्यृचस्तथा।
धारायामवगाहे च जपेयुरभितो द्विचाः ।। ९ ।।

पञ्चकं च ततः कृत्वाथारभेत हुतक्रियाम्।
प्रासाददक्षदिग्भागे कुण्डं खण्डेन्दुसन्निभम् ।। १० ।।

कृत्वा संस्कृत्य तत्राग्निं जनयेद् वक्ष्यमाणतः।
ह्रीं बीजेन समावाह्य शक्तिं तत्र समर्चयेत् ।। ११ ।।

गर्भाधानादिनामान्तान्यङ्गबीजैश्च पञ्चभिः।
अस्त्रबीजेनोपनीतिनिष्ठाः कुर्यात् क्रियास्त्रयः ।। १२ ।।

एवमष्टक्रियाः कृत्वा कर्मशेषं समाप्य च।
स्वसूत्ररीत्याथारभ्य पीठाज्याहुतिपश्चिमम् ।। १३ ।।

कृत्वा कर्म हुनेत् पक्वं गायत्र्या निजया पुनः।
पूजामन्त्राज्य होमान्ते षण्मन्त्रैस्तु पृथक् पृथक् ।। १४ ।।

घृतमष्टशतं हुत्वा मूलेन समिदादिकम्।
समिदाज्य चरूं लाजान् पृथकापूपलड्डुकान् ।। १५ ।।

जुहुयात् शष्कुलीनाज्यं विल्वजा स्समिधस्मृताः।
दधि क्षीरं मधु घृतं व्याहृतिभिः क्रमात् हुनेत् ।। १६ ।।

अष्टोत्तरशतं पश्चात् गणानान्त्वाद्यृचा गुलम्।
मूलेन पञ्चगव्यं च हुनेदष्टोत्तरशतम् ।। १७ ।।

वौषडन्तेनमूलेन पूर्णां द्रव्यान्तरे हुनेत्।
कृत्वा स्विष्टकृदादीनि होमशेषं समाप्य च ।। १८ ।।

सम्पातं कलशे सिक्त्वा कलशेनाभिषेचयेत्।
कुण्डे तुर्यश्रकेशार्वे जनयित्वा विभावसुम् ।। १९ ।।

षण्मन्त्राज्याहुतिनिष्ठं कर्मकृत्वात्र पूर्ववत्।
प्लक्षौदुम्बरवटजाः पैप्पलास्समिधस्तथा ।। २० ।।

घृतान्नदुर्वालाजांश्च सर्षपांश्च तिलान् यवान्।
व्रीहीन् सक्तून् हुनेदाज्यमष्टोत्तरशतं पृथक् ।। २१ ।।

गायत्रया जुहुयात् पूर्णां तया शेषं समाप्य च।
कलशेनाभिषिञ्चेत् तं शान्तिहोमोऽयमीरितः ।। २२ ।।

विनायकाय विद्महे, गजवक्त्राय धीमहे।
तन्नो विघ्नः प्रचोदयात् गायत्री तारपूर्विका।
विघ्नो विनायको वीरश्शूरो वरद संज्ञितः ।। २३ ।।

तथा हस्तिमुखश्चेति षण्मन्त्रास्तारपूर्विकाः।
स चतुर्थी नमो निष्ठा स्वाहान्ता होमकर्मणि ।। २४ ।।

अग्रे तुर्यश्रकुण्डेऽग्निं जनयित्वाथ पूर्ववत्।
विधाय तत्वहवनं कलशेनाभिषेचयेत् ।। २५ ।।

कलशस्यानुरूपेण कृत्वा मण्डपमग्रतः।
एकं वा पञ्च वा कुर्यात् कलशस्यानुरूपतः ।। २६ ।।

कुण्डान्यलिन्दभागे तु तुर्यश्रादिक्रमेण च।

सूत्रेण दाम्ना संवेष्ट्य व्यास्ताव्यस्तध्रुवेण च ।। २७ ।।

तोरेणान्यथ वेदाद्यैस्संस्थाप्याभ्यर्चयेच्च तैः।
प्लक्षौदुम्बरपैप्पलवटा वै तोरणद्रुमाः ।। २८ ।।

संस्थाप्य प्रयजेदष्टध्वजान् दिक्पतिनामाभिः।
द्वारकुम्भेषु सम्पूज्या वज्रदन्तादयः क्रमात् ।। २९ ।।

वज्रदन्तो गजास्यश्च भीमश्च महिषास्यकः।
मेघनाद विरूपाक्षौ वरदस्सर्वभक्षकः ।। ३० ।।

मुष्ट्याद्यैर्मार्जनाद्यं तु कृत्वा स्वस्वजपाणुभिः।
मध्ये शक्तिं समभ्यर्च्य तिष्ठन्मूलमनुं जपन् ।। ३१ ।।

त्रिधा विकीर्य विकिरान् कुर्यात्तालत्रयादिकम्।
स्वस्तिके प्रयजेत् पात्रे वरुणं गालिताम्भसि ।। ३२ ।।

ऐशान्यां कल्पिते पीठे हेमरत्नादि संयुते।
घटोदे विधिवद् विघ्नं आवाह्य न्यस्य पूजयेत् ।। ३३ ।।

तत्पार्श्वेऽस्त्रेण करके पूजयेदस्त्रदेवताम्।
अथाग्निजननं कृत्वा पूर्वचोदितवर्त्मना ।। ३४ ।।

कुम्भेशं च परिभ्रम्य कर्करीजलधारया।
विकिरोपरिविन्यस्य यजेत् तत्त्वत्रयान्वितम् ।। ३५ ।।

।। इति कलशचन्द्रिकायां गणपतिभागे प्रथमपटलः समाप्तः ।।

# कलशचन्द्रिकायां गणपतिभागः
# द्वितीयः पटलः

अथ सस्कृत्य तां वेदिं पदानि परिकल्पयेत्।
दिक्षु त्रिकं विदिक्ष्वैकं नवान्तौ पञ्चविंशतौ ।। १ ।।

षट्दिक्षु मध्ये नवकं कोणेषु च चतुष्टयम्।
एकोनपञ्चाशत्कोणेषु च क्षेत्रे नवपुटे विधिः ।। २ ।।

एकाशीतौ रुद्रपुटे नवानां नवकं नयेत्।
एवं सप्तदशद्रव्ये क्षेत्रे त्रिविधमीरितम् ।। ३ ।।

दिक्षु त्रिकं विदिक्ष्वैकमन्तरेकं च मध्यतः।
नवकं चाष्टकं त्रिकं बहिर्दिग्विदिगन्तरा ।। ४ ।।

पुटैस्तु पञ्चदशभिरष्टोत्तरशते विधिः।
दिक्षु कोणेषु नवकान्यन्तरेकं च मध्यतः ।। ५ ।।

बहिः कोणेषु नवकं दिक्षु द्वादशकत्रयम्।
पुटैरेकोनविंशद्भिः सार्धद्विशतके विधिः ।। ६ ।।

दैविके सप्तदशकान्यष्टैकं मध्यतो बहिः।
कोणेषु सप्तदशकं दिक्षु पञ्चकृतित्रयम् ।। ७ ।।

पुटैकोनत्रिंशद्भिरेवं पञ्चशते विधिः।
तत्त्वद्रव्ये क्षेत्रमेवं त्रिविधं समुदीरितम् ।। ८ ।।

गन्धैर्द्वादशरत्नैस्तु मध्यकुम्भं प्रपूरयेत्।
पाद्याद्यैरन्तरारभ्य पूरयेद् दिग्विदिक्रमात् ।। ९ ।।

पाद्यार्घ्याचमनं क्षीरं दधिसर्पिर्मधूनि च।
पञ्चगव्यं फलं भक्ष्यं यवव्रीहितिलानि च ।। १० ।।

रत्नं स्वर्णं विद्रुमं च द्रव्यं सप्तदशेरितम्।
सगुलाद्यैरेभिरेव द्रव्याणां पञ्चविंशतिम् ।। ११ ।।

गुलप्रसूनदूर्वाश्च धातुमृत्कुशमौक्तिकाः।
नालिकेरपयश्चेति द्रव्यं द्विविधमीरितम् ।। १२ ।।

तिलसर्षपदूर्वादिमृद्भिः पाद्यमुदीरितम्।
तिलराजी क्षीरदधि कुशाक्षतयवोदकैः ।। १३ ।।

अर्घ्यमाचमनं जातीतक्कोलैस्सलवङ्ककैः।
आम्रं सपनसं धात्री डाडिमं भव्यविल्वके ।। १४ ।।

कादलं नालिकेरं च फलाष्टकमुदीरितम्।
पद्मरागं च वैडूर्यं इन्द्रनीलं च गारुडम् ।। १५ ।।

पुष्यकं ब्रह्मरागं च वज्रमुक्ताफलं तथा।
सूर्यकान्तं चन्द्रकान्तमयस्कान्तं प्रवालकम् ।। १६ ।।

रत्नानि द्वादशैतानि ब्राह्मे रत्नोदकेऽपि च।
जाति सौगन्धिकं पद्मं मल्लिकाबकुलं तथा ।। १७ ।।

चम्पकं नान्दिकार्त्तद्वयं च कुसुमोदकम्।
मनश्शिलां हरीतालमञ्जनं श्यामसीसके ।। १८ ।।

रोचनास्ससौराष्ट्री गैरिकं चेतिधातवः।
क्षेत्रे तीर्थाद्रिमातङ्गवृषशृङ्गखुवेश्मजाः ।। १९ ।।

वन्मीकवेदिसम्भूते न्यसेदत्राष्टमूर्त्तिकाः।
द्रव्याणां देवता वक्ष्ये मध्यकुम्भादितः क्रमात् ।। २० ।।

गणेशपितृवाक् स्वाहा सोमरुद्राग्नि षण्मुखाः।
सावित्री च गणेशश्च गजास्यः पवनस्तथा ।। २१ ।।

विश्वे देवा यमश्चाथ धनदः पद्मसम्भवः।
रविर्दुर्गा हरिर्लक्ष्मीर्मुनयस्सप्तभूरपि ।। २२ ।।

वह्निर्जलेशस्सोमश्च देवताः परिकीर्त्तिताः।
कुम्भानां क्षालनं सूत्रं वेष्टनं धूपनं तथा ।। २३ ।।

सादनं कूर्चविन्यासं तारेणैव समाचरेत्।
द्रव्याणां देवतामन्त्रैस्तत्तद्रव्याणि विन्यसेत् ।। २४ ।।

अस्त्रेण पल्लवाद्यं च कलशेषु प्रविन्यसेत्।
कलशक्षेत्ररचना यद्वान्यास्यात् शिवोदिता ।। २५ ।।

पूर्त्तिक्रमेणैवोद्धृत्य पाद्याद्यैर्ब्रह्मपश्चिमैः।
स्नपयेत् स्वोदितैर्मन्त्रैस्तत्तत्परिघटैस्सह ।। २६ ।।

इदं विष्णुरापोहिष्ठाद्यापः पुनन्तु पूर्वकः।
आप्याायस्व दधिक्राविणस्सावित्री मधुपूर्वकाः ।। २७ ।।

अग्निमीले मानस्तोके मूलमन्त्रस्तथौषधीः।
आशुश्शिशानः पितरो हिरण्यवर्णादिपूर्वकः ।। २८ ।।

ब्रह्मजज्ञरक्षोहणमग्नेत्वं पूर्वकास्तथा।
पुष्पावतीशन्नोदेवीर्देवस्य त्वोद्धृतासि च ।। २९ ।।

अग्न आयाहि समुद्रज्येष्ठायाः फलिनीरिति।
गणानां त्वेत्यृचा ब्राह्मं स्नानमन्त्राः प्रकीर्त्तिताः ।। ३० ।।

पीठार्चनादिवर्णाब्जयजनान्तं विधाय च।
गणेशमूर्त्तिमावाह्य कलास्तस्मिन्नियोज्य च ।। ३१ ।।

विद्यादेहं समभ्यर्च्य तत्त्वव्यष्ट्याद्यमाह्वयेत्।
पञ्चविंशतितत्त्वानामाह्वानं विष्णुवत् स्मृतम् ।। ३२ ।।

आद्यं प्रोक्तेषु तत्त्वेषु भूयस्तन्नमसा विना।
वरदस्य प्राणापाने त्याद्यं स्वाहान्तमुच्चरेत् ।। ३३ ।।

पुनस्तत्त्वन्नतः पूर्वं वरदाय समन्वितम्।
प्रोक्त्वाथ वरदस्यान्ते जीवमावाहयामि च ।। ३४ ।।

इत्युद्धरेत् पूर्वमनुं विशेषोऽन्येषु कथ्यते।
शूरं वीरं विनायकं विघ्नमन्येषु योजयेत् ।। ३५ ।।

प्रोक्त्वात्मनेन्तं तत्त्वं च मूर्त्तिनाम च ङेयुतम्।
हृदन्तोऽयं व्यापनेऽणुस्समष्टिं चैवमुद्धरेत् ।। ३६ ।।

पल्लवाद्यं निधायाथ मूलेनावाह्य सादरम्।
षडध्वन्यसनाद्यं तु विधायावरणैर्यजेत् ।। ३७ ।।

आवाह्य खण्डशो यष्ट्वाथाधिवासहुतं चरेत्।
विहृत्य वह्निं कुम्भेषु कृत्वाचाग्निमुखं क्रमात् ।। ३८ ।।

गायत्र्या जुहुयुः पक्वं षण्मन्त्रैश्च घृतं हुनेत्।
मूलेन मूर्त्तिमन्त्रैश्च जुहुयुः गुरुमूर्त्तिपाः ।। ३९ ।।

समिदाज्यचरून् लाजान् पृथुकानि च लण्डुकान्।
अपूपान् शष्कुनीज्यमष्टोत्तरशतं पृथक् ।। ४० ।।

समिधो विल्वद्विजखदिरबोधिशमीमयाः।
मध्ये दिक्षु च नव चेत् स्मृताः कोणेषु विल्वजाः ।। ४१ ।।

गणं जयैकदंष्ट्रगजवक्त्रवराह्वयाः।
दिक्षुकोणेषु विघ्नेशवीरलम्बोदराह्वयाः ।। ४२ ।।

भक्तप्रियश्च स्वाहान्तास्ताराद्या बीजपूर्वकाः।
आदिष्वङ्कत्रयोदशस्वरैर्बिन्दुयुतैर्दिशि ।। ४३ ।।

अग्न्यद्रिरुद्रतिथ्यर्णैर्बीजानि विदिशि क्रमात्।
एकीकृत्वाथ सम्पातं समर्प्यालिन्दसंस्थितः ।। ४४ ।।

एकीकृत्य समभ्यर्च्य निवेद्य बलिमाहरेत्।
देवं विघ्नं पुरस्कृत्य इत्याद्येनाष्टदिक्षु च।
आचम्यान्तः प्रविश्याथ पूजाशेषं समापयेत् ।। ४५ ।।

शुद्धेत्यादौ प्रभुपदं तद्वच्छास्त्रोदितादिके।
अधिवासः कृतेत्यादौ योजयेद् गणनायकम् ।। ४६ ।।

एवं सम्पूज्य कलशं श्वोभूते सुदिने गुरुः।

पूर्त्तिक्रमेणैवोद्धृत्य पाद्याद्यैः ब्रह्मपश्चिमैः ।। ४७ ।।

संस्नाप्य जीवन्यासाद्यं कृत्वा प्राच्य निवेद्य च।
प्रसन्नयजनं कृत्त्वा स्तुत्त्वा नत्त्वा क्षमापयेत् ।। ४८ ।।

।। इति कलशचन्द्रिकायां गणपतिभागे द्वितीयपटलः समाप्तः ।।

# कलशचन्द्रिकायां गणपतिभागः
# तृतीयः पटलः

अथ पूजाविधिं वक्ष्ये देहसंस्कारपूर्वकम्।
अस्त्रेण करशुद्धिं च कृत्वा तालत्रयादिकम् ।। १ ।।

शिववद् भूतशुद्धिं च प्राणानायम्य मूलतः।
देहे पीठे मनून्यस्य व्याप्य मूलेन हस्तयोः ।। २ ।।

न्यसेदङ्गानि युगपदङ्गुष्ठादितलान्तिमम्।
मन्त्रोदयं ततः कृत्त्वा विन्यसेच्च षडध्वनः ।। ३ ।।

कलाध्वा भुवनाध्वा च शिववत् परिकीर्त्तितः।
पञ्चविंशति तत्त्वानि वैष्णवोक्तानि विन्यसेत् ।। ४ ।।

सबिन्दु विश्वरुद्रेषु वह्न्याद्यङ्गबीजकैः।
हृत्परायार्ण संयुक्तैः शान्त्यतीतादिकैः क्रमात् ।। ५ ।।

पञ्चतत्त्वानि कास्यादि पञ्चस्थानेषु विन्यसेत्।
लिप्यर्णैर्मूलपुटितैर्वर्णाध्वायमुदीरितः ।। ६ ।।

मूर्धाक्षिवक्त्रहृन्नाभि गुह्यजानुपदेष्वपि।
विन्यसेन्निजगायत्री पदान्येवं पदाभिधः ।। ७ ।।

गणानामाद्यृचा व्याप्य षण्मन्त्रैस्तु प्रविन्यसेत्।
कास्य हृन्नाभ्यन्धुपत्सु मन्त्राध्वायं प्रदर्शितः ।। ८ ।।

एवं विन्यस्य संजाप्यं भावयेद् देवतात्मताम्।
स्पर्शार्णेषु तृतीयार्णमादिस्वरलवान्वितः ।। ९ ।।

ताराद्यमुद्धरेदेवं मूलमन्त्र उदाहृतः।
मनुस्वरयुतो यद्वा समुद्धार्यो मनुः स्वयम् ।। १० ।।

ऋषिस्तु गणकः च्छन्दो गायत्री निचृदादिका।
मन्वोर्गणपतिस्तद्वद्देवता च समीरितः ।। ११ ।।

नयनाद्भिरसादित्यतिथ्यब्भिः सर्गिणा तथा।
युतेन गेनास्त्रनिष्ठं षडङ्गानि प्रकल्पयेत् ।। १२ ।।

सृष्ट्यादिक्रमतो न्यस्येत् षण्मन्त्रैः कादिषु क्रमात्।
दन्तापूपाक्षमालापरशुकलितदोस्तुन्दिलश्चन्द्रमौलिः त्र्यक्षः
पद्मासनस्थस्तरुणतरणिभा बीजपूरात्तनासः।
यद्वा दोर्भिश्चतुर्भिः स्वरदवरदपाशाङ्कुशान् सन्दधानो
विघ्नो वः कर्णतालाहतसकल विपत्पीतवासा श्रियेऽस्तु
दरं विधिवदापूर्य कुर्यात् पीठार्चनं ततः ।। १३ ।।

आधारशक्त्यादिगणं सामान्यविधिना यजेत्।
नवशक्त्यर्चनादूर्ध्वं मण्डलाद्यर्चनं स्मृतम् ।। १४ ।।

तीव्रा च ज्वालिनी नन्दा भोगदा कामरूपिणी।
उग्रा तेजोवतीसत्या नवमी विघ्ननाशिनी ।। १५ ।।

सतारं ह्लीं विघ्नबीजं शक्त्यर्णं सर्वपूर्वकम्।
उक्त्वा कमलासनाय वर्णान्ते नतिमुच्चरेत् ।। १६ ।।

समष्टिरेवमुद्धार्याः पीठमन्त्रास्समीरिताः।
विघ्नमूर्त्तिं प्रकल्प्यात्र तस्यामावाह्य मूलतः ।। १७ ।।

लिपितत्त्वाध्वनो न्यस्य दत्त्वा पाद्यादिकं पुनः।
तारोपचारमूलैश्च मूर्त्तावङ्गायुधैर्यजेत् ।। १८ ।।

अग्नीशरक्षोवाय्वग्रेष्वङ्गान्यस्त्रं चतुर्द्दिशि।
पूर्वाग्न्यादिक्रमेणाथ मूर्त्तिनामष्टकं यजेत् ।। १९ ।।

गणं जयश्च विघ्नेश एकदंष्ट्रसमाह्वयः।
वरदो भक्तप्रियश्च लम्बोदरसमाह्वयः ।। २० ।।

वरदो भक्तप्रियश्च ताराद्या ङेनमोन्विताः।
पुनरिद्रादिवज्रादीन् शार्वे कुम्भोदरं यजेत् ।। २१ ।।

एवमिष्ट्वा निवेद्यान्नं हुत्त्वा दत्त्वा बलिं पुनः।
विसृज्यान्नं प्रसाद्यैनं स्तुत्वा नत्वा क्षमापयेत् ।। २२ ।।

उत्सवं च ततः कुर्याद् ध्वजं संस्थाप्य पूर्वतः।
महाचाषसमायुक्तं पताकादि विभूषितम् ।। २३ ।।

त्रिसन्ध्यं पूजयेद् देवं सायं प्रातर्बलिं हरेत्।
वज्रदन्तं गजास्यं च यजेद् द्वारस्य पार्श्वयोः ।। २४ ।।

महाचाषं मण्डपे च तत्तत्पारिषदैस्सह।
विघ्नेशं दक्षिणेशं च दक्षिणद्वारि पूजयेत् ।। २५ ।।

दिक्पान् मातॄंश्च शास्तारं दुर्गां स्कन्दं धनेश्वरम्।
ईशे कुम्भोदरं यष्ट्वा बहिर्द्वारस्य पार्श्वयोः ।। २६ ।।

चण्डविक्रमसंज्ञं च तथाविघ्नकराह्वयम्।
अथाष्टदिक्षु सम्पूज्याः क्रमेणैव गणेश्वराः ।। २७ ।।

वज्रदन्तगजास्यौ च सभीममहिषास्यकौ।
मेघनाद विरूपाक्षौ वरदस्सर्वभक्षकः ।। २८ ।।

एषां पार्षदेभ्यश्च द्वितीयावरणे यजेत्।
देवासुरग्रहाः पूज्याः तृतीयावरणे ततः ।। २९ ।।

मूलेन दिग्बलिः कार्यः अष्टदिक्षु तदा तदा।
महापीठस्याष्टदिक्षु गजवक्त्रं गणेशकम् ।। ३० ।।

विनायकं सचण्डविक्रमं विघ्नकरं तथा।
ससर्पमेखलं शूर्पकर्णं वै नागदन्तिनम् ।। ३१ ।।

अधश्चरुद्रवक्त्रजं विघ्नसेनं तदूर्ध्वतः।
यजेत् क्षेत्रपमैशान्यामेवं भूतबलिः स्मृतः ।। ३२ ।।

पञ्चाहादिविधानेन कृत्वैवं शयने पुनः।
शाययित्वा विधानेन श्वोभूते दिवसे पुनः ।। ३३ ।।

यात्रासम्पातसंयुक्तं चूर्णैरुन्मृज्य तं पुनः।
संस्नाप्य तीर्थसलिले सम्पूज्यान्तः प्रवेश्य च ।। ३४ ।।

संयोज्य मूलबिम्बे तं संस्नाप्य कलशैरथ।
इष्ट्वा प्रसाद्य भूतेभ्यो बलिं दत्वा क्षमापयेत् ।। ३५ ।।

बीजवापाद्युत्सवान्ता होमकर्म समन्विता।
कलशप्रक्रिया त्वेवं गणेशस्य प्रदर्शिता ।। ३६ ।।

।। इति कलशचन्द्रिकायां गणपतिभागे तृतीयपटलः समाप्तः ।।

।। गाणपतिभागः समाप्तम् ।।

# ।। कलशचन्द्रिकायां शास्तृभागः ।।

## ।। प्रथमः पटलः।।

।। श्रीगणपतये नमः।।

जननी कमलानाथो जनकश्चाम्बिकापतिः।
यस्याभूतां स वो भूयाद् भूतये भूतवल्लभः ।। १ ।।

बीजार्पणं समारभ्य स्नपनान्तं क्रियाक्रमम्।
भूतनाथस्य संक्षेपाद्वक्ष्ये बालहितेप्सया ।। २ ।।

बीजानि शालयोमाषयवकङ्कुतिलास्तथा।
निष्पाव खल्वगोधूमवेणुनीवारका अपि ।। ३ ।।

एतानि दशबीजानि जलैरस्त्रेण मूलतः।
पयसा क्षालयित्वाथ कृत्वा नान्दीमुखादिकम् ।। ४ ।।

पालिकास्वर्चयेद् विष्णुं सोमं बीजेषु पूजयेत्।
वापयित्वाथमूलेन गायत्र्या तानि सेचयेत् ।। ५ ।।

भूतानाथाय सङ्कीर्त्य विद्महे पदमुद्धरेत्।
भवपुत्राय च पदं धीमहे तदनन्तरम् ।। ६ ।।

तन्नश्शास्तेति सम्प्रोक्त्वा वदेद् भूयः प्रचोदयात्।
मूलेनावाह्य सम्पूज्य तत्तद्ग्रहसमीरितैः ।। ७ ।।

भूतकूरादिभिर्द्रव्यैः भूतादिभ्यो बलिं हरेत्।
भूतपिशाचायक्षनागाश्च ब्रह्मरुद्रविष्ण्वन्ताः ।। ८ ।।

पितरश्च सर्वदेवा सम्प्रोक्ता बलिभुजो ग्रहास्तु नव।
दध्यन्तैः पैतृकं चान्त्यं कुसुमान्नेन दापयेत् ।। ९ ।।

एवं बीजार्पणं कृत्वा प्रासादं शोधयेत् ततः।
पलाशशाखादर्भोत्थ मुष्ट्याद्यं शिवोक्तवत् ।। १० ।।

सर्षपेऽस्त्रं जपेद् गव्ये पञ्चतत्त्वमिहोदितम्।
तन्तुवेष्टनपूर्वं तु मार्जनाद्यं यथाविधि ।। ११ ।।

मूलेन गेहपूजान्तं कृत्वास्त्रकलशं यजेत्।
ज्वलपूर्वं घृणिपदं वदेत् वर्मास्त्रपश्चिमम् ।। १२ ।।

अस्त्राणुरर्णैरङ्गानि शास्तुः पीठे समर्चयेत्।
राक्षोघ्नेऽस्त्रेण जुहुयात् चतुर्द्रव्यं सपूर्णकम् ।। १३ ।।

भूर्भुवस्ववौंषडिति पूर्णामन्त्रः प्रकीर्त्तितः।
पलाशाश्वत्थदर्भाग्रैस्सम्पातेनोक्षयेद् गृहम् ।। १४ ।।

पूजयेद् वास्तुकलशं प्रत्यक्स्थं मूलतोऽपरम्।
शन्नोदेव्या चतुर्द्रव्यमनया वा जिनार्णतः ।। १५ ।।

हुत्वा दूर्वास्समाप्याथ कृत्वा वास्तुबलिं ततः।
कलशाद्भिस्समभ्युक्ष्य तण्डुलैश्च विकीर्य च ।। १६ ।।

पुण्याहतोयैरभ्युक्ष्य रक्षेत्तालत्रयादिना।
चतुश्शुद्धिं ततः कृत्वा धारां कुर्याद् दिनत्रये ।। १७ ।।

इषु तत्त्वं च सावित्रीं वेदाद्यं यात ऊतिकम्।
सूक्तं रौद्रं वैष्णवं च पावमानान्त्यसूक्तके ॥ १८ ॥

जप्त्वाथ गाहयेद् गव्यैर्जपन्नेव मनूनमून्।
पञ्चकैरभिषिच्याथ प्रारभेथ हुतक्रियाम् ॥ १९ ॥

प्रासाद याम्यदिग्भागे कुण्डं खण्डेन्दुसन्निभम्।
कृत्वा संशोध्य विधिवत् पूजयेत् भुवनेश्वरीम् ॥ २० ॥

तारेण निक्षिपेदग्निं कुर्यादष्टक्रियाः क्रमात्।
षण्मन्त्रैर्मूलताराभ्यां पुर्णाहुतिसमन्वितम् ॥ २१ ॥

संरवन्तशास्तृगोप्तृप्रभुदीप्तृप्रशास्तृकाः।
षण्मन्त्रा ङे नमोन्तास्युः स्वाहान्ता होमकर्मणि ॥ २२ ॥

आरभ्य होमं पक्वात् प्राक्कर्म कृत्वा यथाविधि।
जुहुयाद् गायत्र्या पक्वमन्ते व्याहृतियुक्तया ॥ २३ ॥

पूजाणुभिश्च षण्मन्त्रैः षड्विंशन्मनुभिस्तथा।
सकृत् सकृत् घृतं हुत्वा षण्मन्त्रैर्द्युत्तरं शतम् ॥ २४ ॥

आहृत्य होमयेद्बिल्वसमिदाद्यं पृथक् पृथक्।
समिदाज्य चरूल्लाजान् सर्षपांश्च यवांस्तिलान् ॥ २५ ॥

ततोघृतक्षीरदधि क्षौद्राण्यष्टशतं पृथक्।
व्याहृतीभिः क्रमाद् हुत्वा दूर्वास्त्रिमधुराप्लुताः ॥ २६ ॥

मृत्युञ्जयेन मन्त्रेण त्रिसहस्रं हुनेत्ततः।
पूर्णां द्रव्यान्तरे दद्याद् व्याहृत्या वौषडन्तया ॥ २७ ॥

होमं समाप्य देवं तु कलशेनाभिषेचयेत्।
नीलाश्व श्वेतमातङ्गश्यामः पीतानुलेपनः ।। २८ ।।

रत्नमालाधरश्शूरा मायामातृगणप्रियाः।
कालवासा गणाध्यक्षः खड्गहस्तो धनुर्धरः ।। २९ ।।

सहजायो जनावेशः साधुस्संसार रक्षकः।
षड्विंशन्मनवस्त्वेते ङे स्वाहान्ता ध्रुवादिकाः ।। ३० ।।

रेवन्त प्रोक्तनामायं होमस्त्वेवं प्रकीर्त्तितः।
ईशे तुर्यश्रकुण्डेऽथ जनयित्वा विभावसुम् ।। ३१ ।।

षड्विंशन्मनुहोमान्तं सर्वं कृत्वा च पूर्ववत्।
गायत्र्याष्टसहस्रं तु तिलमाज्यं हुनेत् पृथक् ।। ३२ ।।

होमं समाप्य भूतेशं कलशेनाभिषेचयेत्।
अग्रे तुर्यश्रकुण्डेऽग्निं जनयित्वाथ पूर्ववत् ।। ३३ ।।

होमकर्म समारभ्य सम्पूज्य कलशं पुनः।
षड्विंशन्मनुहोमान्ते तत्त्वैर्हुत्वा यथा विधि ।। ३४ ।।

समिदादिचतुर्द्रव्यं हुत्वा शेषं समाप्य च।
कलशेन यथान्यायमभिषिञ्चेत् प्रभापतिम् ।। ३५ ।।

यथार्हं मण्डपं कृत्वा कुर्यात्तस्याथ संस्क्रियाम्।
सप्लक्षौदुम्बरवटपिप्पलास्तोरण द्रुमाः ।। ३६ ।।

आर्यश्शास्तागुहासन्नस्सेनान्यस्तोरणेश्वराः।
वेदानामद्वृचामन्ते योज्या स्थापनकर्मणि ।। ३७ ।।

ऋग्भिर्विना वाहनादौ स्थाप्याश्चाष्टध्वजा अपि।
गोप्ता च पिङ्गलाक्षश्च वीरसेनश्च शाम्भवः ।। ३८ ।।

त्रिनेत्रशूलिनौ दक्षभीमरूपौ ध्वजाधिपाः।
वीरबाहुमहावीरौ विद्युद्दन्तविलासिनौ ।। ३९ ।।

सतीक्ष्णतीक्ष्णदन्तौ च सताराक्षभवोद्भवौ।
एतेऽर्च्याद्वारकुम्भेषु मुष्ट्याद्यैश्शोधयेत्ततः ।। ४० ।।

मध्ये शक्तिं तथा देवं दिक्षु दिङ्नायकान् यजेत्।
विकिरौघं विकीर्याथ मूलेनास्त्रेण गोपयेत् ।। ४१ ।।

वर्धनीमपि सम्पूज्य कुम्भेशं कर्करीमपि।
विधिवज्जनयित्वाग्निं पदविन्यासमाचरेत् ।। ४२ ।।

।। इति कलशचन्द्रिकायां शास्तृभागे प्रथमपटलः समाप्तः ।।

# कलशचन्द्रिकायां शास्तृभागः
# द्वितीयः पटलः

उत्तमं पञ्चविंशद्भिरधमन्नवभिस्तथा।
मध्यमं सप्तदशभिर्द्रव्यैस्तु कलशस्त्रिधा ।। १ ।।

पञ्चविंशतिकाद्येषु पञ्चविंशद्भिरेव वा।
द्रव्यैः पञ्चशतान्तेषु कलशेषु प्रपूरयेत् ।। २ ।।

पञ्चविंशतिकान्यत्र वक्ष्ये द्रव्याण्यथ क्रमात्।
रजनीगन्धपुष्पैश्च तिलाक्षतसमायुतैः ।। ३ ।।

षण्मूलमन्त्रप्रणवैः पाद्यं ब्राह्मे प्रपूरयेत्।
अर्घ्यमाचमनं गव्यं गोमूत्रं च पयोदधि ।। ४ ।।

घृतं मधुपदिक्कोणेष्वेतान्यन्तः प्रपूरयेत्।
बाह्ये दिक्षु कषायं च फलमार्जनमृत्तिके ।। ५ ।।

कोणेषु सक्तुगन्धोद पुष्पोदकयवोदकान्।
गुलमिक्षुरसं तद्वन्नालिकेर रसोदके ।। ६ ।।

रत्नोदं लोहतोयं च तीर्थाम्भोऽक्षतवारि च।
बाह्येऽन्तरालकुम्भेषु द्रव्याण्येतानि पूरयेत् ।। ७ ।।

गन्धपुष्पकुशक्षीरदधिसिद्धार्थसंयुतम्।
अर्घ्यमाचमनं गन्धलवङ्काब्जैरुदीरितम् ।। ८ ।।

क्वाथः क्षीरिद्रुमत्वग्भिः कदल्याद्यैः फलोदकम्।
कदली पनसं चाम्रं बिल्वमामलकं तथा ।। ९ ।।

बीजपूरं च भव्यं च नालिकेरं फलाष्टकम्।
इन्द्रवल्लीसदा भद्रा कुशगन्धाक्षतार्त्तवैः ।। १० ।।

मार्जनं कथितन्त्वेवं निशाङ्कुरसमन्वितैः।
नद्याश्च तीरयोर्वेद्यां वृषशृङ्गे च पर्वते ।। २१ ।।

क्षेत्रोत्थितं समाहृत्य मृदां षट्कं प्रविन्यसेत्।
उशीरं कुङ्कुमं चैव मांसी मलयजं तथा ।। २२ ।।

मुखारि गदाभांसिगन्धोदकमुदीरितम्।
जातिस्त्रीमल्लिकाकुन्दनन्द्यावर्त्ताब्जचम्पकैः ।। २३ ।।

यूथिका बकुलाभ्यां तु कर्त्तव्यं कुसुमोदकम्।
वज्रमौक्तिकवैडूर्यपद्मरागप्रवालकैः ।। २४ ।।

कुर्याद् रत्नोदकं यद्वा गृह्णीयात् तानि शैववत्।
सुवर्णं रजतं ताम्रमायसं त्रपुसीसकम् ।। २५ ।।

लोहानि चैवं सम्प्रोक्तं द्रव्याणां पञ्चविंशति।
शास्तृपितृस्वाहा श्रीवाक् सावित्र्यश्च तदनुगायत्री ।। २६ ।।

सोमोरुद्राग्निगुहाविश्वेविघ्नेश्वरोमही।
ज्येष्ठा इन्द्रसप्तर्षिर्मरुन्नृसिंहदुर्गासविष्णुविधिधनदाः ।। २७ ।।

पुरुषो निर्ऋतिश्चैताः पाद्यादिद्रव्यदेवताः।
कथिताः ताराद्या ङे नमोन्तास्युरेते द्रव्यार्पणेऽणवः ।। २८ ।।

द्रव्येषु पञ्चविंशत्सु पाद्यादियवपश्चिमम्।
प्रोक्तं सप्तदशद्रव्यं मध्यमं परिकीर्त्तितम् ॥ २९ ॥

पाद्यादिमधुनिष्ठं तु द्रव्याणां नवकं स्मृतम्।
शराद्रिद्वारवर्गेषु कलशेषु प्रपूरयेत् ॥ ३० ॥

अत्र सप्तदशाद्रव्यैर्न्नवद्रव्यैर्विधानवित्।
नवखण्डेषु मध्यस्थब्रह्मकुम्भेषु पूरयेत् ॥ ३१ ॥

पीठपूजां समारभ्य लिपि पद्मार्चनावधि।
कृत्वास्मिन् शास्तृमूर्त्तिं च समावाह्य कला अपि ॥ ३२ ॥

विद्यादेहं समावाह्य तत्त्वानां पञ्चविंशतिम्।
ततो व्यष्टिसमष्टीश्च समावाह्यात्र योजयेत्।
तत्त्वान्युक्त्वा पञ्च पुनर्न्नमसारहितान्यपि ॥ ३३ ॥

दीप्तृप्रभुगोप्तृशास्तृरेवन्तानामितीरयेत्।
पुनः प्राणादिकान् प्रोक्त्वा तत्त्वान्युक्त्वा हृदा विना ॥ ३४ ॥

षष्ठ्यन्तं मूर्त्तिनामोक्त्वा जीवमावाहयामि च।
सं सोमित्यादिकं प्रोक्त्वा समावाह्य यथाक्रमम् ॥ ३५ ॥

तत्त्वं हृदा विना मूर्त्तिमात्मने नतिसंयुतम्।
उच्चार्य व्यापयेद् व्यष्टिस्समष्टिश्चैवमीरिता ॥ ३६ ॥

पल्लवाद्यं पुनर्न्यस्त्वा मूलेनात्राभिवाह्य च।
षडध्वनः प्रविन्यस्य पूजयेच्च यथाविधि ॥ ३७ ॥

प्रतिखण्डमथापूर्य सम्पूज्य हुतमाचरेत्।

एकं वा पञ्च वा कुर्यादाधिवासनिकं हुतम् ।। ३८ ।।

यद्वा कलशबाहुल्ये होमानि नव कारयेत्।
स्वस्वकुण्डेषु सम्पूज्य शक्तिं वह्निं विहृत्य च ।। ३९ ।।

क्षिपेदग्निं भूभुवस्वर्मनुना स्वस्वकुण्डके।
उपस्थायाग्निमीलेत्यद्यृचाग्निं गुरुमूर्त्तिपाः ।। ४० ।।

अन्वाधानं समारभ्य षड्विंशन्मनुहोमतः।
परं मन्त्रैरष्टभिश्च समिदाद्यष्टकं हुनेत् ।। ४१ ।।

समिदाज्यचरूल्लाजान् व्रीहींच यवसर्षपान्।
तिलाश्च मन्त्रा मूलश्च गायत्रीहृदयन्तथा ।। ४२ ।।

शास्त्रार्यभवशरस्वस्वदिक्पालणव स्मृताः।
शास्त्रगोप्तृ भूताधिपति पदान् ङे नतिसंयुतान् ।। ४३ ।।

उद्धार्य तारनत्योऽस्तु मध्ये संयोजयेत्ततः।
एवं शास्तृमनुप्रोक्त स्वाहान्तो होमकर्मणि ।। ४४ ।।

आर्याय विश्व गोप्ते च सेनान्यै नम ईरयेत्।
तारादिवाह्निजायान्तं आर्यमन्त्रोऽयमीरितः ।। ४५ ।।

नमस्ते भवपुत्राय भवतुल्यबलाय च।
वरदाय नमस्तेऽस्तु भक्तप्रियहिताय वै ।। ४६ ।।

ताराद्यो वह्निजायान्तो भवमन्त्रोऽयमीरितः।
ओं शराय नमस्तेऽस्तु नमः कुक्कुटकेतवे ।। ४७ ।।

नमस्ते नीलरूपाय नीलाम्बरधराय च।

भूयो नमो नम स्वाहेत्येवं शरमनुः स्मृतः ।। ४८ ।।

स्वाधिपत्यायुधवाहपरिवारसमन्वितम्।
स ङे हृद्वह्निजायान्तन्तारादद्यन्तु समुद्धरेत् ।। ४९ ।।

ब्रह्मेन्द्रादिक्क्रमेणैवं दिक्पालाणव ईरिताः।
पलाशखदिराश्वत्थप्लक्षन्यग्रोधजास्तथा ।। ५० ।।

उदुम्बरद्रुबिल्वापामार्गजास्समिधस्मृताः।
होमं समाप्य सम्पातं कलशेषु समार्प्य च ।। ५१ ।।

सम्पूज्यान्नं विवेद्याथ बलिं दत्त्वाधिवासयेत्।
देवं शास्तारमित्यादि बलिमन्त्र उदाहृतः ।। ५२ ।।

योज्यश्शुद्धादिके शास्तुः प्रभुश्शास्त्रोदितादिके।
अधिवासादिको मन्त्रो भूतवल्लभ इत्यपि ।। ५३ ।।

कलशानधिवास्यैवं विनिद्रस्तु निशां नयेत्।
अथ प्रभातकृत्यान्ते कलशं किञ्चिदर्च्य च।
अन्तः प्रविश्य देवेशं पीठार्चादिसमन्वितम् ।। ५४ ।।

आवाह्य सकलीकृत्य स्नपनाय समारभेत्।
षण्मूलमन्त्रप्रणवैः पूर्वं ब्रह्मघटेन तु ।। ५५ ।।

भूतनाथं स्नापयित्वा जीवन्यासादिकं चरेत्।
कुम्भेशं ब्रह्मकुम्भेन नीत्वा देवालयावधि ।। ५६ ।।

मण्डपं तु समासाद्य पूर्वस्थाने प्रविन्यसेत्।
षण्मूलमन्त्र प्रणवैरर्घ्याद्यैः पूरणक्रमात् ।। ५७ ।।

स्नपयेद्विधिना पश्चात्तत्तत्परिघटैस्सह।
सावित्री गन्धवाराद्य आप्यायस्तु समादिकम् ।। ५८ ।।

दधिक्राविणश्शुक्रमसीति मन्त्रस्तु गव्यके।
समस्ते तु समस्तास्युर्व्यस्तेऽप्येते निजोदिताः ।। ५९ ।।

मधुपाते त्यृचो जप्या मधुना सेक कर्मणि।
अन्त्यखण्डान्त्यकुम्भेन नीत्वा पश्चात् घटेश्वरम् ।। ६० ।।

तेनाभिषिच्य विधिवत् पुनरन्येन सेचयेत्।
एवं संस्नाप्य सम्पूज्य निवेद्य प्रीणयेद् विभुम् ।। ६१ ।।

।। इति कलशचन्द्रिकायां शास्तृभागे द्वितीयपटलः समाप्तः ।।

# कलशचन्द्रिकायां शास्तृभागः
# तृतीयः पटलः

शिवोदितेन मार्गेण भूतशुद्धिं विधाय च।
पीठन्यासादिकं कृत्वा करन्यासं समाचरेत् ।। १ ।।

ताराभिरुद्धमूलेन व्यापयेत् करयोर्द्वयोः।
षण्मन्त्रैरङ्गमन्त्रैरप्यङ्गुष्ठादि तलान्तिमम् ।। २ ।।

न्यस्त्वा देहे त्रिशोव्याप्य षडध्वन्यासमाचरेत्।
होमादिबीजयुक्ताभिश्शान्त्यतीतकलादिभिः ।। ३ ।।

कास्यादिषु प्रविन्यस्तेत् कलाध्वायमुदीरितः।
पञ्चविंशतितत्त्वानि तत्तत्स्थाने प्रवेन्यसेत् ।। ४ ।।

शान्त्यतीतादिभिस्तद्वदात्मने नतिसंयुतैः।
घ्रोमादिबीजसंयुक्तैस्तत्त्वानां पञ्चकं स्मृतम् ।। ५ ।।

अन्यबीजेषु संयोज्या रुद्रेष्वगन्यादिमत्स्वराः।
भूराद्यास्तु त्रयो लोका घ्रां घ्रीं घ्रूं बीजसंयुताः ।। ६ ।।

मूलसम्पुटितैर्वर्णैर्वर्णाध्वा सम्प्रदर्शितः।
न्यसेत् पदानि गायत्र्याः कास्यादिषु पदाध्वनि ।। ७ ।।

यात ऊप्याद्यृचो न्यस्येत् पञ्चकास्यादिषु क्रमात्।
षण्मन्त्रैः कास्य हृन्नाभिगुह्यपदेषु च ।। ८ ।।

एवं मन्त्राध्वविन्यासष्पडध्वान इतीरिताः।

मूर्धाक्षिवक्त्रहृन्नाभिगुह्यजानुपदेष्वथ ॥ ९ ॥

मूलमन्त्राक्षरैर्न्यस्येत् सृष्टिस्थित्यादिमार्गातः।
अङ्गुष्ठाद्यमथोन्यस्य देवतात्मा मनुं जपेत् ॥ १० ॥

गान्तोऽग्नि वाम कर्णार्धचन्द्रवान् बीजमुच्यते।
बीजं नमः परायेति प्रोक्त्वा गोप्ते पदं वदेत् ॥ ११ ॥

तारादिको मूलमनुस्सम्प्रोक्तस्सर्व सिद्धिदः।
ऋष्याद्या अस्य देवं तं गायत्रीशास्तृसंज्ञिताः ॥ १२ ॥

षण्मन्त्रैर्विन्यसेत् ङेन्तैष्षडङ्गानि क्रमात् सुधीः।
अंसालम्बिसुवर्णकुण्डलधरं नीलोल्लसत्कुन्तलम् ॥ १३ ॥

श्यामं श्यामलवाससं लसितपार्श्वस्थप्रभासत्यकम्।
रक्तालेपनभूषणोज्वलतरं सिंहासनाध्यासिनम् ॥ १४ ॥

वन्दे वाणशरासनोद्यतकरं भूतेशमीशात्मजम्।
नत्यन्तस्तार एवात्र मनुस्यादौपचारिकः ॥ १५ ॥

शङ्खं सम्पूर्यविधिवदात्मार्चां प्रविधाय च।
पूजास्थानं समासाद्य ततः पूजां समारभेत् ॥ १६ ॥

गुर्वादिपद्मपर्यन्तमिष्ट्वा सामान्यवर्त्मना।
नवशक्तीर्मण्डलाद्यं समष्टिं च क्रमाद्यजेत् ॥ १७ ॥

दीप्तिस्सत्या प्रभा कान्तिर्विभूतिर्विमला तथा।
संसृष्टिश्चैव पुष्टिश्च नवमी कामरूपिणी ॥ १८



प्रभूतसिंहासनाय सर्वशक्तिमयाय च।

पद्माय नम इत्येवं समष्टिस्तारपूर्विकः ।। १९ ।।

आवाह्य देवं विन्यस्य लिपितत्त्वानि वाऽध्वनः।
अक्षराङ्गानि विन्यस्य दत्वा अर्घ्याद्युपहारकान् ।। २० ।।

तारोपचारमूलार्णैस्संपूज्याङ्गायुधैस्तनौ।
अग्नीशरक्षो मरुति वर्मान्तानि पुरो भुवि ।। २१ ।।

नेत्रद्वयं यजेदस्त्रं चतुर्दिक्षु ततो बहिः।
दिक्ष्वर्च्याः क्षुरिकाखड्गशरासनशराः क्रमात् ।। २२ ।।

ङे हुं फं नतिनिष्ठाश्च शार्वेमधुकरं यजेत्।
अग्नौ शम्बरमिद्रादीन् वज्रादींस्तद्बहिर्यजेत् ।। २३ ।।

घोषवन्तं यजेदीशे जलगन्धार्त्तवारिभिः।
ततो हविर्न्निवेद्याथ हुत्वा दत्त्वा बलिं पुनः ।। २४ ।।

विसृज्यान्नं प्रसाद्यैनं पूजाशेषं समापयेत्।
उत्सवं च ततः कुर्यादश्वध्वज समन्वितम् ।। २५ ।।

वाहाह्वानन्तन्मनुना पताकां शक्तिबीजतः।
त्रिसन्ध्यं पूजयेद्देवं सायं प्रातर्बलिं हरेत् ।। २६ ।।

दक्षिणे क्षुरिकापाणिं खड्गपाणिनमुत्तरे।
मण्डपेऽश्वं विघ्न शोवौ दक्षिणद्वारि पूजयेत् ।। २७ ।।

वीरबाहुं महावीरं प्रासाद द्वारपार्श्वयोः।
दिक्पान् मातृंश्च शास्तारं दुर्गां स्कन्दं धनेश्वरम् ।। २८ ।।

घोषवन्तमदित्यां च सम्पूज्याथ बहिर्व्रजेत्।

तीक्ष्णं च तीक्ष्णदंष्ट्रं च गोपुरद्वारि पूजयेत् ।। २९ ।।

गोप्तारं पिङ्गलाक्षं च वीरसेनं च शाम्भवम्।
त्रिनेत्रशूलिनौ दक्ष भीमरूपौ क्रमाद् यजेत् ।। ३० ।।

द्वितीयावरणे तत्तत्पार्षदेभ्यो बलिं हरेत्।
गोप्तृपार्षदेभ्यो नम इत्यादिर्मनुरीरितः ।। ३१ ।।

तृतीयावरणे देवग्रहादीनां बलिं हरेत्।
मूलेन दिग्बलिः कार्यो देवादिग्रह पूजने ।। ३२ ।।

बलिपीठं समासाद्य दिक्ष्वष्टास्वथ ऊर्ध्वतः।
वीरबाहुमहावीरौ विद्युद्दन्तविलासिनौ ।। ३३ ।।

सतीक्ष्ण तीक्ष्णदन्तेन सताराक्षभवोद्भवौ।
पूर्वेश शास्तृसेनौ च सम्पूज्य बलिमाहरेत् ।। ३४ ।।

ततो यात्रादिनात् पूर्वे शय्यायां शयितं पुनः।
मूलबिम्बे नियोज्याथ यात्रा होमादिसंयुतम् ।। ३५ ।।

देवं संस्नाप्य तीर्थोदे सम्पूज्यान्तः प्रवेश्य च।
नियोज्य कौतुकान्मूले कलशैरभिषिच्य च ।। ३६ ।।

सम्पूज्य प्रीणयित्वा तं भूतेभ्यो बलिमाहरेत्।
बीजावापं समारभ्य तीर्थस्नानावसानिकम् ।। ३७ ।।

सम्प्रोक्तो भूतनाथस्य स्नपनप्रक्रियाक्रमः ।।

।। इति कलशचन्द्रिकायां शास्तृभागे तृतीयपटलः समाप्तः ।।



।। शास्तृभागः समाप्तम्।।

# ।। कलशचन्द्रिकायां कालीभागः ।।

## ।। प्रथमः पटलः।।

।। श्रीगणपतये नमः।।

जगत्रयं सन्दिधक्षोरा ब्रह्मस्थाणुजङ्गमम्।
शम्भोर्नेत्रानलोत्थं तन्महो दिशतुमङ्गलम् ।। १ ।।

शिवामहं नमस्कृत्य वक्ष्येऽस्याः कलशक्रमम्।
बीजवापविशुद्ध्यग्निकार्योत्सवसमन्वितम् ।। २ ।।

अभिषेकदिनात्पूर्वमष्टमे पञ्चमेऽह्नि वा।
उदक्लृप्ते गृहे कुर्याद्बीजवापमथो निशि ।। ३ ।।

पालिकाद्यास्त्रयो यद्वा ग्राह्याः षोडशपालिकाः।
तिलमुद्गयवव्रीहिमाषशिम्ब कुलस्थकाः ।। ४ ।।

कङ्ग्वाढकी सर्षपैश्च बीजानां दशकं स्मृतम्।
जलैरस्त्रेण पयसा शक्तिबीजेन चोक्षयेत् ।। ५ ।।

वापयेत् मूलमन्त्रेण तेनैवोक्षणमीरितम्।
ब्रह्मभूतेन्द्रगन्धर्व यक्षरक्षः पिशाचकाः ।। ६ ।।

एते बलिभुजो प्रोक्ता भूतकूरान्धसा बहिः।
सूत्रादीनथ संस्कृत्य प्रासादं शोधयेत्ततः ।। ७ ।।

अस्त्रेण सूत्रैस्संवेष्ट्य वर्मणा दर्भमालया।
पलाशशाखादर्भैस्तुमार्जयेद् वायुबीजतः ।। ८ ।।

वं बीजेन शकृत्तोयैरुक्षेदस्त्रेण सर्षपैः।
क्षिपेत् समुक्षेत् गायत्र्याः पञ्चगव्यैस्समन्ततः ।। ९ ।।

उक्षेन्मूलेन गन्धाद्भिः तेनैव विकिरैः किरेत्।
अर्चयेन्मूलतो गेहं अस्तेणास्त्रघटं यजेत् ।। १० ।।

राक्षोघ्नं च ततः कुर्यात् सामान्यविधिना सुधीः।
हुं फट् स्वाहान्तया शक्त्या चतुर्द्रव्याणि होमयेत् ।। ११ ।।

वौ षडन्तेन मूलेन पूर्णां द्रव्यान्तरे हुनेत्।
समाप्य होमं प्रासादं सम्पाताद्भिस्समुक्ष्य च ।। १२ ।।

तमग्निमीशे निक्षिप्य कुर्याद्वास्तुहुतं पुनः।
दक्षिणे कलशौ न्यस्य शान्तिमावाह्य पूजयेत् ।। १३ ।।

वास्तोष्पतेति मन्त्राभ्यां पक्वं हुत्वा घृतं हुनेत्।
वास्तोष्पते ध्रुवाद्यैश्च षट्भिर्ज्जातादिपञ्चभिः ।। १४ ।।

पञ्चभिर्ब्रह्मभिर्श्शन्नवर्गैर्स्वस्त्यादिभिस्तथा।
अष्टभिर्याजुषग्भिश्च व्याहृतिप्रणवैरपि ।। १५ ।।

चतुर्द्रव्याणि दूर्वाश्च शन्नो देव्या च होमयेत्।
होमं समाप्य विकिरेत् नमो रुद्राणुना बलिम् ।। १६ ।।

ततो वास्तुबलिं कुर्यादेकाशीतिपदान्विते।
मण्डले ब्रह्मपूर्वाभ्यो देवताभ्यो यथाविधि ।। १७ ।।

मध्येऽजं दिक्ष्वार्य कादीनिष्ट्वाथ चतुरः क्रमात्।
आपादिकान् यजेत् पश्चात् विशेषोऽत्रायमेव तु ।। १८ ।।

प्रणीताच्छेषसम्पातैरुक्षेत्तं विप्रको गृहम्।
समुक्ष्य शान्तितोयेन विकीर्य घटतण्डुलैः ।। १९ ।।

ततो नीरज्य गेहस्य वास्तुपुण्याहमाचरेत्।
प्रासादमेवं संशोध्य कुर्यात् बिम्बस्य क्षालनम् ।। २० ।।

श्रालनप्लावनस्नानमार्जनानीह शुद्धयः।
दर्भमृत्वक् जलैस्तूष्णीं घर्षणं क्षालनं स्मृतम् ।। २१ ।।

प्लावनं प्रतिमायास्तु मन्त्रध्यानपुरस्सरम्।
गन्धपुष्पाक्षतकुशा तोयैस्संसेचनं विदुः ।। २२ ।।

कुशपुष्पाक्षतस्वर्णरत्नकूर्चफलाम्बुभिः।
स्नपनं प्रतिमायास्तु सममन्त्रं स्नानमुच्यते ।। २३ ।।

पात्रे विधिवदापूर्य गन्धपुष्पफलाम्बुभिः।
सम्पूज्यमूर्त्तिपैस्सार्धमन्त्रः पुण्याहचोदितैः ।। २४ ।।

कूर्चाग्रैः प्रोक्षयेद्बिम्बमेतन्मार्जनमीरितम्।
अथ धारां प्रकुर्वीत पात्रमापूर्यपाथसा ।। २५ ।।

मत्स्ययुग्मं च सौवर्णं रजतं कच्छपद्वयम्।
समृणालं सपुष्पां च पद्मिनीन्न्यस्य तज्जले ।। २६ ।।

आवाह्य वरुणं देवीमिष्ट्वा तीर्थसमन्वितम्।
बिम्बे देवीं समावाह्य पीठपूजा पुरस्सरम् ।। २७ ।।

सकलीकृत्य संस्नाप्य सिञ्चेत्तज्जलधारया।
वेदाद्यसूक्तं रौद्रं च श्रीरुद्रं च जपेत्तदा ।। २८ ।।

समाप्य धारां सम्पूज्य निवेद्याभ्यर्च्य तोषयेत्।
ततोऽवगाहं कुर्वीत गव्यैर्गन्धजलैरपि ।। २९ ।।

जप्त्वा धारोदितान् मन्त्रानथ सम्पूजयेच्छिवाम्।
पञ्चकुम्भानथापूर्य पीठपूजापुरस्सरम् ।। ३० ।।

मूलेनावाह्य तत्त्वैश्च पञ्चभिर्मध्यतः क्रमात्।
पृथगावाह्य सम्पूज्य तारेणैकीकृतेष्वथ ।। ३१ ।।

मूलेनावाह्य सम्पूज्य सनिवेद्यं प्रतोष्य च।
पृथक्कृत्य घटैस्तत्त्वैः पञ्चभिः परमेश्वरीम् ।। ३२ ।।

अभिषिच्याभिपूज्यैनां निवेद्य परितोषयेत्।
अथारभेत् होमांस्तु प्रायश्चित्तपुरस्सरान् ।। ३३ ।।

प्रासादयाम्यदिग्भागे कुण्डं खण्डेन्दुसन्निभम्।
कृत्वा संशोध्य संस्कृत्य जनयेज्जातवेदसम् ।। ३४ ।।

तारेणायोज्य तं जीवं कृत्वा शोषादि पञ्चकम्।
शोषदाहौ पुनः कृत्वा विष्टरं तत्र विन्यसेत् ।। ३५ ।।

सम्पूज्य पीठमावाह्य शक्तिं तत्र समर्च्य च।
आनीय वह्निं संस्कृत्य समावाह्याभिपूज्य च ।। ३६ ।।

शक्तिबीजेन तद्योनौ शिवबीजधिया क्षिपेत्।
प्रज्वाल्य च परिस्तीर्य कृत्वा चाज्यस्य संस्कृतिम् ।। ३७ ।।

अभ्युक्ष्यानलमाराध्य गर्भाधानादि कल्पयेत्।
गर्भाधानं पुंसवनं सीमन्तं जातनामनी ।। ३८ ।।

अन्नप्राशनमित्येवं षट्कर्माण्यत्र कारयेत्।
समिन्निक्षेपणञ्चष्टाज्याहुती रचनं तथा ।। ३९ ।।

षडङ्गैश्च क्रमात् कुर्यात् पूर्णं मूलेन दापयेत्।
सम्पूज्य पीठमावाह्य सकलीकृत्य चेश्वरीम् ।। ४० ।।

इष्ट्वा सपरिवारान्तारव्याहृतिपूर्वकैः।
पीठमन्त्रैर्घृतं हुत्वा मूलेनाष्टशतं हुनेत् ।। ४१ ।।

ब्रह्मार्पणेनैकवारं व्याहृतिप्रणवैरपि।
हुत्वाज्यं पुनरभ्यर्च्य निष्कलीकृत्य गोपयेत् ।। ४२ ।।

एवमुत्पादिते वह्नौ सर्वहोमो विधीयते।
अथ स्वगृह्यमार्गेण समारभ्य हुतक्रियाम् ।। ४३ ।।

परिधिस्थापनात्पूर्वदक्षिणे कलशं यजेत्।
परिधिन्यसनाद्यं तु कृत्वा पीठं समर्च्य च ।। ४४ ।।

आवाह्य देवींमूलेन यष्ट्वा स परिवारकाम्।
तारव्याहृतिपूर्वैस्तु पीठमन्त्रैर्घृतं हुनेत् ।। ४५ ।।

पक्वं गायत्र्या हुत्वा पूजामन्त्रैस्सकृत् घृतम्।
औदुम्बरोत्थास्समिधोमार्गजाश्च घृतं हविः ।। ४६ ।।

अष्टाधिकसहस्रं तु मूलमन्त्रेण होमयेत्।
तिलासुरीमुद्गशालियवान्याष्टाधिकं शतम् ।। ४७ ।।

मध्वाज्य क्षीरसंसिक्ता यद्वा घृतनिमज्जिताः।
दूर्वाश्च होमयेन्मूलमनुनाष्टसहस्रकम् ।। ४८ ।।

हुत्वा चाष्टशतं भूयो दधि क्षौद्रघृतैरपि।
कृत्वास्विष्टकृदाद्यं च सम्पूज्योद्वास्य देवताम् ।। ४९ ।।

सम्पातं कलशे सिक्त्वा देवीं तेनाभिषेचयेत्।
आभाष्यरुद्र भूतायै विद्महे पदमुद्धरेत् ।। ५० ।।

प्रोक्त्वाथ शूल हस्तायै धीमहे तन्न इत्यतः।
वदेत् काली प्रचोदयात् गायत्र्यैषा समीरिता ।। ५१ ।।

ताराद्या वह्निजायान्ता होमकर्मणि कीर्त्तिता।
प्रासादस्य चतुर्दिक्षु कुण्डान्येवं प्रकल्पयेत् ।। ५२ ।।

तुर्यश्रमर्धचन्द्राभं वृत्तं पक्षोपमं क्रमात्।
तुर्यश्राण्येव कुण्डानि कल्पयेद्वा चतुर्दिशम् ।। ५३ ।।

जनयित्वाथ पूर्वेऽग्निं पूर्वोक्तेनैव वर्त्मना।
याम्यदिक्षु विहृत्याग्निं समारभ्य हुतक्रियाम् ।। ५४ ।।

पूजामन्त्राज्यहोमान्तं कृत्वा कर्म यथाविधि।
जुहुयात् पञ्चभिस्तत्वैः दुर्गाभिः पञ्चभिस्तु वा ।। ५५ ।।

आवर्त्याज्यं त्रिसहस्रं पूर्वादिषु चतुर्ष्वपि।
ततस्समित् घृतव्रीहितिललाजानि होमयेत् ।। ५६ ।।

आज्यप्लुतमूलमन्त्रेणाष्टोत्तरसहस्रकम्।
प्लक्षौदुम्बरवटजाः पैप्पलास्समिधः क्रमात् ।। ५७ ।।

ग्राह्याः प्रागादिकुण्डेषु पालाश्यः समतलेषु वा।
पयोदधिमधुघृतैः सावित्र्याष्टशतं हुनेत् ।। ५८ ।।

वौषडन्तेन मूलेन पूर्णां द्रव्यान्तरे हुनेत्।
होमं समाप्य सम्पातं कलशेषु निषिच्य च ।। ५९ ।।

अभिषिच्याथ तैर्देवीं सम्पूज्यैनां प्रसादयेत्।
प्रायश्चित्तहुतान्येवमुदितान्यागमे बुधैः ।। ६० ।।

अथेशे कल्पयेत् कुण्डं तुर्यश्रं वा त्रिकोणकम्।
तत्राग्निं जनयित्वाथ कुर्याच्छान्तिहुतं गुरुः ।। ६१ ।।

पूजामन्त्राज्यहोमान्तं कर्म कृत्वा यथोदितम्।
ऋग्भिस्तु पञ्चदशभिरियमेवादिभिर्घृतम् ।। ६२ ।।

पौरुषीभिष्षोडशभिर्हुत्वा द्रव्याणि होमयेत्।
वटजास्समिधस्सर्पिरन्नमष्टोत्तरंशतम् ।। ६३ ।।

दूर्वा गव्याप्लुता यद्वा मध्वाज्यक्षीरसेचिकाः।
लाजसिद्धार्थकयवतिलानाज्यं च मूलतः ।। ६४ ।।

द्रव्यान्तरे ददेत् पूर्णां होमशेषं समाप्य च।
हुतमन्त्राज्जपन्देवीमभिषिच्य प्रपूजयेत् ।। ६५ ।।

अथाग्रतोऽग्निं प्रजनय्यकुण्डे तुर्यश्रके योनिसमानके वा।
आरभ्य होमं कलशं समिष्ट्वा पुजाणु होमावधिकर्म कृत्वा ।।
६६ ।।

तत्वैस्तथाष्टयुतविंशतिसंख्ययाज्यम्।

भूयस्समित्घृतचरुंषि घृतं च हुत्वा ।। ६७ ।।

मूलेन तद्धवनशेषमथो समाप्य ।।

तेनाभिषिच्य कलशेन ततोऽभिपूज्य।
मन्त्री निवेद्य तनुयादथतोषपूजाम् ।।

।। इति कलशचन्द्रिकायां कालीभागे प्रथमपटलः समाप्तः ।।

# कलशचन्द्रिकायां कालीभागः
# द्वितीयः पटलः

कलशस्यानुरुपेण कृत्वा मण्डपमग्रतः।
वितानाद्यैरलङ्कृत्य कुर्यात्तस्याथ संस्क्रियाम् ।। १ ।।

संस्कृत्य सूत्रमालाद्य वर्मणास्त्रेण वेष्टयेत्।
संस्थापयेद्वारदेशे तोरणानि चतुर्दिशम् ।। २ ।।

प्लक्षौदुम्बरवटजपैप्पलानि यथाक्रमम्।
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिरिति क्रमात् ।। ३ ।।

स चतुर्थी नमोन्ताश्च ताराद्या मनवः स्मृताः।
ह्रामाद्यङ्गयुतैराभिरावाह्यभ्यर्चयेत् क्रमात् ।। ४ ।।

अष्टदिक्ष्वथ नैऋत्यामीशेस्थाप्या ध्वजा दश।
ताराद्यैस्तारक्लृप्ताङ्गैर्न्नत्यन्तैः क्षेत्रपाणुभिः ।। ५ ।।

हेतुकस्त्रिपुरान्तोऽग्नि जिह्वो वेतालजिह्वकः।
कालाक्षोऽथ करालश्च एकपात् भीमरूपकः ।। ६ ।।

आलोहश्चाष्टकोशश्च क्षेत्रपालदशेरिताः।
तोरणध्वजमूर्त्तीनां नामभिश्च बलिं हरेत् ।। ७ ।।

संस्थाप्य द्वारदेशेषु द्वौ द्वौ कुम्भौ चतुर्दिशम्।
तेषु सम्पूजयेच्छक्ती ह्रामाद्यङ्गान्विताः क्रमात् ।। ८ ।।

सुन्दरीं सुमुखीं पूर्णे विरुपां विमलां यमे।

अन्तकीं वन्दनीमाप्ये कौबेर्यां च पुरन्दरीम् ।। ९ ।।

पुरुषपूर्वमर्दिनीं च ततस्सम्पूजयेन्नदीः।
सहस्रवीचीं विमलां शतधारां प्रमोदिनीम् ।। १० ।।

तारादि ङे नमोन्ताश्च द्वारदेशे घटेष्वपि।
मण्डपं शोधयेत् पश्चात् प्रासादोक्तविधानतः ।। ११ ।।

मूलेन मध्ये सम्पूज्य तेनैव विकिरात् किरेत्।
गालिताद्भिः प्रपूर्याथ वर्धन्यां वरुणं यजेत् ।। १२ ।।

ततो घटपुटे ध्यात्त्वा मूलमध्योर्ध्वभागतः।
दशद्वादशषोडशदलान्यम्बुरुहाण्यथः ।। १३ ।।

तेजस्त्रयकलास्तेषु क्रमान्यस्याथता यजेत्।
धूम्रार्चीः प्रथमाह्त्वा च कपिलाविष्फुलिङ्गिनी ।। १४ ।।

सज्वालोत्कर्षिणी हव्यवहाकव्यवना तथा।
रौद्रीसंहारिणी वह्निजाता दशकला स्मृताः ।। १५ ।।

कपिनी हंसिनी चैव शोधिनी बोधिनी तथा।
शोषिणी क्लेशिनी तद्वा पराख्या कर्षणी तथा ।। १६ ।।

ततस्सुषुम्ना वेष्टिश्च वाणीज्येष्ठा हिरण्यदा।
कलास्सूर्य समुत्थाता द्वादशैवं समीरिताः ।। १७ ।।

अमृतामानदा पुष्टिस्तुष्टिः प्रीतिस्तथा रतिः।
ह्रीश्च श्रीश्च स्वधा रात्रिर्ज्योत्स्ना हैमवती तथा ।। १८ ।।

च्छाया च पूरणी वामा सौम्याष्पोडशकीर्त्तिताः।

तैजसीस्तु कलाः प्रोक्ता एतास्तन्त्रान्तरोत्थिताः ।। १९ ।।

तारेण कूर्चं विन्यस्य तेनैवेष्ट्वा जलादिभिः।
रत्नानि नवशक्तीभिर्न्यस्य ताभिस्समर्चयेत् ।। २० ।।

अर्धाधिकमथापूर्य लिपिपक्षं प्रपूर्य च।
मूर्त्यादिकमथावाह्य विद्यादेहं समर्च्य च ।। २१ ।।

आत्मविद्या शिवाख्यानि तत्वानि प्रणवांशकैः।
ऊर्ध्वोर्ध्वमिष्ट्वा तारेण सर्वतस्तत्वमूर्ध्वतः ।। २२ ।।

मूलेनावाह्य लिप्यर्णैरष्टाविंशति तत्त्वकैः।
अङ्गैश्च सकलीकृत्य परिवारान्वितां यजेत् ।। २३ ।।

तद्दक्षिणे यजेदस्त्रमनुना कर्करीमपि।
तुर्यश्रमर्धचन्द्राभं वृत्तं दिक्ष्वब्जसन्निभम् ।। २४ ।।

योन्याकारन्नागपदे कुण्डान्येवं प्रकल्पयेत्।
उत्पाद्य योनिकुण्डेऽग्निं भ्रामयित्वा घटेश्वरम् ।। २५ ।।

वर्धनी धारया सिञ्चन् कुण्डश्लेषं प्रदक्षिणम्।
विकिरोपरि विन्यस्य कुम्भेशं कर्करीमपि ।। २६ ।।

तत्वत्रितयमभ्यर्च्य प्राग्वदाधारमण्डले।
पुनरावाह्यमूलेन कुम्भेशं विधिवद् यजेत् ।। २७ ।।

गालितोदकमापूर्य वर्धनीमस्त्रतो यजेत्।
अथ सम्प्रोक्ष्य तां वेदिमापोहिष्ठास्त्रिभिः ।। २८ ।।



कलस्यानुरूपेण पदानि परिकल्पयेत्।

दिक्षुत्रिकं विदिक्ष्वैवं नवान्तः पञ्चविंशतौ ।। २९ ।।

षट्दिक्षुमध्ये नवकं कोणेषु च चतुष्टयम्।
पञ्चाशत्येकहीने तु क्षेत्रे नवपुटे नयेत् ।। ३० ।।

एकादशपुटे क्षेत्रे नवानां नवकं नयेत्।
एकादशपुटेष्वेवं पदमुक्तं मनीषिभिः ।। ३१ ।।

रजोभिः पद्ममालिख्य सतिलैर्व्रीहि तण्डुलैः।
सर्षपैर्वस्त्रान्तरितैः मध्ये पीठं प्रकल्पयेत् ।। ३२ ।।

द्रव्यकुम्भस्थितिर्यत्र तत्र स्वस्तिकमालिखेत्।
पदान्यन्यानि सर्वाणि यथाशोभं प्रपूरयेत् ।। ३३ ।।

व्रीहिभिः पीठिकाः कृत्वा तासु द्वौ द्वौ कुशौ क्षिपेत्।
क्षालितान् सूत्रसन्नद्धान् धूपितान् निर्व्रणान् घटान् ।। ३४ ।।

सादयेत्तेषु पीठेषु मूलेनैवाप्यधोमुखम्।
पीठं सम्पूज्य संस्कृत्य सम्प्रोक्ष्यास्त्रेण तान् घटान् ।। ३५ ।।

हृदा कूर्चं प्रविन्यस्येदुत्तानीकृत्य वर्मणा।
मध्यमं कलशं पूर्वमष्टरत्नसमन्वितम् ।। ३६ ।।

अष्टगन्धजलेनैव पुरयेन्मूलमन्त्रतः।
एकैकं रत्नमादाय गन्धेनैकेन संयुतम् ।। ३७ ।।

दिग्विदिक्ष्वष्टपत्रस्थान् पूरयेन्मातृनामभिः।
मृत्कषायौषधीपुष्पतैलगव्यघृतेक्षवैः ।। ३८ ।।



दिग्विदिक्क्रमतो बाह्ये पूरयेत् भैरवाणुभिः।

शिष्टाच्छुद्धोदकेनैवं पूरयेद्दिग्विदिक्क्रमात् ।। ३९ ।।

ततस्सम्पूज्याधिवासहोमं कृत्वाधिवास्य च।
पूरणक्रमतो देवीं स्नपयेत् पूर्तिमन्त्रतः ।। ४० ।।

एवं सप्तदशद्रव्यैस्स्नपनं समुदीरितम्।
आरभ्याशष्टोत्तरशतं वक्ष्ये पञ्चशतान्तिमान् ।। ४१ ।।

कलशान् पञ्चविंशद्भिर्द्रव्यैस्सम्पूरितान् क्रमात्।
क्षेत्रे तिथिपुटे मध्ये नवभिः पङ्कजं लिखेत् ।। ४२ ।।

दैविके त्रिकमेकं च बहिर्दिग्विदिगन्तरा।
नवकं चाष्टकं तद्वत् त्रिकं च परिकल्पयेत् ।। ४३ ।।

क्षेत्रे साकपुटे मध्ये नवभिः पङ्कजं लिखेत्।
दैविके त्रिकमेकं च दिक्कोणेष्वथ बाह्यतः ।। ४४ ।।

नवकं दिक्षु कोणेषु कल्प्यं द्वादशकं क्रमात्।
तदन्तरे त्रिकाण्येव मूर्ध्यर्धशते विधिः ।। ४५ ।।

विंशत्सूत्रैर्बहिष्षट्क चतुष्काण्यन्तराष्टकम्।
अष्ट वा दशकान्यन्तर्न्नवकेऽब्जशतद्वये ।। ४६ ।।

क्षेत्रे धान्यपुटे यद्वा नवकानि प्रकल्प्य च।
पञ्चविंशति संख्यानि मध्ये दलघटान्वितम् ।। ४७ ।।

पञ्चविंशोत्तरन्त्वेवं शतद्वयमुदीरितम्।
क्षेत्रे पात्रपुटे मध्ये नवकेऽब्जं प्रकल्पयेत् ।। ४८ ।।

दैविके नवकान्यष्ट बहिर्द्वादशकत्रयम्।

दिक्षु कोणेषु नवकान्येवमध्यर्ध विंशते ॥ ४९ ॥

विधिः कृत्वा गोत्रपुटे पञ्चविंशतिर्मध्यतोऽम्बुजम्।
दशकं दिक्षु कोणेषु त्रिकमन्तर्बहिर्दिशि ॥ ५० ॥

पञ्चविंशतिकानि त्रिः कोणे सप्तदशार्चयेत्।
दशकान्यन्तरालेषु सैकत्रिशतमीरितम् ॥ ५१ ॥

क्षेत्रे धीरपुटे पद्मं पञ्चविंशतिभिर्लिखेत्।
दैविके सप्तदशकान्यष्टदिक्षु प्रकल्पयेत् ॥ ५२ ॥

कोणेषु सप्तदशकमध्ये तेषां बहिः क्रमात्।
पञ्चविंशतिकान्यत्र त्रीणि त्रीणि प्रकल्पयेत् ॥ ५३ ॥

पञ्चोत्तरं पञ्चशतमेवमुक्तं पदार्पणम्।
रत्नगन्धाष्टकोदेन ब्राह्ममूलेन पूरयेत् ॥ ५४ ॥

एकैक रत्नगन्धाभ्यां दैविके दिग्विक्क्रमात्।
पूरयेन्मातृमनुभिः बाह्ये पाद्यादिभिस्तथा ॥ ५५ ॥

पाद्यमर्घ्यं तथाचामं पञ्चगव्यं घृतं मधु।
गुलं तैलं दिग्विदिक्षु पूरयेत् भैरवाणुभिः ॥ ५६ ॥

मृत्कषायौषधी पुष्पफलं तीर्थैस्तु केरजैः।
लोहाद्भिश्च कुशाद्येषु वशिन्याद्यष्टशक्तिभिः ॥ ५७ ॥

वज्रमौक्तिकमाणिक्यपुष्यवैडूर्यनीलकः।
गोमेदकं मरतकं रत्नाष्टकमुदीरितम् ॥ ५८ ॥



इन्दुचन्दनकाश्मीररोचना कपिमांसिभिः।

चोरागरुभ्यां सहितं गन्धाष्टकमुदीरितम् ।। ५९ ।।

दूर्वा पद्म विष्णुकान्ती श्यामाकैः पाद्यमीरितम्।
सिद्धार्थकाक्षततिलकुशाग्रयवगन्धकैः ।। ६० ।।

फलपुष्पयतैरर्घ्यमष्टाङ्गं परिकीर्त्तितम्।
जातीलवङ्कतक्कोलैर्मतमाचमनीयकम् ।। ६१ ।।

वान्मीकिवृक्ष शृङ्गोत्था नादेयी च समुद्रजा।
आखुसूकरं भूतेखलजा वोदिजा मृदः ।। ६२ ।।

शिरीषाम्र शमीपर्ण क्षीरित्वग्भिः कषायकम्।
सहा च सहदेवी च सहा भद्रा कृताञ्जलिः ।। ६३ ।।

श्रीदेवी विष्णुपर्णी च दूर्वेन्द्र लतिकौषधिः।
जातिस्त्रीमल्लिकाकुन्द नन्द्यावर्त्ताब्जचम्पकैः ।। ६४ ।।

यूथिका बकुलाभ्यां तु कर्त्तव्यं कुसुमोदकम्।
पनसं डाडिमं भव्यं बीजपूरं च कादलम् ।। ६५ ।।

वैल्वं माकन्दजं पौगं फलाष्टकमुदाहृतम्।
नदी सेतु कटाकाब्धि कूपजं तीर्थ वारि च ।। ६६ ।।

सुवर्णं रजतं ताम्रमायसं त्रपुसीसके।
कांस्यं च पित्तलञ्चाष्टलोहोदं परिकीर्त्तितम् ।। ६७ ।।

शिष्टखण्डांस्तु शुद्धोदैः प्रतिखण्डं तदा तदा।
दिग्विदिक्क्रमतः सर्वान् पूरयेत् मूलमन्त्रतः ।। ६८ ।।



।। इति कलशचन्द्रिकायां कालीभागे द्वितीयपटलः समाप्तः ।।

# कलशचन्द्रिकायां कालीभागः
# तृतीयः पटलः

स्नातो नवाम्बरधरः कृतदेहशुद्धः।
सद्भावनाधिगतर्णशिवस्वरूपः ।। १ ।।

आराधितस्वगुरुपादगणेशपीठः।
कुम्भस्य शोषदहनाद्यमथो विदध्यात् ।। २ ।।

आद्येन दर्भान् न्यसतूक्षयेत् तद्द्वितीयत्वेन च गन्धतोयैः।
किरेत्तृतीयेन तथाक्षतैश्च यजेत मूलेन च तुर्यकेण ।। ३ ।।

उत्तानयेत् कुम्भमथाधि पीठं न्यस्येत्तदन्त्येन ततोऽस्त्रतोक्षेत्।
तत्कुम्भेमूलस्मरतादब्जं पङ्क्तिदलान्वितम् ।। ४ ।।

मध्येऽर्कदलसंयुक्तं वक्तपदलैर्युतम्।
अग्निसूर्यशशिजाः कलाः क्रमात् तत्समष्टितदृगन्वितं न्यसेत् ।। ५

तद्दलेषु जलगन्धसूनकैर्न्यस्तमन्त्रनिवहैरथार्चयेत्।
आवाह्य सौरचतुरक्षरतोऽत्र कुम्भे विन्यस्य -
बिन्दुजनिताश्च कला मुखेऽस्य ।। ६ ।।

सम्पूज्य सूर्यमनुना ध्रुवतोऽत्र कूर्चं विन्यस्य -
तेन यजनाच्च विराण्मयं तत्
आत्माणुना न्यस्य युगन्ध रत्नान्यभ्यर्च्य -

पूर्त्तिं प्रविधाय मानसीम्।

मूलाहितैस्सिञ्चतु शङ्खतोयैश्शिरोन्तिमां -
कोटिलिपिं च सञ्जपन्।

अर्धाधिकं समभिपूर्य समर्च्य तस्मिन् -
वर्णारविन्दमभिवाह्य च मूर्त्तिमत्र ।। ८ ।।

तेजस्त्रयध्रुवविभिन्नकलाश्च तस्या -
मायोज्य दिव्यमभिवाह्य यजेच्च देहम् ।। ९ ।।

आयोज्य निवहं तत्र तत्त्वानां क्रमतस्सुधीः।
व्यस्तं समस्तं यद्रूपं परमस्मिन्नियोजयेत् ।। १० ।।

अधिदरमभिपूर्य वारुणांभो
निजहृदयादपि चित्कलां नियोज्य
मनुनिवह समुद्य मानमूर्त्तौ
मनुविदथो विनियोजयेत्तदोजः ।। ११ ।।

अथास्ततः पल्लवचक्रिकाद्यं
निधाय तस्मिन्नभिवाह्य देवीं।
षडध्वमूलार्णनिजाङ्गकानि
विन्यस्य सम्पूर्णतनुं विदध्यात् ।। १२ ।।

ततोऽर्चयित्वा विधिवन्निवेद्य
समर्च्य सम्पूज्य च सुप्रसन्नाम्।
विकीर्य पुष्पैः परिजप्य मूलं
स्पृशन् सहस्रं परिरक्षयेच्च ।। १३ ।।

प्रधानमेवं सम्पूज्य कलशानितरान् यजेत्।
प्रतिखण्डं पीठपूजां कृत्वा संस्कृत्य तान् घटान् ।। १४ ।।

तारेणाभ्यर्च्य विन्यस्य कूर्चान्युक्तानि तेष्वथ।
विधाय द्रव्यविन्यासं पूरयेत्सलिलैश्शुभैः ।। १५ ।।

द्रव्यद्रव्यविधिर्यत्र तत्र तेनैव पूरयेत्।
पूरयेत् परिकुम्भांश्च प्रतिखण्डं क्रमात् ततः ।। १६ ।।

आवाह्य सकलीकृत्य पूजयित्वा निवेद्य च।
निवेद्य कृत्वा रक्षामप्यधिवासहुतं चरेत् ।। १७ ।।

विहृत्यवह्निं कुण्डेषु पूर्वादिषु चतुर्ष्वपि।
स्वगृह्योक्तप्रकारेण कृत्वा चाग्निमुखं क्रमात् ।। १८ ।।

हुत्वाथगायत्र्या पक्वं हुत्वा पूजाणुभिर्घृतम्।
समिदादिनवद्रव्यं मूलेन जुहुयाद् गुरुः ।। १९ ।।

दिक्ष्वङ्गमन्त्रैर्ज्जुहुयुश्चतुर्भिमूर्त्तिपाः क्रमात्।
पालाश्यसमिधो मध्ये दिक्षु तोरण वृक्षजाः ।। २० ।।

समिदाज्य चरूल्लाँजान् सर्षपांश्च यवांस्तिलान्।
सक्तूनाज्यमितिप्रोक्तं द्रव्याणां नवकं क्रमात् ।। २१ ।।

अष्टाधिकशतं मुख्यमष्टाविंशति मध्यमम्।
अधमञ्चाष्टसंख्यातं ततश्शेषं समापयेत् ।। २२ ।।

ततस्संयोज्य सम्पातं प्रतिकुम्भं समर्च्य च।
विन्यस्याङ्कुरपात्राणि मङ्गलानि च विन्यसेत् ।। २३ ।।

पीठं च दर्पणं खड्गं कौशेयं च सुधाघटम्।
पुस्तकञ्चैक्षवन्दण्डं ताम्बूलं पूगमिश्रितम् ।। २४ ।।

वस्त्रैर्दर्भैस्समाच्छाद्य विकीर्य कुसुमाक्षतैः।
उपविश्याथ तत्पश्चात्पीठपूजापुरस्सरम् ।। २५ ।।

तेषां घटानामैकात्म्यमापाद्यावाहनादिकम्।
कृत्वा सम्पूज्य देवीं तां निवेद्य बलिमाहरेत् ।। २६ ।।

दिक्षु कालीपार्षदीभ्यो नम इत्यणुना बहिः।
विसृज्यान्नं प्रसन्नार्चां कृत्वा रक्षां विधाय च ।। २७ ।।

देवीं विज्ञाप्याधिवासं कृतेत्याद्याणुना ततः।
विनिद्रितो निशां नीत्त्वा श्वोभूतो स्नपयेच्छिवाम् ।। २८ ।।

आधिवासनिकान् होमान् कुर्याद्वा नव युक्तितः।
चतुरश्रं भगाकारं धनुर्वक्रन्त्रिकोणकम् ।। २९ ।।

वृत्तं षडश्रं पद्माभमष्टकोणं यथाक्रमात्।
तोरण द्रुमजा दिक्षु समिधः परिकीर्त्तिताः ।। ३० ।।

शमीखदिर विल्वाह कार्षयो विदिशि क्रमात्।
निवृत्तिश्च प्रतिष्ठा च विद्याशान्तिरिति क्रमात् ।। ३१ ।।

मनवो दिक्षुकोणेषु हृदयाद्यङ्गकाः क्रमात्।
प्राप्तस्नात्त्वा समाचम्य मन्त्रसात्कृत विग्रहः ।। ३२ ।।

कलशं किञ्चिदभ्यर्च्य पृथक्कृत्य च मूलतः।
प्रतिखण्डं तु नीराज्य रक्षामन्त्रेण कल्पयेत् ।। ३३ ।।

प्रासादान्तः प्रविश्याथ पीठपूजापुरस्सरम्।
आवाह्य सकलीकृत्य लिपितत्त्वाक्षराङ्गकैः ।। ३४ ।।

दत्वोपहारान् नीराज्य घटैर्देविकसंस्थितैः।
स्नपयेन्मातृमनुभिर्मूलान्तैर्दिग्विदिक्क्रमात् ।। ३५ ।।

पादादितैलनिष्ठैश्च दिग्विदिक्संस्थितैर्घटैः।
मूलान्तैर्भैरवाष्टमनुभिः स्नपयेत् क्रमात् ।। ३६ ।।

अन्तरालस्थितैः कुम्भैः स्नपयेदष्टशक्तिभिः।
अथो मण्डपमासाद्य ब्राह्मं कुम्भं समर्च्य च ।। ३७ ।।

पीठादिचितिमुद्वास्य कृत्वा नन्दीमुखादिकम्।
समुद्धार्य ब्रह्मकुम्भं घटेशं चाप्रमादतः ।। ३८ ।।

गत्त्वा देवीसकाशं तु नीराजनपुरस्सरम्।
नीराज्य तत्त्वत्रितयैर्घटेशेनाभिषिच्य च।
तत्त्वानि पञ्चमूलशतमष्टोत्तरं जपन् ।। ३९ ।।

स्नपयेत् ब्रह्मकुम्भेन रजोरूपां महेश्वरीम्।
जीवन्यासं ततः कृत्वा विन्यस्य च षडध्वना ।। ४० ।।

सकलीकृत्य सम्पूज्य पायसाद्यं निवेद्य च।
हुत्वाग्नौ बलिमाहृत्य प्रसन्नार्चां विधाय च ।। ४१ ।।

अवस्रुतेन सम्प्रोक्ष्य भक्तान् पारिषदानपि।
जप्त्वा स्तुत्त्वा नमस्कृत्य महादेवीं प्रसादयेत् ।। ४२ ।।

।। इति कलशचन्द्रिकायां कालीभागे तृतीयपटलः समाप्तः ।।

# कलशचन्द्रिकायां कालीभागः
# चतुर्थः पटलः

अथार्चनाविधिं वक्ष्ये देहसंस्कारपूर्वकम्।
स्नात्वाचम्य विधानेनात्रोपविश्य वरासने ।। १ ।।

वन्देत साञ्जलिमूर्ध्नि गरुन्मूले विनायकम्।
कात्यायिनीं दक्षभागे क्षेत्रपालं च वामतः ।। २ ।।

करयोस्तलपृष्ठपार्श्वाङ्गुलिषु तलान्तिमम्।
व्याप्यास्त्रेण त्रितालादि वह्निसालान्तमाचरेत् ।। ३ ।।

मूलचक्रात् समुद्बुद्धा स्फुरन्तीं कुण्डलीं स्मरन्।
वह्निमण्डलमस्त्रेण दक्षया नासयानिलम् ।। ४ ।।

दशवारं रेचयित्त्वा सोममस्त्रेण वामया।
स्वरसंख्यं समापूर्य कुम्भयित्वार्कमस्त्रतः ।। ५ ।।

मध्यमायां सूर्यसंख्यं रेचयेद्वजयाथ तम्।
विलोमलिप्या संयम्य व्याप्य न्यस्य विलोमतः ।। ६ ।।

स्थानधातुयुतामेनामतिसंहृत्यता शिवे।
उत्थाप्य रुद्रशक्त्याथ कुण्डलीं मूलचक्रतः ।। ७ ।।

सर्वसंहारिणीं दीप्तां योजयेत् खगते शिवे।
शिवैकतां विभाव्यैनां ततस्सृष्टिमनुस्मरन् ।। ८ ।।

साद्यया कुण्डलीमेनां षडध्वप्रसवोन्मुखीम्।
आनीय क्रमयोगेन स्वाधारे स्थापयेत्सुधीः ।। ९ ।।

अथ लिप्या नियम्यासुं व्याप्य न्यस्याङ्गमाचरेत्।
एवं संहृत्य चोत्पाद्य मूलाणुन्यासमाचरेत् ।। १० ।।

अथवा कुम्भकान्ते तु कुम्भितप्राण एव सत्।
क्षाद्यन्तार्णानथैकैकमूर्ध्वोर्ध्वार्णैवय ङ्गतान् ।। ११ ।।

स्वानधातुयुतं स्मृत्वा यार्यार्णं संहरेच्छिवे।
अङ्गुष्ठ नाभि हृत्कण्ठ भ्रूमध्येषु क्रमादथ ।। १२ ।।

पृथ्व्यादिमण्डलं स्मृत्वा स्वस्वचिह्नविभूषितम्।
भूतादिदैवतकलाविभिन्नमनुपञ्चकैः ।। १३ ।।

संहरेत् कारणे स्वेस्वे स्वस्वकार्यगुणान्विते।
अन्त्यं विन्दौ तु तन्नादे तं शक्तौ तां परे शिवे ।। १४ ।।

अनाहते तं परमे षोडशान्तगते शिवे।
कुम्भितं रेचयेद् दक्षनाड्यैवं शोषणं स्मृतम् ।। १५ ।।

कुण्डव्यासदलार्ण देवतयुतान् षड्पर्वपद्मान् क्रमात्।
संहृत्यान्त्यकुशेशयं गुरुवरौ विन्दौ निजे कारणे ।। १६ ।।

विन्द्वान्दीन्नवतत्तदूर्ध्वमखिलं चिद्व्योमसीमाम्बुजे।
नित्यानन्दमयेन यच्छिवपदे तद्रूपतां भावयेत् ।। १७ ।।

पिण्डं पदे पदं रूपे तद्रूपातीत संज्ञके।
चिदानन्दमये तच्चखगपद्मगते शिवे ।। १८ ।।

कालाग्निरुद्रशक्त्या सन्दह्य निखिलास्तनुम्।
सन्त्यजेत् कुम्भितं वायुं शनैः पूरितनासया ।। १९ ।।

ततस्तयैव सम्पूर्य कुम्भयन्मारुतं सुधीः।
व्योमपद्मस्थपरशिवात् सर्वं सृजेत् क्रमात् ।। २० ।।

परं सूक्ष्मस्थूलरूपतत्त्वानि त्रिविधान्यपि।
संहारप्रतिलोमेन सृष्टिक्रम उदीरितः ।। २१ ।।

अकैकार्णोदरोद्भूतामादिक्षान्तां लिपिं स्मरन्।
सृष्ट्वा ततो विश्रामयेत् कुम्भितं मारुतं शनैः ।। २२ ।।

प्लावनन्त्वेवमाख्यातं प्राणायामत्रयं क्रमात्।
श्रुत्वैव स्वगुरोर्वक्त्रादनुष्ठेयमिहोदितम् ।। २३ ।।

कराङ्गुलीषु तलयोस्तस्या अङ्गानि च न्यसेत्।
तया देहे त्रिशो व्याप्य तदङ्गानि च न्यासमाचरेत् ।। २४ ।।

शुद्धां विन्दुयुतां सर्गयुक्तां तद्वितयान्विताम्।
चतुर्विधां लिपिं न्यस्त्वा तदङ्गानि समाचरेत् ।। २५ ।।

यद्वा शैवोक्तमार्गेण देहं संशोधयेद् बुधः।
मन्त्रोदयं ततः कृत्वा प्राणानायम्य मूलतः ।। २६ ।।

आधारशक्त्यादिगणं मूलादिहृदयावधि।
दक्षाद्यूर्वं सयुग्मेषु धर्मादींश्चतुरो न्यसेत् ।। २७ ।।

अधर्मादीन्नाभिपार्श्वमुखपार्श्वेषु विन्यसेत्।
मध्येऽनन्तं च पद्मं च चक्रं च नवयोनिकम् ।। २८ ।।

हृदि दिक्कोणमध्येषु नवशक्तीश्च विन्यसेत्।
मण्डलात्मत्रयं न्यस्य समष्ट्या व्यापयेत्तनुम् ।। २९ ।।

एवं पीठं प्रविन्यस्य चिद्योमाम्बुज मध्यतः।
त्रिखण्डया समावाह्य हृदये परमेश्वरीम् ।। ३० ।।

सूक्ष्मोपहारैरभ्यर्च्य कुर्याच्च करभावनाम्।
मूलेन व्याप्य करयोस्तले पृष्ठे च पार्श्वयोः ।। ३१ ।।

अङ्गानि न्यस्य युगपदङ्गुष्ठादितलान्तिमम्।
आभ्यां कराभ्यां मूलेन स्वां तनुं व्यापयेत् त्रिशः ।। ३२ ।।

वाग्भवं दक्षिणे हस्ते कामराजं तु वामके।
तार्त्तीयमुभयोर्न्यस्य हृल्लेखां सर्वगात्रके ।। ३३ ।।

शिरोभ्रूमध्यवदनहृद्गुह्यचरणेषु च।
नत्यन्ता न्यस्य षड्वर्णान् पुनरङ्गानि विन्यसेत् ।। ३४ ।।

अक्ष्याब्धिरसमार्त्ताण्डमन्वष्टिस्वरशालिना।
आग्न्यारूढेन नादेन युक्तैर्भाद्यक्षरैः क्रमात् ।। ३५ ।।

बिन्द्वन्तैस्सर्गिणान्त्येन षडङ्गानि प्रकल्पयेत्।
लिपितत्त्वानि विन्यस्येत् यद्वा लिपि षडध्वनः ।। ३६ ।।

बीजं नतिं शिवायै च कलानामकलात्मने।
नमोऽन्तमुद्धरेदेवं पञ्चमन्त्राः कलाध्वनि ।। ३७ ।।

आख्यां तु शान्त्यतीताद्याः हौमाद्यं बीजपञ्चकम्।
कास्य हृद्गुह्यपादेषु कलाः पञ्च प्रविन्यसेत् ।। ३८ ।।

आत्मा माया तथा कालश्चाव्यक्तं त्रिगुणं पुनः।
बुद्ध्यहङ्कारचेतांसि तन्मात्राः पञ्चकं ततः ।। ३९ ।।

श्रोत्रादिदशकं तद्वद् व्योमाद्यं भूतपञ्चकम्।
तारश्शक्तिः तालबीजं बीजान्यात्मादिषु त्रिषु ।। ४० ।।

बीजानि मादिकान्तार्णै रव्यक्तादिषु कल्पयेत्।
शिवायै पदमाभाष्य तत्त्वाख्यामात्मने युताम् ।। ४१ ।।

उद्धरेन्नमसोर्मध्ये तत्त्वाणुं बीजपूर्वकम्।
अष्टविंशति तत्त्वानि सम्प्रोक्तान्येवमागमे ।। ४२ ।।

व्यापयेत् पञ्चभिस्तत्वैः हृदये त्रीणि विन्यसेत्।
तनमात्राः कादिषु स्वस्थाने श्रोत्रादिकं क्रमात् ।। ४३ ।।

कास्य हृद्गुह्यपादेषु न्यसेद्योमादिपञ्चकम्।
हृदि हृत्पुण्डरीकादिचतुष्कं चन्यसेत् सुधीः ।। ४४ ।।

बीजं नतिं शिवायै च समाभाष्यात्मने युताम्।
तत्तद्भूतकलां शक्तिं तान्तां ङे नतिसंयुताम् ।। ४५ ।।

ताराद्यमुद्धरेदेवं तत्त्वानां पञ्चकं क्रमात्।
केवलेन च वाय्वग्निजल भूसंस्थितेन च ।। ४६ ।।

मन्वादित्यरसाम्भोधिनयनस्वरशालिना।
सेन्दुखण्डेन नादेन कल्पयेद् बीजपञ्चकम् ।। ४७ ।।

शान्त्यतीता शान्तिविद्ये प्रतिष्ठा च तथा परा।
निवृत्तिश्चेति सम्प्रोक्ताः खादिभूतकलाः क्रमात् ।। ४८ ।।

हृल्लेखा गगनाह्वा च रक्ताख्या च करालिका।
महोच्छुष्मेति सम्प्रोक्ताः क्रमात् ताः पञ्चशक्तयः ।। ४९ ।।

कास्य हृद्गुह्यपादेषु तत्त्वान्येतानि विन्यसेत्।
तत्त्वाध्वायं समुद्दिष्टो भुवनाध्वा निगद्यते ।। ५० ।।

वाग्भवादि त्रिबीजाढ्यं भरादित्रितये क्रमात्।
पादादारभ्य नाभ्यन्तं नाभेरागलमेव च ।। ५१ ।।

गालादाकेशमूर्ध्वोर्ध्वं व्यापयेन्मनुभिस्त्रिभिः।
वर्णाध्वा मूलपुटित विन्यासः प्रकीर्त्तितः ।। ५२ ।।

मूर्धेक्षणास्यहृन्नाभिगुह्यजानुपदद्वये।
पदाष्टकेन विन्यस्येत् गायत्र्यास्तु पदाध्वनि ।। ५३ ।।

पञ्चदुर्गामनून् कादि पञ्चस्थानेषु विन्यसेत्।
मूलमन्त्राक्षरान् यद्वा मन्त्राध्वायमुदीरितः ।। ५४ ।।

एवं विन्यस्तदेहस्तु मूलमन्त्रमनन्यधीः।
अष्टाधिकसहस्रं वा जपेदष्टशतं तु वा ।। ५५ ।।

जपशेषं समाप्याथ शङ्खपूरणमारभेत्।
वृत्तत्रिकोण तुर्यश्रस्रूपं मण्डलमग्रतः ।। ५६ ।।

आलिप्य गोमयाम्भोभिः गन्धपुष्पाक्षतान् क्षिपेत्।
वाग्भवेन नमोन्तेन शङ्खाङ्घ्रि न्यस्य तत्र च ।। ५७ ।।

कामेन शङ्खन्तात्तीयबीजेनाद्भिः प्रपूर्य च।
प्रोक्ते बीजद्यमेतेषु मण्डलत्रितयं यजेत् ।। ५८ ।।

तस्मिन् जले तथाद्यर्णैस्त्रिकोणं परिभाव्य च।
तन्मध्ये तु निवृत्यादि कालपञ्चकमर्चयेत् ।। ५९ ।।

तत्राग्निसूर्येन्युकला आवाह्याभ्यर्च्य च क्रमात्।
पीठमस्मिन् समभ्यर्च्य मूलेनावाह्य देवताम् ।। ६० ।।

सकलीकृत्य सम्पूज्य निषिच्यास्मिन् त्रिशो जलम्।
तेनात्मानं यागभूमिं द्रव्याण्यभ्युक्षयेत् पुनः ।। ६१ ।।

देहे पीठं समाराध्य समावाह्यात्र देवताम्।
सकलीकृत्य सम्पूज्य चिदानन्दसुधामयम् ।। ६२ ।।

अर्घ्यं समर्प्य सन्तोष्य रक्षेत्तालत्रयादिना ।।

।। इति कलशचन्द्रिकायां कालीभागे चतुर्थपटलः समाप्तः ।।

# कलशचन्द्रिकायां कालीभागः
# पञ्चमः पटलः

एवं शिवस्वरूपोऽसौ पूजाकर्म समारभेत्।
पूर्ववत् शङ्खमापूर्य पुष्पमाराध्य पादयोः ।। १ ।।

तालत्रयाद्यैस्संरक्ष्य पीठपूजां समाचरेत्।
गुरुन् सव्ये समभ्यर्च्य दक्षिणे गणनायकम् ।। २ ।।

वह्नौ कात्त्यायिनीमीशे क्षेत्रपालं समर्चयेत्।
आधारशक्तिं विद्याब्धिं रत्नद्वीपं सुमङ्गलम् ।। ३ ।।

मणिमण्डपं च तन्मध्यगतं कल्पद्रुमं तथा।
कोणेषु धर्मपूर्वा दिक्ष्वधर्मादिकान् यजेत् ।। ४ ।।

मध्येऽनन्तं तदूर्ध्वे च पद्ममष्टदलान्वितम्।
तत्कर्णिकायां चक्रं च नवयोन्याख्यमर्चयेत् ।। ५ ।।

दिग्विदिक्षु च मध्ये च नवशक्तीः क्रमाद् यजेत्।
इच्छाज्ञानक्रियाख्या च कमिनीकामदायिनी ।। ६ ।।

रति रतिप्रियानन्दा नवमी च मनोन्मनी।
मण्डलानि त्रयान्ते च समष्टिमनुना यजेत् ।। ७ ।।

ताराद्यं ब्रह्मविष्ण्वर्णानुक्त्वा ङेन्तं महेश्वरम्।
प्रेतासनाय वर्मास्त्रनतिनिष्ठं समुद्धरेत् ।। ८ ।।

समष्टिमन्त्रः सम्प्रोक्तः पीठपूजैवमीरिता।
मूलेन मूर्त्तिं संकल्प्य तस्यामावाहयेन्महः ।। ९ ।।

तारं शक्तिं च पञ्चार्णमूलमन्त्रं समुच्चरन्।
सम्बुध्यन्तामागच्छ द्वयमेव तु ।। १० ।।

शिवामावाहयमीति मन्त्रं सम्यगुदीरयेत्।
मूलालवालादुन्नीय चेतनां सूक्ष्मरूपिणीम् ।। ११ ।।

व्योमाम्बुजगुहासंस्थ शिवैक्यं परिभाव्य च।
मन्त्रात्मना परिणतमग्नीषोमात्मकं महः ।। १२ ।।

हृदम्बुजे समानीय तत्कलास्तु कराञ्जलौ।
वाहिन्या न्यासयायोज्य दीपाद्दीपान्तरं यथा ।। १३ ।।

तदञ्जलिस्थकुसुमनिचय व्यापितन्महः।
ब्रह्मनाड्याथ तन्मूर्त्तेर्हृदये योजयेत्सुधीः ।। १४ ।।

आवाहिता भवमुखैः पञ्चमुद्राश्च दर्शयेत्।
संस्थापनी द्वितीया स्यात् तृतीया सन्निधापनी ।। १५ ।।

तुरीयसन्निरोधिनी पञ्चमी सुप्रसादिनी।
ततो मूलेन संव्याप्य लिपितत्त्वाक्षराङ्गकैः ।। १६ ।।

यद्वा षडध्वभिर्न्यस्य मूलाङ्गर्णानि विन्यसेत्।
मूलहृन्मस्तके मूर्ध्नि श्रोत्रदृग्वदने नसोः ।। १७ ।।

करयोः पादयोर्न्यस्येत् मन्त्रार्णैर्दशभिः क्रमात्।
दत्त्वासनं स्वागतं च वदेदञ्जलिपूर्वकम् ।। १८ ।।

पाद्याद्युपहृतीर्दत्त्वा ततस्सम्पूजयेच्छिवाम्।
पाद्यमर्घ्यं तथाचामं मधुपर्काभिषेचने ।। १९ ।।

वस्त्रं यज्ञोपवीतं च भूषणानि ददेत् क्रमात्।
पाद्याद्युपहृतीर्मूलमनुनैव प्रदापयेत् ।। २० ।।

अभ्यर्च्य मूर्तौ तारोपचारमूलाङ्गहेतिभिः।
शक्त्यष्टकाङ्गाष्टमातृभैरवैः लोकनायकैः ।। २१ ।।

तदस्त्रैश्चार्चयेद्देवीं जलगन्धार्त्तवारिभिः।
वशिनी कामेश्वरी च मोदिनी विमलारुणा ।। २२ ।।

महालक्ष्मी च सर्वेश्वरी कौलिनीत्यष्टशक्तयः।
युताभिर्मातृकाद्यष्टवर्गबीजैः सबिन्दुभिः ।। २३ ।।

दलमूले तु सम्पूज्याश्शक्तयो दिग्विदिक्क्रमात्।
वह्नौ हृदयमैशान्यां शिरो रात्रिञ्चरे शिखाम् ।। २४ ।।

वायौ वर्म पुरो नेत्रमस्त्रं दिक्षु चतुर्ष्वपि।
ब्रह्माणी माहेशी कौमारी वैष्णावी च वाराही ।। २५ ।।

इन्द्राणी चामुण्डी महालक्ष्मीश्च मातरः।
प्रोक्ताः असिताङ्गो रुरुश्चण्डः क्रोधीशोन्मत्तसंज्ञकौ ।। २६ ।।

कपाली भीषणाख्यश्च संहारश्चाष्टसैरवाः।
इन्द्राग्नीयमनिरृती वरुणो वायुश्च सोम ईशानः ।। २७ ।।

सानन्तो ब्रह्मैवं सम्प्रोक्ता लोकनायकाः क्रमशः।
वज्रं शक्तिश्च दण्डश्च खड्गः पाशस्तथाङ्कुशः ।। २८ ।।

गदाशूलं चक्रपद्मौ वज्राद्याः हेतयः स्मृताः।
प्रों बीजाढ्या शेषिकार्या शिवे निर्माल्यधारिणी ।। २९ ।।

पायसाद्यं निवेद्याथ हुत्वाग्नौ बलिमाहरेत्।
नमस्कृत्याथ गत्वान्तर्न्निवेद्यान्नं विसृज्य च ।। ३० ।।

कृत्वार्घ्यपाद्ये दत्त्वाथ ताम्बूलाद्यं निवेद्य च।
प्रासाद्य देवीं सम्पूज्य कृत्वा पुष्पाञ्जलिं ततः ।। ३१ ।।

तीर्थाद्भिः प्रोक्ष्य गुर्वादीन् भक्तानात्मानमेव च।
दत्वार्घ्यमवसानीयं पूजाशेषं समाप्य च ।। ३२ ।।

तालत्रयाद्यैस्संरक्ष्य नमस्कृत्य क्षमापयेत्।
अथापरं प्रवक्ष्यामि देव्यास्तु विभवार्चनम् ।। ३३ ।।

मध्येऽष्टदिक्षु परितो नवपीठानि कल्पयेत्।
मध्ये पूर्णगिरिं साक्षात् सदानन्दमयं परम् ।। ३४ ।।

कालस्कन्धन्तु पूर्वस्यामग्नौ कोह्लापुरं तथा।
च्छोहारं याम्यदिग्भागेऽथोर्ध्वानं राक्षसाधिपे ।। ३५ ।।

मालेयं वरुणे वायौ कुलान्धकसमाह्वयम्।
जालन्धरं तु सौम्यायां देविकोष्ठं तथा शिवे ।। ३६ ।।

पीठपूजानन्तरं च पीठान्येतानि देशिकः।
सङ्कल्प्याभ्यर्च्याथ तेषु तत्तन्मूर्त्तीः प्रकल्प्य च ।। ३७ ।।

मध्ये भगवतीं ध्यात्वा ध्यानसूक्तोक्तमार्गतः।
दक्षिणे वीरभद्रां तु देव्या वामे जयां स्मरेत् ।। ३८ ।।

अष्टशक्तीश्च तद्बाह्ये षडङ्गानि च कल्पयेत्।
तद्बहिश्चाष्टपीठेषु कल्पयेद्दिग्विदिक्क्रमात् ।। ३९ ।।

मातृंस्तत्सन्निधौ तद्वत् कल्पयेदष्टभैरवान्।
मातृणां परितोऽष्टाष्ट योगिनीर्दिग्विदिग्गताः ।। ४० ।।

तद्बाह्ये च दिशापालास्तदस्त्राणि च कल्पयेत्।
एवं सङ्कल्प्य सम्पूज्य जलगन्धार्त्तवादिभिः ।। ४१ ।।

दध्याज्यकदलीकेरफलगौलविमिश्रितम्।
पायसान्नं निवेद्याथ पृथक् पात्रेषु देशिकाः ।। ४२ ।।

मातृभ्यो भैरवेभ्यश्च तत्र तत्र निवेदयेत्।
अग्नौ हुत्वाथ विधिवद् बलिं दत्त्वाग्निगोचरे ।। ४३ ।।

विसृज्यान्नं शेषिकायै निर्माल्यं च निवेदयेत्।
एवं सम्पूज्य तां देवीं परिवारसमन्विताम् ।। ४४ ।।

स्तुत्वा नत्वा प्रसाद्यैनां पुष्पाञ्जलिपुरस्सरम्।
तद्वैभवं समायोज्य निष्कलीकृत्य तामपि ।। ४५ ।।

तालत्रयाद्यैस्संरक्ष्य देवेशीं तां क्षमापयेत्।
एवं पूजाविधिः प्रोक्तः तन्त्रागमविशारदैः ।। ४६ ।।

ऋषिच्छन्दो देवताद्यैः सह मन्त्रान् वदाम्यहम्।
एकं योनीन्दुखण्डाभ्यां कालमायालवैः परमु ।। ४७ ।।

तार्त्तीयं बीजमुद्दिष्टं सबिर्गीन्दुभुवनस्वरैः।
खानि मायालवैरेकं प्रोक्तं बीजचतुष्टयम् ।। ४८ ।।

बीजान्युक्त्वाथ भद्राणौं कालीं ङे नतिसंयुताम्।
उद्धरेद् दशवर्णोऽयं मूलमन्त्र उदाहृतः ।। ३९ ।।

ऋषिस्तु भगवानीशः पङ्क्तिच्छन्द उदाहृतः।
ज्ञानविग्रहसम्पूर्णा देवता शक्तिभैरवी ।। ४० ।।

लक्षत्रयं जपेन्मन्त्रं बैल्वैस्त्रिमधुराप्लुतैः।
तद्दशांशं हुनेदग्नौ मनुमेवं तु साधयेत् ।। ४१ ।।

ताराधिगतहार्लेखः पञ्चार्णो निगमोदितः।
संविद्वाचकतां यातो मनुस्सर्वार्थ साधकः ।। ४२ ।।

वामदेवऋषिप्रोक्तः च्छन्दः पङ्क्तिरुदाहृता।
सकलार्थप्रदा देवी देवता च शिवा मता ।। ४३ ।।

मन्त्राक्षरैरङ्गक्लप्तिर्भाद्यैर्ह्रामादिसंयुतैः।
ध्यायेत् पूर्णगिरेर्मध्ये भद्रकालीं चतुर्भुजाम् ।। ४४ ।।

अञ्जनाचलसङ्काशां चतुर्दंष्ट्रां त्रिलोचनाम्।
जटाकलापखण्डेन्दुलसच्छिकुरशोभिताम् ।। ४५ ।।

अर्धचन्द्रश्रियानित्यं स्पर्धमानललाटिकाम्।
उल्लोलवक्रकालिन्दी कल्लोलसदृशभ्रुवाम् ।। ४६ ।।

अक्षीणघुसृणक्षोदवक्षोरुहभरानताम्।
रोमराजितराजीव कोमलोदरमण्डलाम् ।। ४७ ।।

रक्तकौशेय संवीत नितम्बभरमन्थराम्।
करीन्द्रकररम्भाभिस्तन्वन्तोरुभरोद्बणाम् ।। ४८ ।।

जङ्घाबन्धुरलावण्यलम्बताज्वलकेतकाम्।
मञ्जुलैर्मणिमञ्जीरशिञ्जितैर्जितवारलाम् ।। ४९ ।।

आदिकूर्मविलासश्रीभेदिप्रपदशोभिताम्।
प्रोद्यत्तनुलताभासा भासयन्तीं जगत्रयम् ।। ५० ।।

शूलप्रोतमहाप्रेतमूर्ध्वेखेटमधस्तथा।
करवालकपालौ च विभूतिं करपङ्कजैः ।। ५१ ।।

दक्षिणे वीरभद्राज स्मरेत् शूलकपालिनीम्।
खड्गखेटकरां वामे संस्मरेच्च तथा जयाम् ।। ५२ ।।

दण्डं कमण्डलुं विभ्रत्यक्षसूत्रस्तथाङ्कुशम्।
सुवर्णवर्णां ब्रह्माणीं कृष्णाजिनधरां स्मरेत् ।। ५३ ।।

शूलं परश्वधं क्षुद्रं दुन्दुभिर्न्नृकरोटिकाम्।
विभ्रतीमभ्रशुभ्राभां स्मरेत् माहेश्वरीं बुधः ।। ५४ ।।

अङ्कुशं दण्डखट्वांगेशक्तिं च दधतीं करैः।
ध्यायेत् सिन्दुरसङ्काशां कौमारीं पीतवाससम् ।। ५५ ।।

रत्नखण्डाकपालारिशङ्ख राजश्चतुर्भुजाम्।
कलाय श्यामलां ध्यायेत् वैष्णवीं पीतवाससम् ।। ५६ ।।

महाहलगदाखड्गमुसलोद्यच्चतुर्भुजाम्।
दंष्ट्रादन्तुरितां ध्यायेत् वाराहीं जलदप्रभाम् ।। ५७ ।।

अङ्कुशं तोमरं वज्रं चक्रं च दधतीं करैः।
इन्द्रोपलाभामिन्द्राणीं स्मरेद्रक्ताम्बरोज्वलाम् ।। ५८ ।।

शूलासिनृशिरोराजत्कपालविलसद्भुजाम्।
मुण्डस्रङ्मण्डिताङ्गीं च चामुण्डीं कालिकां स्मरेत् ।। ५९ ।।

अक्षस्रग्बीजपूरोद्यत्कपालाब्जकरां शिवाम्।
चिन्तयेत्तप्रहेमाभां महालक्ष्मीं मनोहराम् ।। ६० ।।

शूलं कपालं प्रेतं च बिभ्राणात् क्षुद्रदुन्दुभिम्।
गजत्वगम्बरान् नीलान् भैरवानष्टचिन्तयेत् ।। ६१ ।।

दिव्ययोगा महयोगा सिद्धयोगा महेश्वरी।
प्रेताशी धामनी काली कालरात्री तथाष्टमी ।। ६२ ।।

ब्रह्माणीं परितस्त्वेता योगिन्यो दिग्विदिग्गताः।
निशाचरी च ठङ्कारी रुद्रवेतालिका तथा ।। ६३ ।।

हुङ्कारी भूतधामार्या ऊर्ध्वकेशी समाह्वया।
विरूपाक्षी चतुष्पाणी माहेश्या परितस्थिताः ।। ६४ ।।

नरभोजिनी फेट्कारी वीरभद्रेश्वरी तथा।
धूम्राक्षी कलहप्रिया घोरपूर्वा च राक्षसी ।। ६५ ।।

क्रोधारक्ताक्षी विश्वरूपा च कौमार्याः परितस्थिताः।
भयङ्करी तथा वीरा कौमारी चण्डिका तथा ।। ६६ ।।

वाराही मुण्डधारिण्यौ भासुरी च ततः परा।
हुङ्कारी चेति योगिन्यो वैष्णव्याः परितस्थिताः ।। ६७ ।।

भीषणी त्रिपुरान्तक्यौ भैरवध्वंशिनी पुनः।
क्रोधिनी दुर्मुखी तद्वत् परा प्रेतनिवासिनी ।। ६८ ।।

खट्वाङ्गी चापि लम्बोष्ठी वाराह्याः परितस्थिताः।
मालिनी मन्त्रयोगिन्यौ कालाग्निग्रसिनी तथा ॥ ६९ ॥

चक्रिणा च तथा काली पुरा च भुवनेश्वरी।
केशिनी च सर्वदुष्टमर्दिन्यैन्द्र्याः प्रकीर्त्तिताः ॥ ७० ॥

वह्निपूर्वा योगिनी च रोमजङ्घाह्वया तथा।
लोलाक्षी कामुकी लोला काकदृष्टीरधोमुखी ॥ ७१ ॥

मुण्डाङ्गधारिणी चेति चामुण्ड्याः परिकीर्त्तिताः।
व्याघ्री च लक्षिणी प्रेत भूषिणी धूर्ज्जटी तथा ॥ ७२ ॥

विघटी च तथाघोरी कपाली विषलङ्घिनी।
योगिन्यश्च महालक्ष्म्याः क्रमेण कथिता इमाः ॥ ७३ ॥

एवं समासतः प्रोक्तः शिवाया यजन क्रमः।
एतत् कृत्वाश्विलान् कामान् इह चामुत्र लभ्यते ॥ ६४ ॥

॥ इति कलशचन्द्रिकायां कालीभागे पञ्चमपटलः समाप्तः ॥

# कलशचन्द्रिकायां कालीभागः
## षष्ठः पटलः

अथोत्सवविधिं वक्ष्ये शिवायास्तु समासतः।
तीर्थयात्रां कल्पयित्वा पूर्वमेव शुभे दिने ।। १ ।।

प्रागष्टमेऽह्नि सुदिने ध्वजस्थापनमाचरेत्।
दशद्वारायतं स्तम्भं पूगं वा वैणवस्तु वा ।। २ ।।

संक्षाल्याश्वत्थमाकन्द पल्लवैच्छादयेत् ततः।
स्नात्वाचार्य स्समाचम्य सकलीकृतविग्रहः ।। ३ ।।

व्रीह्यादि रचिते पीठे स्वस्तिके पीठमर्चयेत्।
संक्षाल्यावाहनं खण्डां पताकां तत्र विन्यसेत् ।। ४ ।।

नान्दीमुखं च पुण्याहं कृत्वोत्सवविशेषवत्।
भूतसंहृतिपूर्वं तु शोषदाहादिसंयुतः ।। ५ ।।

वाहं पताकां संस्कृत्य तारेणाभ्यर्च्य च द्वयम्।
अन्तः प्रविश्याभिपूज्य पीठमावाह्य तां शिवाम् ।। ६ ।।

इष्ट्वा निवेद्यवाहाद्यमन्तरानीय चाग्रतः।
विन्यस्य प्रेतशक्तिं च समावाह्याथ वाहने ।। ७ ।।

वैतालीं च पताकायां सकलीकृत्य च द्वयम्।
सम्पूज्य देवीं संरक्ष्य तत्सन्धार्य बहिर्व्रजेत् ।। ८ ।।

ध्वजस्थानं समासाद्य गर्त्ते पीठं समर्च्य च।
संस्कृत्य ध्वजदण्डं च संस्थाप्याग्रे च वाहनम् ।। ९ ।।

खण्डां पताकां मालां च सम्बध्य स्थापयेद् ध्वजम्।
तस्मिन् वाहं समावाह्य सम्पूज्य च निवेद्य च ।। १० ।।

प्रसाद्य च बलिं दत्त्वा रक्षामन्त्रेण कल्पयेत्।
ततो देवीं समभ्यर्च्य रात्रौ भूतबलिं हरेत् ।। ११ ।।

संस्कृत्य भूतकूरान्धः किञ्चित् सम्पूज्य तारतः।
मूलेनावाह्य सम्पूज्य तेन दद्याद् बलिं बुधः ।। १२ ।।

ततः परेद्युरारभ्य सम्पूज्य सवनत्रये।
औत्सवं भौतिकं यद्वा सायं प्रातर्बलिं हरेत् ।। १३ ।।

आवाह्य कौतुके देवीं शिष्यैस्सन्धार्य यत्नतः।
सपवित्रः सोत्तरीयः तत्समक्षं बलिं हरेत् ।। १४ ।।

प्रासादस्य चतुर्दिक्षु चतुर्द्वारस्य पार्श्वयोः।
दक्षसव्यक्रमाद् द्वारपालिकाभ्यो बलिं हरेत् ।। १५ ।।

सुन्दरीं सुमुखीं तद्वत् विरूपां विमलां तथा।
अन्तकीं वन्दनीं च पुरन्दरी पुरुषमर्दिनी ।। १६ ।।

वेतालशक्तिमग्रे तु प्रेतशक्तिं च पृष्ठतः।
दक्षिणेशं गणेशं च दक्षिणद्वारि पूजयेत् ।। १७ ।।

दिक्पान्मातृृंश्च शास्तारं दुर्गां स्कन्दं धनेश्वरम्।
उदित्यां शेषिकामिष्ट्वा बहिर्द्वारस्य पार्श्वयोः ।। १८ ।।

जयां च विजयामिष्ट्वा बाह्येऽष्टासु दिशास्वथ।
भैरवानसिताङ्गादीन् योगिन्यष्टाष्टकैर्यजेत् ।। १९ ।।

हेतुकादिक्षेत्रपेभ्यो द्वितीयावरणे ददेत्।
देवासुरगणेभ्यश्च तृतीयावरणे हरेत् ।। २० ।।

मूलेन दिग्बलिः कार्यः तत्र तत्र तदा तदा ।।

महापीठमथासाद्य दशदिक्षु बलिं हरेत्।
जया च विजया तद्वदजिता चा पराजिता ।। २१ ।।

नित्या विलासिनी दोग्ध्री साधारो चाष्टदिक् स्थिताः।
अधस्तान्मङ्गलामूर्ध्वे यजेत् सर्वेश्वरीमपि ।। २२ ।।

क्षेत्रपालं यजेदीशे भौतिको बलिरीरितः।
अथोत्सवबलिं वक्ष्ये भूतानां परितुष्टये ।। २३ ।।

नोध्रियन्तेऽत्र मनवो लिख्यन्ते लाघवाय च।
ऐं सुन्दर्यैनमः, क्लीं सुमुख्यै नमः ।। २४ ।।

सौः विरूपायै नमः, ह्रीं विमलायै नमः।
भुं अन्तक्यै नमः, द्रं वन्दिन्यै नमः ।। २५ ।।

कां पुरन्दर्यै नमः, ल्यैं पुष्पमर्दिन्यै नमः।
नं सर्वशक्तिरूपिण्यै वैताल्यै नमः ।। २६ ।।

ओम् मं ब्रह्मविष्णुमहेश्वराय प्रेतासनाय हुं फट् स्वाहा।
हौमु दक्षिणामूर्त्तये नमः, गं गणपतये नमः ।। २७ ।।

दैत्यदर्पविनाशाय सहस्राक्षाय धीमते।

कुलिशव्यग्रहस्ताय नमस्तेऽस्तु शतक्रतो ।। २८ ।।

इन्द्राय सुराधिपतये कालिपार्षदे नमः

इन्द्रपार्षदेभ्यो नमः, ओम् नमो भूतेभ्यो

भूतकृद्भ्यस्सर्वेभ्योऽरिष्टकृद्भ्यस्सद्भ्योऽसद्भ्यस्सदसद्भ्यस्सर्व-
गणेभ्यो नमः।

मुखं यस्सर्वदेवानां अग्नये तोजोधिपतये अग्निपार्षदे नमः।

ओम् नमो भूतेभ्यः -

येन संह्रियते यमाय प्रेताधिपतये यमपार्षदे नमः

ओं नमो भूतेभ्यः -

राक्षसा यातुधानाश्च निऋतये रक्षोधिपतये निऋतिपा।

ओम् नमो भूतेभ्यः -

येन प्रसूयते सर्वं वरुणाय जलाधिपतये नमः। वरुणापा।।

ओम् नमो भूतेभ्यः -

पूर्यन्ते च वायवे प्राणधिपतये। वायुपा-

ओं नमो भूतेभ्यः -

यत्प्रसादात् य धनदाय यक्षाधिपतये धनदपा -

ओं नमो भूतेभ्यः -

नक्षत्राणान्तु सोमाय नक्षत्राधिपतये सोमपा-

ओं नमो भूतेभ्यः -

येन कालाग्निना लोको युगान्तेख्ववदह्यते।

तस्मै ते ब्रह्मणः पुत्र विरूपाक्षानमोस्तुते विरूपाक्षापार्ष-

ईशानाय विद्याधिपतये ईशापा ओं नमो भूतेभ्यो-

येन सृष्टं जगत्सर्वं ब्रह्मणे लोकाधिपतये ब्रह्मपा
ओं नमो भूतेभ्यः-
येन सन्धार्यते भूमिर्यस्मिन् सर्वं प्रलीयते
अमोघ चक्रहस्ताय अनन्ताय नमोऽस्तु ते
अनन्ताय नागाधिपतये कालिपार्षदेभ्यो नमः।
अनन्तपार्षदेभ्यो नमः।
ओं नमो भूतेभ्यो भूतकृद्भ्यः इत्यादि
वीरभद्रनमस्तेऽस्तु विघ्नेश्वराय च
ब्राह्म्यादिभ्यश्चमातृभ्यस्सर्वाभ्यो वै नमो नमः।
विं वीरभद्राय नमः -
वीरभद्राय विद्महे महाननाय धीमहे
तन्नश्शान्तः प्रचोदयात्। वीभद्रपा-
गं गणपतये नमः। एकदंष्ट्राय विद्महे, गजाननाय धीमहे।
तन्नो दन्ती प्रचोदयात् - गणपति पा।
व्यों ब्रह्माण्यै नमः, ब्रह्मभूतायै विद्महे, कुशहस्तायै धीमहे
तन्नो ब्राह्मी प्रचोदयात्।
ओं मं माहेश्वर्यै नमः। रुद्रभूतायै विद्महे, शूलहस्तायै धीमहे
तन्नो महेश्वरी प्रचोदयात्-
ओं कौमार्यै नमः - स्कन्दभूतायै विद्महे
शक्तिहस्तायै धीमहे, तन्न कौमारी प्रचोदयात्
विष्णुभूतायै विद्महे, चक्रहस्तायै धीमहे
तन्नो वैष्णवी प्रचोदयात्

हें वाराह्यै नमः, प्रजापतिभूतायै विद्महे
गदाहस्तायै धीमहे, तन्नो वाराही प्रचोदयात्।
हों इन्द्राण्यै नमः-
इन्द्रभूतायै विद्महे, वज्रहस्तायै धीमहे
तन्न इन्द्राणी प्रचोदयात्
हूं चामुण्ड्यै नमः -
रुद्रभूतायै विद्महे, खड्गहस्तायै धीमहे
तन्नश्चामुण्डी प्रचोदयात्
ब्रह्माणी पार्षदेभ्यो नमः, माहेश्वरी पा - कौमारी पा
वैष्वणी पा- वाराही पा- इन्द्राणी पा - चामुण्डी पा
मातृभ्यो नमः, लोकमातृभ्यो नमः, सर्वमातृभ्यो नमः
सर्वमातृगणेभ्यो नमः। नानारूपा मातरः प्रतिदिशं व्याप्यस्थिताः
दिव्यान्तरिक्षभौमाः पातालनिवासिन्यश्चेहायान्तु काल्याज्ञया
मामनुगृह्णन्तु प्रतिगृह्णन्तु पूजां सौम्यरूपधारिण्यस्ताभ्ये
देवीभ्यो नमो नमः स्वाहा।
घ्रूं नमः पराया गोप्त्रे नमः।
भूतनाथाय विद्महे, भवपुत्राय धीमहे। तन्नः शास्ता प्रचोदयात्।
तत्पा। ह्लीं दुर्गायै नमः तत्पा।
षण्मुखाय नमः। सनत्कुमाराय विद्महे, शक्तिहस्ताय धीमहे।
तन्नः स्कन्दः प्रचोदयात्। तत्पा।
शें शेषिकायै नमः। मुण्ड्यै नमः चामुण्ड्यै नमः
शेषिका पार्षदीभ्यो नमः।

अन्तरेवं बलिं दत्त्वा गोपुरद्वारि पूजयेत्।

जयायै नमः - विजयायै नमः।

अष्टदिक्ष्वसिताङ्गादि भैरवेभ्यो बलिं हरेत्।

असिताङ्गभैरवाय नमः इत्यादि।

द्वितीयावरणे दद्यात् क्षेत्रपानां बलिं ततः।

अलोहाय नम इत्यादि।

दद्याद् देवग्रहादिभ्यस्तृतीयावरणे बलिम्

देवग्रहेभ्यो नम इत्यादि।

देवासुरग्रहादीनां बलिदाने तदा तदा

पूर्वस्यां दिशि पूर्वैश्च तत्र तत्र बलिं हरेत्।।

पूर्वस्यां दिशि काल्याश्शक्ते ये गणा वज्रपाणयः

श्वेता श्वेताक्षा श्वेतलोहिता।।

दिव्यन्तरिक्षभौमाः पातालनिवासिनश्च तेभ्यस्ता-

भ्यो नमो नम स्वाहा

आग्नेय्यां दिशि काल्याः शक्तेः ये गणाः शक्ति पाणयो रक्ता

दक्षिणस्यां दिशि दण्डपाणयः कृष्णाः।

नैऋत्यां दिशि खड्गपाणयश्श्यामाः

वारुण्यां दिशि पाशपाणयश्शबलाः

वायव्यां दिशि अङ्कुशपाणयः पीताः

उत्तरस्यां दिशि गदा पाणयः सिताः

ऐशान्यां दिशि शूलपाणयः कपिलाः

ऊर्ध्वायां दिशि पद्मपाणयः सूक्ष्माः

अधस्ताद् दिशि विषपाणयो धूम्राः।
बलिपीठं समासाद्याथाष्टदिक्ष्वध ऊर्ध्वतः।
जयादीनां बलिं दत्वा ये भूताद्यणुना पुनः ।।

पूर्वादि दिक्षूर्ध्वभागे बलिं दद्यात् समभितः।
ये भूताः पुरस्सदो निशाचरारौद्रस्सन्तोऽसन्तस-
दसन्तो विरूपा विश्वरूपा भीमरूपा घोररूपा मृगास्या
विहगाननाः

पुष्टिकृतोऽपुष्टिकृतः कामदाश्च बलिमिच्छन्ति
तेषां सर्वेषां बलिं हरामि
महद्भ्यः क्षुद्रकेभ्यस्तेभ्यस्ताभ्यो नमो नमः
ये भूताः दक्षिणसदः ये भूता पश्चिमसदः
ये भूता उत्तरसदः ये भूता उपरिषदः
ओं क्षेत्रपालाय नमः - तत्पा-
औत्सवो बलिराख्यातश्चोभयोरेकमचरेत्
यात्रा पूर्वादिने रात्रौ कुर्यात् तत्र महाबलिम् (बहि)
गत्वाथ ग्रामपर्यन्ते नगरे चत्वरे वने
चैत्ये चतुष्पथे रथ्यापीठिकासु बलिं हरेत्
ये समस्तं जगद्व्यप्य तिष्ठन्ति बलिकाङ्क्षिणः
शक्तिपार्षदास्सर्वे गृह्णन्तु बलिमुत्तमम्
ओं नमो भूतेभ्यो भूतिकृद्भ्यस्सर्वेभ्योऽरिष्टकृद्भ्योऽरिष्ट-
कृद्भ्यश्चरकृद्भ्योऽचरकृद्भ्योव्याप्तेभ्यो व्याप्तेभ्यस्सर्वभूतरूप
धरेभ्यो विरूपेभ्यस्सद्भ्यो

सद्भ्यस्तेभ्यस्ताद्भ्योश्शक्तिपार्षदेभ्यो नमो नमः।
सर्वत्राभ्यां बलिं दत्त्वा स्नात्वा कौतुकयोजिताम्।
चितिमूले समायोज्य सकलीकृत्य पूजयेत् ।।

शय्यामास्तीर्य सम्पूज्य पीठं तत्र यथाविधि।
कौतुकं शोधयित्वा च भूतसंहृतिपूर्वकम् ।।

पीठमाराध्याभिवाह्य प्रकलय्य च कौतुकम्।
मूलबिम्बात् समावाह्य तां
संस्थाप्य शयनेऽभ्यर्च्य शाययित्वा यथाविधि।
उत्थाप्याथ परेद्युस्तां संस्नाप्याभ्यर्च्य तां पुनः ।।

मूलबिम्बे नियोज्याथ यात्राहोमं विधाय च।
कर्मार्चायां मूलबिम्बात् पूर्णवत्तां नियोज्य च।
निशासुवर्णमरिचचूर्णैः सम्पातसंयुतम्।
विलिप्य मूलबिम्बं तद्रक्षामन्त्रेण कल्पयेत् ।।

कर्मार्चां ग्राहयित्वाथ बहिर्गत्वा बलिं हरेत्।
यथादृष्टं तु भूतानां ततोर्ध्वजगता चितिम् ।।

तस्यां देव्यां नियोज्याथ गणैस्सर्वजनैवृताम्।
आरोप्य वाहने देवीं जलतीरं शनैर्न्नयेत् ।।

अवरोप्याथ तां पीठे न्यस्य संस्नाप्य तां जले।
आवाह्य वारुणं तीर्थं पीठपूजापुरस्सरम् ।।

निमज्य तज्जले देवीं पुण्याहं वाचयेत्ततः।
भूयो निमज्य हेमादि चूर्णैस्संघृष्य तां शिवाम् ।।

स्वमूर्ध्नि दत्वा भक्तानां पुनः कृत्वाघमर्षणम्।
निमज्य त्रिर्जले देवीं पीठे विन्यस्य सादरम् ।।

सम्भूष्य वसनाद्यैस्तु समभ्यर्च्य निवेद्य च।
हुत्वाग्नौ बलिमाहृत्य जले देवीं प्रसाद्य च ।।

गृहं द्रुततरं गत्वा मूलबिम्बे नियोज्य ताम्।
संस्नाप्याभ्यर्च्य सन्तोष्य रक्षेत्तालत्रयादिना ।।

तद्दिने वा परेद्युर्वा संस्नाप्य कलशैश्शुभैः।
अभ्यर्च्य प्रीणयित्वा तां रात्रौ भूतबलिं हरेत् ।।

।। इति कलशचन्द्रिकायां कालीभागे षष्ठपटलः समाप्तः ।।

# कलशचन्द्रिकायां कालीभागः
# सप्तमः पटलः

बहुबेरविधानेन यत्र देवी प्रतिष्ठिता।
मृत्काष्ठालेख्यभेदेन प्रतिमात्र त्रिधोदिता ।। १ ।।

तासां तु स्नपनार्हात् तद्विशेषः प्रकथ्यते।
कर्मार्चा तत्र कर्त्तव्या स्नपनार्हा सुशोभना ।। २ ।।

यत्र देवीं स्नपितयेत्तत्र पीठार्चादनु।
आवाह्य मूलबिंबेऽथ विधाय सकलीक्रियाम् ।। ३ ।।

स्नानान्तमुपचर्याथ कर्मार्चामग्रतः स्थितम्।
भूतसंहारसृष्टिभ्यां संस्कृतां लिपिविग्रहाम् ।। ४ ।।

कृत्वास्यां पीठमभ्यर्च्य समावाह्य हृदम्बुजात्।
सकलीकृत्य तस्यां तु मूलबिम्बात् परं महः ।। ५ ।।

आदाय मनुवित् सम्यक् पुष्पपूर्णकराञ्जलौ।
आयोज्य सकलीकृत्य स्नापयेत् परमेश्वरीम् ।। ६ ।।

ततः पूर्ववदादाय मूलबिम्बे नियोज्य च।
तां जीवन्यासादिसकलं कृत्वा सम्पूजयेच्छिवाम् ।। ७ ।।

यत्र संस्थापिता देवी शिवक्षेत्रे गृहान्तरे।
मातृभिर्वीरविघ्नाभ्यां विशेषस्तत्र कथ्यते ।। ८ ।।

देवधाम्नो यदा जीर्त्तिः सङ्कोचादि विधानतः।
देवालयं नवीकृत्य संशोध्य स्नापयेद्विभुम् ।। ९ ।।

देव्या स्नपनमात्रं तु मातृणां च समाचरेत्।
देवी धाम्नो यदा जीर्त्तिस्संकोचादि विधिं बुधाः ।। १० ।।

कृत्वा देव्याश्च मातृणां नवीकृत्य तदालयम्।
विशुद्ध्यादिक्रमाद् देवीं मातृंश्च स्नपयेत्सुधीः ।। ११ ।।

तदानीं स्नपयेद् देवीमुभयत्र समं यदा।
जीर्त्तिस्तदोभयत्रापि पूर्वोक्तं सर्वमाचरेत् ।। १२ ।।

निमित्तं यत्र जायेत तत्र दोषानुसारतः।
विशुद्धिं स्नपनं कुर्यादन्यत्र स्नानमेव च ।। १३ ।।

उत्सवं चोभयत्रापि ध्वजस्थापनपूर्वकम्।
कुर्यात् स्वस्वोक्तमार्गेण तीर्थस्नानवसानिकम् ।। १४ ।।

स्वस्वालयं परीत्यान्तर्भूतानां बलिमाहरेत्।
बाह्येषु दिक्षु युगपत् परीत्यैव बलिं हरेत् ।। १५ ।।

बलिं दत्त्वा पूर्वमन्तः क्रमाद् देवस्य पार्षदान्।
एक एव ततो देव्या बहिस्तु युगपद् ददेत् ।। १६ ।।

दद्यात्तामुभयत्रोभौ बलिं स्वस्वोदितेन वा।
यात्रायां पुरतो देवं पृष्ठे देवीं नयेद् बुधः ।। १७ ।।

प्रासादे विमुखे स्वस्व प्रधानं धारमार्गतः।
निष्क्रमेच्च बलिं दद्यात् सुमुखं तु समं यथा ।। १८ ।।

यद्यत्करोति कर्मान्यत् तत्तत्सम्मुखमाचरेत्।
एतच्छेषतया वक्ष्ये मातॄणां स्नपनक्रमः ।। १९ ।।

बीजाङ्कुरविधानेन यद्वा स्नानं समाचरेत्।
शैवोक्तान्येव बीजानि द्रव्याणि बलिदेवताः ।। २० ।।

भूतकुरान्धसा यद्वा वापसेकौ च मूलतः।
दोषे गरीयस्युत्पन्ने सप्तशुद्धिर्विधाय च ।। २१ ।।

पृथक् पृथक् स्नपितयेत् मातृवीरगणेश्वरौ।
मातॄणां कलशार्थं तु मण्डपं रचयेद् यदि ।। २२ ।।

वक्ष्यमाणक्रमेणैव मण्डपं शोधयेत्ततः।
अस्त्रेण सूत्रदामभ्यां संवेष्ट्य द्वारदेशतः ।। २३ ।।

निखानयेत् तोरणानि प्लक्षादीनि ध्रुवाणुना।
दिक्कालनामभि स्थाप्या दिक्ष्वष्टासु ध्वजास्तथा ।। २४ ।।

चण्डेशीं च प्रचण्डेशीं द्वारपार्श्वस्थ कुम्भयोः।
क्रोधाक्षीं क्रोधवदनां सौम्यां च सुमुखीं पुनः ।। २५ ।।

भद्रां तद्वत्सुभद्रां च पूर्वादिक्रमतोऽर्चयेत्।
स्थलशुद्ध्यादिकं कृत्वा कुम्भेशं पूजयेत्ततः ।। २६ ।।

बीजेशं पूजयेत्तस्मिन् वर्धनीमस्त्र मन्त्रतः।
अग्निं सञ्जनयेत् पश्चादङ्गबीजैः क्रमाद् गुरुः ।। २७ ।।

एकस्मिन्नेव च क्षेत्रे नवखण्डानि कल्पयेत्।
नवभिः पञ्चकैर्यद्वा नवभिर्नवकैस्तु वा ।। २८ ।।

नवभिः पञ्चविंशद्भिः नवत्यष्टघटैस्तु वा।
मध्यस्थ ब्रह्मकुम्भांस्तु पञ्चगव्येन पूरयेत् ॥ २९ ॥

मृज्जलैरक्षतोदैश्च कषायैर्गन्धवारिभिः।
दिग्गतान् पूरयेत् कुम्भान् शिष्टान् शुद्धोदकेन च ॥ ३० ॥

वीरभद्रादिविघ्नान्तान् मध्याद्येषु प्रपूजयेत्।
अधिवासहुतं कुर्यात् कुण्डे नागपदस्थिते ॥ ३१ ॥

गायत्रीभिस्तु नवभिः क्रमात् पक्वानि होमयेत्।
समिद्भिश्चरुभिश्चाज्यैस्सक्तुभिश्शालिभिस्तथा ॥ ३२ ॥

सर्षपैश्चतिलैस्स्वस्वमनुभिः जुहुयात् पृथक्।
उदुम्बरपलाशार्ककदम्बाश्वत्थरोहिणाः ॥ ३३ ॥

काष्मर्यपामार्गबैल्वाः समिधः परिकीर्त्तिताः।
वीरादिविघ्ननिष्ठेषु पूर्णास्वस्वनिजार्णतः ॥ ३४ ॥

सम्पातं पृथगादाय स्वस्वकुम्भेषु योजयेत्।
पूरणक्रमतस्सर्वानुद्धृत्य स्नपयेत्तथा ॥ ३५ ॥

आसां च स्नपनानर्हे संस्थाप्यादर्शमग्रतः।
तस्मिन्नायोज्याभिषिच्य मूलबिम्बे नियोजयेत् ॥ ३६ ॥

मातृका सप्तवर्गोद्यद्बीजैश्च स्वस्वनामभिः।
ङे नत्यन्त्यैस्तु मातृणामुद्धार्यन्मनवः क्रमात् ॥ ३७ ॥

नामस्वाद्यर्णबीजाढ्यं वैघ्नो ङे नतियुङ्मनुः।
दीर्घयुक्तैस्स्वस्वबीजैष्षडङ्गानि प्रकल्पयेत् ॥ ३८ ॥

शैवे पीठेऽर्चयेद् वीरं स्वोदिते गणनायकम्।
जयादिशक्तियुक्तेऽर्च्याः शाक्ते पीठे च मातरः ।। ३९ ।।

अङ्गैर्मातृभिराशेशैः तदस्त्रैश्च यजेत् प्रथक्।
वीरेशयजने मातृविघ्नानष्टदिशासु च ।। ४० ।।

ब्रह्माणी यजनेऽस्यास्तु स्थाने पीठेशमर्चयेत्।
या पूज्यतेऽस्यास्तस्यास्तु परिवारेण संस्थिताः ।। ४१ ।।

ध्यानप्रकारो गायत्री मनवः पूर्वमीरिताः।
शिवेनमातृभिस्सार्धं पृथक् काल्यास्समीरितः ।। ४२ ।।

क्षेत्रग्रामपुरेणैवं स्नपनप्रक्रियाक्रमः ।।

।। इति कलशचन्द्रिकायां कालीभागे सप्तमपटलः समाप्तः ।।

।। कालीभागः समाप्तम् ।।

# ।। कलशचन्द्रिकायां सामान्यविधाने प्रायश्चित्त पटलः ।।

।। श्रीगणपतये नमः।।

इह नैमित्तिकस्नान प्रसङ्गपतितानि च।
निमित्तान्यथ कथ्यन्ते कथितान्यागमान्तरे ।। १ ।।

हासरोदप्रतीतिश्च बिम्बे स्वेदस्तथोष्णता।
चलनं पतनं भङ्गच्छेददाहादिकान्यपि ।। २ ।।

दिव्यान्यशनिनादाहो भञ्जनं चानलं तथा।
उत्काश्मासृक् प्रपताद्यमान्तरिक्षं विदुर्बुधाः ।। ३ ।।

उत्पाटनं हृतिश्चोरैर्बिम्बस्य स्पर्शनं तथा।
प्रासादे मण्डपेऽलिन्दे प्राङ्कणे देवमन्दिरे ।। ४ ।।

पाकशाला कूपगृहे बलिपीठगृहादिषु।
मरणं च प्रसूतिश्च तत्संबद्धि प्रयोजनम् ।। ५ ।।

चण्डालसूतिकोदक्य पतितानां प्रवेशनम्।
विण्मूत्रमांसास्थिरक्तश्लेष्मादिपतनं तथा ।। ६ ।।

उलूकगृध्रकाकोष्ट्रकोलक्रोष्टर्क्षडुण्डुभैः।
प्रवेशनं गर्भगेहेच्छत्राकादिसमुद्भवः ।। ७ ।।

पूजालोपः क्षुद्रमन्त्रैर्निषिद्ध कुसुमादिभिः।
यजनं मरिचालेपः क्षुद्रान्यद्रव्ययोजनम् ।। ८ ।।

मण्डूकमत्स्यकीटादिदुष्टद्रव्य निवेदनम्।
निमित्तान्येवमुक्तानि भौमान्यागमपारगैः ।। ९ ।।

इयत्ताननिमित्तानां पुरुषाणां प्रमादतः।
एकेष्वेकतरेजाते ज्ञात्वा दोषबलाबलम् ।। १० ।।

यद्वा बहुषु जातेषु सद्योनिष्कृतिमाचरेत्।
अल्पेल्पा निष्कृतिश्चोग्रे बहुष्वपिगरीयसि ।। ११ ।।

यत्रसद्यो निष्कृतिः स्यात् तत्राप्यथवा भवेत्।
प्रतिमा सूक्ष्मदेहः स्यात् प्रासादं मूल ईशितुः ।। १२ ।।

तयोरेकतरे दुष्टे द्वयोश्शुद्धिं समाचरेत्।
स्थानेदुष्टे भुवश्शुद्धिं बिम्बशुद्धिं च कारयेत् ।। १३ ।।

बिम्बे दुष्टे तु बिम्बस्य स्थानस्यावस्रुतोक्षणम्।
यस्मिन् कस्मिंश्च काले वा दोषस्सम्पाद्यते तदा ।। १४ ।।

कृत्वा गोदानरूपां तु निष्कृतिं शेषमाचरेत्।
बिम्बप्रासादयोश्शुद्धिः पूर्वमेव समीरिता ।। १५ ।।

स्थानयद्दोषदुष्टं तत्तालहस्तादिमानतः।
खादिरेण खनित्रेण तत्तदस्त्रमनुं जपन् ।। १६ ।।

खात्वा नैऋत दिग्भागे पांसून् दूततरं क्षिपेत्।
दर्भादीन्धनदीप्तेन दग्ध्वा तत्स्थलमग्निना ।। १७ ।।

तद्भस्महृत्वा गोमूत्रविप्रपादोदगव्यकैः।
आसिच्यापूर्यावटं तत्सुमृद्भिर्दाढर्यतां नयेत् ।। १८ ।।

तत्स्थले गा निवास्याथ विप्रान् सम्भोज्य सादरम्।
उद्धृत्योच्छिष्टमासिच्य गव्यैश्च विकिरैः किरेत् ।। १९ ।।

तत्रैवाष्टदले पद्मे देवं च विधिवद् यजेत्।
खननादित्रयं कुर्यात् पूर्वं प्रासादशोधनात् ।। २० ।।

पूरणादिचतुष्कं तु पञ्चकान् प्राक् समाचरेत्।
स्वर्णेनाधृष्य सिञ्चेत् तद्दृष्टं यदि शिलातलम् ।। २१ ।।

स्थानशुद्धिरिति प्रोक्ता देशिकैरागमान्तरे।
अर्चास्थानगतान्येव मुक्तानि कतिचिन्मया ।। २२ ।।

निमित्तान्यथ कथ्यन्ते तान्निष्कृति भवानि च।
स्नपनप्रक्रियास्वेव मुक्तासूपहृतिर्भवेत् ।। २३ ।।

पुरुषाणां प्रमादाद्वा यद्वान्यैस्तिर्यगादिभिः।
तत्रदोषोपशान्त्यर्थं प्रायश्चितानि कानिचित् ।। २४ ।।

यथाश्रुतं यथादृष्टं कथयामि समासतः।
वैदिकीं वैदिकप्राये तान्त्रिकीं तत्र भूयसीम् ।। २५ ।।

कर्मण्युभयसम्भिन्नेऽप्युभयीं निष्कृतिं चरेत्।
भिन्ने पात्रेऽङ्कुरे यद्वा श्वसृगालादिदूषिते ।। २६ ।।

यत्किञ्चिदप्ररूढेऽपि भूयो वापं समाचरेत्।
पूर्वोक्तबीजचैतन्यमायोज्य स्वर्णपूर्वके ।। २७ ।।

पात्रेषु तेषु वान्येषु बीजान्युक्त्वाथ पूर्ववत्।
दुष्टां चितिं क्षालनाद्यैः विशोध्यायोज्य मूलतः ।। २८ ।।

उप्तबीजेष्वथावाह्य सकलीकरणे कृते।
इष्ट्वा तन्निष्कृतिहुतं कृत्वा सम्पातमर्पयेत् ।। २९ ।।

तत्र त्रिदिवसात्पूर्वमेवं कुर्यात् तदूर्ध्वतः।
बीजोप्तिवत्तु तत्स्थाने वापयेदच्छतण्डुलम् ।। ३० ।।

उल्लिख्य स्थण्डिले वह्निं निक्षिप्याभ्युक्ष्य च त्रिशः।
परिस्तीर्याज्यसंस्कारं कृत्वा स्रुक् स्रुवयोरपि ।। ३१ ।।

आराध्याग्निं पीठमिष्ट्वा देवमावाह्य पूजयेत्।
तारव्याहृतिभिः पीठमनुभिश्च सकृद् घृतम् ।। ३२ ।।

हुत्वा च मूलमनुना घृतमष्टावरं हुनेत्।
ततः स्वस्वेषु तत्त्वैश्च पञ्चविंशति संख्यया ।। ३३ ।।

सम्पूर्णमाज्यं हुत्वाथ परिवारैस्सकृत् सकृत्।
हुत्वा व्याहृतितारैस्तमिष्ट्वाशेषं समापयेत् ।। ३४ ।।

अत्रेषुतत्वाज्यहोमा निष्कृत्यर्थमुदीरितः।
तदन्यत् सकलं कर्म सामान्येन समीरितम् ।। ३५ ।।

मूलमन्त्राज्यहोमान्ते पूर्वं पूजाणुहोमतः।
निष्कृत्युदितमन्त्रैस्तु सर्वत्रास्तु हुतक्रिया ।। ३६ ।।

तिर्यग्गतेषु श्यामेषु लोहितेष्वङ्कुरेष्वपि।
प्रोक्तं निष्कृतिहोमं च कृत्वा सम्पातमर्पयेत् ।। ३७ ।।

द्रव्याणां देवतानां च बलिदाने विपर्यये।
सवनेज्यात्यये तद्वन्मूलेनाष्टशतं घृतम् ।। ३८ ।।

हुत्वा समर्प्य सम्पातं यथार्हं शेषमाचरेत्।
उष्णस्य बलेर्वापि लोपे सैवेह निष्कृतिः ।। ३९ ।।

आर्चितं क्षालनाद्येषु भिन्नं यद् दूषितं तु वा।
तद्गतां चितिमुद्वास्यरवे तत्सन्त्यज्य पूर्ववत् ।। ४० ।।

सम्पाद्यभ्यर्च्य देवस्य क्षालनादीनि कारयेत्।
प्रायश्चित्तादिहोमेषु क्रियमाणेषु पावके ।। ४१ ।।

नष्टे तन्निष्कृतिं वक्ष्ये कथितामागमे बुधैः।
सामान्यजनिते वह्नौ प्रारब्धे होमकर्मणि ।। ४२ ।।

नष्टे विभावसौ तत्र निष्कृति सम्यगाचरेत्।
हविराज्येध्मपरिधिप्रणीतादौ तथास्थिते ।। ४३ ।।

सत्ये वेन्धनभस्माद्यं परित्यज्याथ कुण्डगमु।
परिवर्त्य ततो गव्यं शकृत् गुलिकया त्रिशः ।। ४४ ।।

आहृत्याग्निं समाधाय पर्युक्ष्य समिधं क्षिपन्।
अष्टाष्टाज्याहुतीः कुर्यात् गर्भाधानादिकं स्मरन्।
तारेण पूर्णां जुहुयात् तत्र तत्रोक्तमन्त्रतः ।। ४५ ।।

स्रुवेणाज्यं चतुर्वारमादायापूर्य च स्रुवम्।

तिष्ठञ्चतुर्ग्रहघृतं मनस्वत्या हुनेत् ततः ।। ४६ ।।

व्याहृतीभिः पञ्चतत्त्वैः घृतं हुत्वा सकृत् सकृत्।
पीठेज्यापूर्वमावाह्य सम्पूज्यावरणैस्सह ।। ४७ ।।

मूलेनास्त्रेणाष्टशतं हुत्वाज्यं परिवारकैः।
सकृत् समापयेदेवं सामान्या निष्कृतिः स्मृता ।। ४८ ।।

प्रागादिदिक्षु कोणेषु मध्यकुण्डाद्विभावसुम्।
विहृत्य क्रियये यत्र होमांस्तु नव पञ्च वा ।। ४९ ।।

तत्र प्रागाद्यग्निनाशे प्रोच्यते निष्कृतिक्रमः।
पूर्वोक्तेनैव मार्गेण संशोध्यायतनं सुधीः ।। ५० ।।

विहृत्य मध्यकुण्डात्तु वह्न्यंशं तत्र निक्षिपेत्।
हुत्वैकां समिधं तूष्णीं तत्तद्दिक्पोदिताणुभिः ।। ५१ ।।

चतुर्ग्रहघृतं हुत्वा वसुसंख्यं घृतं हुनेत्।
व्याहृतीभिः पञ्चतत्त्वैः पृथक् पूर्णा समन्वितम् ।। ५२ ।।

मूलेनावाह्याष्टशतमूलेनास्त्रेण होमयेत्।
कृत्वैवं निष्कृतिं मध्ये वह्न्यंशाहृतिशान्तये ।। ५३ ।।

दशस्रुवाहुतिं हुत्वा मध्यवह्नौ दशात्मना।
मूलमन्त्रेणाष्टशतं हुनेदाज्यं सपूर्णकम् ।। ५४ ।।

मध्ये कुण्डाग्निनाशेतु सौम्यकुण्डाद्विभावसुम्।
समाहृत्याथ निश्शेषं मध्यकुण्डे विनिक्षिपेत् ।। ५५ ।।

तूष्णीं समिधमाधाय कुर्यादाज्याहुतीस्ततः।

तत्रर्हवह्निसंस्कारधियाथाष्टाष्ट संख्यया ॥ ५६ ॥

चतुर्ग्रहघृतं हुत्त्वा मनस्वत्या च पूर्ववत्।
दशात्मना व्याहृतीभिः पञ्चतत्त्वैः स्रुवाहुतिम् ॥ ५७ ॥

कृत्वावाह्याथ सम्पूज्य मूलेनास्त्रेण होमयेत्।
अथाग्न्यंशं मध्यकुण्डात् सौम्ये निक्षिप्य पूर्ववत् ॥ ५८ ॥

तन्निष्कृतिं विधायाथ मध्ये वापि समारभेत्।
मध्ये सौम्ये च युगपन्नष्टेऽग्नौ निष्कृतिं ब्रुवे ॥ ५९ ॥

सामान्याग्निं समाधाय मध्य कुण्डे यथाविधि।
तत्र तत्रोक्तमार्गेण जनयित्वा विभावसुम् ॥ ६० ॥

चित्तिस्त्रुक् प्रमुखैः षट्भिः चतुर्ग्रहघृतं स्त्रुचा।
हुत्वा दशात्मकेनाथ जुहुयाच्च सुवाहुतिम् ॥ ६१ ॥

चतुर्ग्रहघृतं पश्चाद् व्याहृतिभिः पृथक् पृथक्।
च्छित्वा छित्वाष्टशोहुत्वा पञ्चतत्त्वैस्तथा हुनेत् ॥ ६२ ॥

मूलमन्त्रेणाष्टशतं जुहुयाच्च स्रुवाहुतिम्।
अथ तस्मात् सौम्यकुण्डे निक्षिप्य च विभावसुम् ॥ ६३ ॥

तन्निष्कृतिं विधायाथ हुनेन्मध्ये दशात्मकम्।
यत्र राशीषु मध्ये च त्रयोदश हुताक्रिया ॥ ६४ ॥

मन्त्रा दिग्विहिता एव दिग्गताग्निद्विकेष्वपि।
मध्यकुण्डाग्निनाशे तु मकरादग्निमाहरेत् ॥ ६५ ॥

यत्रैकमेव कुण्डं स्यात् तत्र नष्टे विभावसौ।

सामान्याग्निं समाधाय तस्य संस्कारमाचरेत् ।। ६६ ।।

तत्रार्ह संस्कारधिया हुत्वाष्टाष्टघृताहुतीः।
मनोज्योतिरयाश्चाग्ने होतृभिः षट्भिरेव च ।। ६७ ।।

चतुर्ग्रहघृतं हुत्वा व्याहृतीभिश्च तत्त्वकैः।
अष्टाष्टसंख्ययामूलेनाज्यमष्टशतं हुनेत् ।। ६८ ।।

हुतक्रिया दिङ्नियता क्रियते यत्र तत्र तु।
निष्कृतिं तद्दिगुदितमन्त्रैर्यद्वा समाचरेत् ।। ६९ ।।

तत्त्वाग्निनाशेकर्त्तव्या निष्कृतिर्गुरु वह्निवत्।
अधिवासहुतेष्वेवं कर्त्तव्यो निष्कृति क्रमः ।। ७० ।।

पञ्चहोता प्राचि मन्त्रश्च तु र्होताथ दक्षिणे।
प्रत्यङ्मनस्वती सौम्ये षड्होता परिकीर्त्तितः ।। ७१ ।।

मनस्वती च कोणेषु क्रमेण मनवस्मृताः।
चित्तिस्त्रुगाद्यः प्रथमो दश होतेति कीर्त्तितः ।। ७२ ।।

द्वितीयः पृथिवीत्यादि चतुर्होता समीरितः।
अग्निर्होतेत्यादिमनुः पञ्चहोता तृतीयकः ।। ७३ ।।

सूर्यन्ते चक्षुरित्याद्यः षढ्ढोता च तुरीयकः।
महाहविर्होतेत्याद्यः सप्तहोतात्र पञ्चमः ।। ७४ ।।

वाग्घोतेत्यादिमन्त्रस्तु वाग्घोता षष्ठ उच्यते।
क्रमेण स्वस्वनाम्नवं होतारः षट्प्रकीर्त्तिताः ।। ७५ ।।



ब्राह्मण एक इत्यादि मन्त्राणां दशकं विदुः।

दशात्मकं मनो ज्योतिरित्याद्या च मनस्वती ।। ७६ ।।

येन तेनापि दुष्टेऽग्नौ संस्थाप्य मुकुरं पुरः।
तस्मिन् प्रतिफलय्याग्निं क्षालनाद्याः क्रियाः क्रमात् ।। ७७ ।।

शुद्धदर्शगते वह्नौ प्रतिबिम्बे विधाय च।
विशोधितं तद्दृष्टाग्निचेतन्यं भावयन् सुधीः ।। ७८ ।।

ततः तदग्रे संस्थाप्य पीठपूजापुरस्सरम्।
दीपं तत्र समावाह्य सकलीकृत्य देवताः ।। ७९ ।।

तस्मिन्नायोज्याग्निगतचेतनां च गुरूत्तमः।
भस्मादिसकलं त्यक्त्वा तत्कुण्डमुपलिप्य च ।। ८० ।।

विधिवद् जनयित्वाग्निं तस्मिन् पूर्वचितिं नयन्।
सविशेषं तु नाशोक्तक्रमान्निष्कृतिमाचरेत् ।। ८१ ।।

अग्नये पवमानाय चाग्नये पावकाय च।
अग्नये शुचये चापि स्वाहान्तैर्मनुभिः त्रिभिः ।। ८२ ।।

चतुर्ग्रहाज्य होमान्ते कुर्यादेभिः स्रुवाहुतिम्।
ऋषिभिस्तु पावमानीभिः षट्भिर्दोषे गरीयसि ।। ८३ ।।

चतुर्गृहघृतेनैव तिष्ठन् दोषप्रशान्तये।
याज्यापुरोनुवाक्यया कुर्यात् पूर्णाहुतित्रयम् ।। ८४ ।।

अग्न आयाह्यग्ने पवस्वाग्ने पावकपूर्विकाः।
सनं पावकाग्निश्शुचिरुदग्ने शुचयस्तथा ।। ८५ ।।



पावमान्यऋचस्त्वेता याजुषाः परिकीर्त्तिताः।

क्रियामध्येऽन्तरागच्छेद्यदि तत्र मनस्वती ।। ८६ ।।

जुहोतु सर्वयज्ञं वा तत्तद्दोषोपयुक्तितः।
पञ्चदुर्गा मनस्वती महाव्याहृतिभिः क्रमात् ।। ८७ ।।

अर्कवाराहृताज्येन जित्त्वा हुत्त्वा नवाणुभिः।
दशस्रुवाहुतीः कुर्यात् प्रजपत्यादि मन्त्रकैः ।। ८८ ।।

ओं प्रजापतये स्वाहा प्रथमो मनुरीरितः।
हिरण्यगर्भाय तथा भृगूणां तपसे तथा ।। ८९ ।।

अङ्गिरसां तपसे च महाव्याहृतयस्तथा।
तिस्रो व्याहृतयश्चेति दशमन्त्राः प्रकीर्त्तिताः ।। ९० ।।

ताराद्या व्याहृतीस्तिस्रो महाव्याहृतयस्मृताः।
मन्त्रैरेभिर्हुतक्रिया सर्वयज्ञमितिस्मृतम् ।। ९१ ।।

मनोज्योतिरयश्चाग्ने यदस्मिन् स्वस्तिनोऽपि च।
मिन्दाद्वयं व्याहृतयश्चोक्ता स्युस्सर्वनिष्क्रियाः ।। ९२ ।।

शलभादीन्यनस्थीनि पावकेऽत्र पतान्तिचेत्।
पुनस्त्वादित्येत्याद्येन तूष्णीं समिधमादधन् ।। ९३ ।।

स्रुवाहुतिं च हुत्वाथ तेनैव मनुना ततः।
जुहोतु सर्वयज्ञं वा यद्वाथो सर्वनिष्क्रियाः ।। ९४ ।।

अत्रोक्तेष्वप्यनुक्तेषु ज्ञात्वा दोषबलाबलम्।
निमित्तेषूपपत्या च विदध्यान्निष्क्रियां बुधः ।। ९५ ।।



अथ सामान्यतो वक्ष्ये निष्कृतिं होमकर्मणि।

परिधिस्थापनात् पूर्वमन्वाधानस्य तन्मनोः ।। ९६ ।।

विस्मृतिर्यदि विज्ञाता कृत्वा मन्त्री तदैव तत्।
चक्षुन्यनन्तरं कुर्याद्यद्वो देवा अतीतृचा ।। ९७ ।।

मूलाणुनाप्येकवारमाज्येनाथ स्रुवाहुतिम्।
प्रधानान्तरं यद्वा ज्ञाता तत्कर्म विस्मृतिः ।। ९८ ।।

समाप्य तत्ककर्मशेषं पुनरावर्त्तयेत् क्रियाः।
संस्रुतं वा प्रणीतोदं तत्पात्रं न्यग्विलं तु वा ।। ९९ ।।

सम्पूर्याब्धिंगतैः कुर्यात् ततं मेति स्रुवाहुतिम्।
बन्धनन्यसने दर्भसमिधां वा परिस्तृतौ ।। १०० ।।

पर्युक्षणे प्रणीतायां न्यसेऽन्यद्द्रव्यसादने।
आज्यस्रुक् स्रुवसंस्कारे तत्तत्काले तु विस्मृते ।। १०१ ।।

पक्वहोमात् पुरा ज्ञाते कृत्वा तन्न्यसनादिकम्।
व्याहृतीभिः स्रुवेणाज्यं हुनेच्चक्षुष्यनन्तरम् ।। १०२ ।।

अतीते पक्वहोमे तु न कुर्याद्विस्मृतं पुनः।
ज्ञाते सद्यः स्रुवेणाज्यं व्याहृतीभिः हुनेत् ततः ।। १०३ ।।

दुष्टे हविषि पक्वात् प्राक् क्षिप्त्वाथो तद्धविर्ज्जले।
सम्पाद्यान्यच्च संस्कृत्य हविश्चक्षुष्यनन्तरम् ।। १०४ ।।

मिन्दाभुविद्वयं कृत्वा हुनेत् पक्वं यथाविधि।
स्विष्टकृद्धोमतः पूर्वं हविर्द्दुष्टं भवेद्यदि ।। १०५ ।।

चतुरात्तघृतेनैव स्रुचा स्विष्टकृतं हुनेत्।

यद्वापदानसमये होमकालेऽथवा हविः ।। १०६ ।।

भूमौ पतति चेत्त्वन्नं सत्त्वन्नेति द्वयेन तु।
कृत्वा स्रुवाहुतिं भूयः पक्वहोमं समाचरेत् ।। १०७ ।।

अवदाते स्विष्टकृति पतिते भूतले यदि।
चतुर्गृहीतेनाज्येन तदास्विष्टकृतं हुनेत् ।। १०८ ।।

हविर्दोषे तु विज्ञाते समाप्ते यदि कर्मणि।
शुद्धेन हविषा भूयस्तत्कर्मावर्त्तयेत् बुधः ।। १०९ ।।

क्रियामध्ये तु दोषेण त्याज्यो यदि भवेद्वसुः।
शेषं समाप्य त्यक्त्वाग्निमाधायावर्त्तयेत् क्रियाः ।। ११० ।।

प्रधानानन्तरं तत्र निमित्तं यदि सम्भवेत्।
कुर्यात् पूर्णाहुतिं विद्वान् तन्निमित्तानुसारतः ।। १११ ।।

आधारचक्षुष्याधारपक्वादिप्रधाने विस्मृते कृते।
तदानीमेव विज्ञाते यर्थार्हं तत्समाचरेत् ।। ११२ ।।

परिधिपरिस्तरणेध्मं बहिस्सपवित्र सन्नहनम्।
स्रुक् स्रुवपूर्वाणां वा द्रव्याणां नाशदाहादौ ।। ११३ ।।

सम्पाद्य तद्यथा पूर्वं पुनर्निष्कृतिमाचरेत्।
त्वमग्ने आयास्याद्यया च प्रजापत ऋचा तथा ।। ११४ ।।

एकैकवारमाभ्यां तु स्रुवेण जुहुयात् घृतम्।
इध्यसंख्या न पूर्णा चेदनुयाजे च विस्मृते ।। ११५ ।।



उत्पाद्य तत्स्रुवेणाज्यं यत्पाकत्रयादिना हुनेत्।

संस्रुते वा हविष्याज्ये कुर्यान्मिन्दाहुतिद्वयम् ।। ११६ ।।

खरकाकाश्वचण्डालसूतिका पतितैस्तथा।
रजस्वलाशूद्ररक्तपुरीषास्थादिभिर्नृणाम् ।। ११७ ।।

संस्पृष्टो यदि वह्नि स्यात् तं त्यक्त्वान्यं समाहरेत्।
एभिरन्यैरीदृशैर्वा पारम्पर्याद् यदि स्पृशेत् ।। ११८ ।।

आधायाग्निं समित्काष्ठे त्यक्त्वात्राहृत्य पावकम्।
निक्षिप्य समिधं पावमानीभिः पूर्णया हुनेत् ।। ११९ ।।

पतित्वा सास्थिमत् प्राणी म्रियतेऽग्नौ पतेच्छवम्।
ऋग्भिस्तु पावमानीभिः पूर्णाहुतिमथाचरेत् ।। १२० ।।

मृतास्थिमत्व्रणजातैः पारम्पर्यात्स्पृशेद्वसौ।
पुनस्त्वा समिधं क्षिप्वा कुर्यात् तेन स्रुवाहुतिम् ।। १२१ ।।

ताम्रचूडर्क्षडुण्डुभशिवासूकरपूर्वकैः।
मार्जारादिमलाशौचिपूर्वैः स्पृष्टे विभावसौ ।। १२२ ।।

तिसृभिः पावमनीभिः पूर्णाहुतिमथाचरेत्।
पिपीलिकाणुस्त्रीबूककीटभ्रमरमक्कुणाः ।। १२३ ।।

मक्षिका शलभाद्यास्तु प्राणिनोऽनस्थयः परे।
पतन्त्यग्नौ पुनस्त्वेति समिधन्निक्षिपन् वसौ ।। १२४ ।।

ततस्तेनैव मनुना जुहुयाच्च स्रुवाहुतिम्।
नखश्लेष्माश्रुकर्णाक्षिमलस्वेदादि पातने ।। १२५ ।।



मनुभिः पावमानीभिः जुहुयाच्च स्रुवाहुतिम्।

रुद्राय स्वाहेति हुनेद् अशृतेऽन्ने स्रुवाहुतिम् ।। १२६ ।।

विदग्धे निर्ऋतये स्वाहा वायवे तु द्रवीकृते।
विमृश्य निष्कृतिं विद्वान् वैदिकीं तान्त्रिकीमपि ।। १२७ ।।

अन्योन्यं योजयित्त्वात्र कुर्यात् स्वस्वानुरूपतः ।।

संस्कृते मण्डपेऽश्वादि प्रवेशाद् दूषिते यदि।
मुष्टिसम्मार्जनाद्यैस्तं शोधयित्वाथ मण्डपम् ।। १२८ ।।

मूलेनास्त्रेणाष्टशतं हुत्वा सम्पातमर्पयेत्।
ध्वजतोरणबाधे तु संस्थाप्यापरमत्र च ।। १२९ ।।

संयोज्य पूर्वचैतन्यमिष्ट्वा तद्देवतामपि।
तत्तन्मन्त्रैरष्टशतं हुत्त्वाज्यं च समर्पयेत् ।। १३० ।।

द्वारकुम्भादिनाशे च तदद्भिर्वान्य पाथसा।
घटमन्यं समापूर्याथेष्ट्वा तद्गतदेवताम् ।। १३१ ।।

अस्त्रेणाष्टशतं हुत्वा सम्पातं च समर्पयेत्।
सम्पूजितेऽथ कलशे भिन्ने वा संस्रुतेऽपि वा ।। १३२ ।।

तत्रान्यं घटमाधाय लोष्टशिष्टाम्भसा सह।
आपूर्य मूलेनावाह्य पञ्च तत्त्वैस्तथाष्टशः ।। १३३ ।।

मूलेनास्त्रेणाष्टशतं हुत्वा सम्पातमर्पयेत्।
स्नपनायोद्धृते कुम्भे पतिते मार्गदेशतः ।। १३४ ।।

तत्रैव स्वस्तिकक्लृप्तपीठे लोष्टजलैस्समम्।
घटमन्यं प्रपूर्याथ सर्वं पूर्ववदाचरेत्।

भिन्ने तु द्रव्यकलशे घटमन्यं प्रपूर्य च ।। १३५ ।।

तत्र द्रव्येण समभ्यर्च्य कृत्वा मिन्दाहुतिद्वयम्।
इष्टतत्त्वस्वमूलास्त्रैर्हुत्वा सम्पातमर्पयेत् ।। १३६ ।।

व्यत्यासे द्रव्यकुम्भानां व्यत्यस्तं तु प्रपूर्य च।
यद्वा देवा अतीत्यादि मनुना च स्रुवाहुतिम् ।। १३७ ।।

इष्टतत्वादिभिस्तद्वद्धुत्वा सम्पातमर्पयेत्।
स्रुतोदं कलशं सेककाले तोयैः प्रपूर्य च ।। १३८ ।।

तप्त्वा सिञ्चामि यजुषेत्यादिना मनुना स्पृशन्।
जप्त्वा तत्त्वानि मूलास्त्रौ कलशेनाभिषेचयेत् ।। १३९ ।।

भिन्ने तु बह्मकलशे पीठपूजापुरस्सरम्।
अन्यं कलशमाधाय तच्छिष्टेनाम्भसा सह ।। १४० ।।

गालिताद्भिस्समापूर्य सम्पूज्य च यथाविधि।
सर्वनिष्कृतिमन्त्रैर्वा सर्वयज्ञमनूत्तमैः ।। १४१ ।।

कृत्वा स्रुवाहुतिं पञ्चतत्त्वैरष्टाष्टसंख्यया।
सम्पूर्णं व्याहृतीभिश्च मूलेनास्त्रेण होमयेत्।
सम्पातमपि संस्पृश्य बहुदानपुरस्सरम् ।। १४२ ।।

कलशेनाभिषिक्तं विप्राणामाशिषा सह।
अर्चितं कलशं केन हेतुना दूषितं भवेत् ।। १४३ ।।

तदग्रे स्वस्तिके क्लृप्तपीठे स्वर्णं निधाय च।
मूलेन तस्मिन्नावाह्य कलशेनाभिषिच्य तम् ।। १४४ ।।

कलशस्थां चितिं तस्मिन्नायोज्य क्षालनादिभिः।
विशोध्य कलशं तत्र समापाद्याथ पूर्ववत् ।। १४५ ।।

स्वर्णसंस्थां चितिं तस्मिन्नारोप्येष्वेषु तत्त्वकैः।
स्रुचा चतुर्ग्रहघृतमष्टधा च स्रुवाहुतिम् ।। १४६ ।।

मूलास्त्राभ्यामष्टशतं हुत्वा सम्पातमर्पयेत्।
विज्ञापिते वा कलशे प्रारब्धे स्नपनेऽथवा ।। १४७ ।।

कलशे वा मन्त्रबिम्बे दुष्टे वा केन हेतुना।
कथितामुभयत्रापि निष्कृतिं कारयेद् बुधः ।। १४८ ।।

उत्सवार्थं संस्थापिते ध्वजे तु पतिते भुवि।
निक्षिप्याग्निं तत्समिद्धे परिधेः प्रागथार्चयेत् ।। १४९ ।।

मूलेन कलशं भूयः पक्वान्तं कर्म कारयेत्।
शन्नो देव्या घृतं तद्वद् यस्यां दिशि पतत्यसौ ।। १५० ।।

तद्दिगीश्वरनाम्ना च हुत्वाथाष्टोत्तरं शतम्।
सम्पातसर्पिस्संस्पृश्य कलशे च ध्वजे तथा ।। १५१ ।।

ध्वजमस्त्रेण सम्प्रोक्ष्य पुण्याहं प्रविधाय च ।।

ध्वजस्थां चितिमुद्वास्य कलशे तां नियोज्य च।
स्थापयित्वा ध्वजं विप्रैर्मूलेनावाह्य पूजयेत् ।। १४२ ।।

पञ्चतत्त्वैस्तथाष्टाष्ट तद्वद्वाहनमन्त्रतः।
मूनेनस्त्रेणाष्टशतं हुत्वाज्यं मूलमन्त्रतः ।। १४३ ।।

समिदादि चतुर्द्रव्यं हुत्वा सम्पातसर्पिषा।

ध्वजे च कलशे सिक्त्वा होमशेषं समाप्य च ।। १४४ ।।

कलशेनाभिषिच्याथ ध्वजमूले यथाविधि।
इष्ट्वा निवेद्य दत्त्वा च बलिं संरक्ष्य तद् ध्वजम् ।। १४५ ।।

कलशै स्नापयेद् देवं क्षालनाद्यैर्विशोधितम्।
पताकापतनेऽप्येवं कर्त्तव्यो निष्कृतिक्रमः ।। १४६ ।।

पुण्याहानन्तरं यष्ट्वा समारोप्य पताकिकान्।
नोद्वासयेत्पताकायां विशेषोऽयं प्रदर्शितः ।। १४७ ।।

अक्षतत्त्वैर्विधिरयं स्मृतो वाहनदण्डयोः।
क्षते वा वायुना भिन्ने भग्ने वाशनिना तथा ।। १४८ ।।

उद्वास्य कलशोदे तत् चेतनां पूर्ववर्त्मना।
अपरध्वजमास्थाप्य तस्मिन् संयोजयेत् चितिम् ।। १४९ ।।

ध्वजमाकृष्टचैतन्यं दहेद्वा प्रक्षिपेज्जले।
बलिप्रदानसमये दुष्टे वा बलिकौतुके ।। १५० ।।

पतितेवाथ सद्यस्तु संप्रोक्ष्यालिप्य तत्स्थलम्।
स्वस्तिके पीठिका न्यस्य पीठपूजापुरस्सरम् ।। १५१ ।।

कौतुकं तत्र संस्थाप्य शुद्धिः क्षालनपूर्विकाः।
कृत्वा च पञ्चसेकान्तं सौम्ये निक्षिप्य पावकम् ।। १५२

हुत्वाष्टशः पञ्चतत्त्वैरन्तरा पूर्णया युतम्।
मूलास्त्राभ्यामष्टशतं हुत्वा सम्पातमर्घ्य च ।। १५३ ।।

बलिशेषं समाप्याथ मूलबिम्बे नियोज्य च।

संशोधयेन्मूलबिम्बाल्लघुचेल्लघुवर्त्मना ।। १५४ ।।

दोषे बलिनि चेत्तावल्लघुना तं विशोध्य च।
कर्मशेषं समाप्याथ निष्कृतिं सम्यगाचरेत् ।। १५५ ।।

बलिप्रदानसमये रक्तपातादिनास्थले।
दुष्टे संशोध्य कर्मार्चां शेषं पूर्ववदाचरेत् ।। १५६ ।।

प्रयाणे कर्मबिम्बे तु भागे संशोध्य तत्स्थलम्।
अन्यं कौतुकमास्थाप्य पीठे सम्पूजितासने ।। १५७ ।।

धारणाभिर्विशोध्यैतत् पीठपूजापुरस्सरम्।
मूलेनावाह्य विन्यस्य सकलीकृत्य गोपयेत् ।। १५८ ।।

भग्नबिम्बं तु संशोध्य पुण्याहजलसेचकैः।
शङ्खोदके समानीय तद्गतां चेतनामथ ।। १५९ ।।

योजयित्वान्यबिम्बेऽथ सम्पूज्य सकलीकृतम्।
पञ्चतत्त्वैर्व्याहृतीभिश्चतुर्ग्रहघृतं पुनः ।। १६० ।।

च्छित्त्वा च्छित्वाष्टशो हुत्वा मूलेनास्त्रेण पूर्ववत्।
अष्टोत्तरशतं हुत्वा सम्पाताज्यं समर्प्य च ।। १६१ ।।

कर्मशेषं समाप्याथ मूलबिम्बे नियोज्य च।
कौतुकस्थां चितिं भूयः सम्यङ्निष्कृतिमाचरेत् ।। १६२ ।।

तीर्थोन्मज्जनकाले तु प्रमादात्कौतुकं यदि।
प्रभ्रष्टं लक्ष्यते नैव तस्मादुन्मज्जनस्थलात् ।। १६३ ।।

उद्वास्य चित्कलामन्यकौतुके तां नियोज्य च।

पूर्ववन्निष्कृतिं कृत्वा स्नानशेषं समाप्य च ।। १६४ ।।

नियोज्य मूलबिम्बेऽथ निष्कृतिं सम्यगाचरेत्।
शिवे क्षुरिकया वस्त्रदाहेष्वस्त्रतो हुनेत् ।। १६५ ।।

चिच्छिखेच्छिक्षिकृदिति क्षुरिका मनुरीरितः।
संस्कृतस्तु निशाचूर्णं दुष्टं स्याद्यदि मार्गतः ।। १६६ ।।

अन्यत्सम्पाद्य संशोध्य पञ्चतत्त्वैस्तथैकशः।
मूलास्त्राभ्यां च हुत्वाज्यं सिक्त्वा तैः कर्म कारयेत् ।। १६७ ।।

सर्वनिष्कृतिमन्त्रैर्वा मनस्वत्या स्रुवाहुतिम्।
योजयेदत्र सर्वत्र संवीक्ष्य गुरुलाघवम् ।। १६८ ।।

दुरिष्टेष्वेवमाद्येषु प्रकृतैर्विकृतैरपि।
विमृश्य निष्कृतिं विद्वाननुरूपां समाचरेत् ।। १६९ ।।

अत्रोक्तेष्वप्यनुक्तेषु निमित्तेषु द्विजाय तु।
दत्त्वा धेनुं हिरण्यं वा सद्यस्तद्विहितं चरेत् ।। १७० ।।

।। इति कलशचन्द्रिकायां सामान्यविधाने
प्रायश्चित्तपटलः समाप्तः ।।

।। प्रायश्चित्तभागः समाप्तम्।।